

महर्षिश्रीबोधायनप्रणीतम्

# ।। गृह्यसूत्रम् ।।

श्री विद्वद्भिः रामचन्द्र शास्त्रि सूरिभिः

कृतया

सञ्जीविनी व्याख्यया विभूषितम्

सपरिशिष्टम्

प्रथम सम्पुटम्

1987



# ॥ श्री गृह्यसूत्रम् ॥

## ॥ श्री महर्षि बोधायनाऽऽचार्यप्रणीतम् ॥

विद्वन्मण्डल्या सम्पादितम्

श्री रामचन्द्रशास्त्रिसूरिविरचितया
"सञ्जीविनी" समाख्यया व्याख्यया
समलङ्कृतम्

पण्डितप्रकाण्ड भालचन्द्रशास्त्रिणां विशिष्टभूमिकासहितम्

## प्रथमभागः

( आदितः प्रश्नचतुष्टयपर्यन्तम् )

श्री देवनीमठ - अनन्त भट्टैः संशोधितम्

समहर्षीणां बोधायनाचार्याणांच आकृतिबोधकः कश्चन ध्यानश्लोकः समुपलब्धः, तच्छ्लोकरीत्या तेषां प्रतिकृतिं प्रसाध्य पुस्तकादौ निवेशितम् ।

अत्रास्माकं तनुमनधनादिनानाविधया रीत्या पुरस्कर्तॄणां सहायकानां च, विशेषतः श्रीमुखं शुभसन्देशंचानुगृहीतॄणां समेषां जगद्गुरुवरेण्यानां पीठाधिपानां च सकार्तज्ञ्यं नमोवाकं भूयो भूयः प्रशास्महे ।

विशिष्टभूमिकामारच्यादत्तवतां धारवाडानन्तश्रीविभूषितशास्त्रिचरणानां च सधन्यवादं वन्दामहे । हेगडे श्रीकृष्णमुद्रणालयकार्यकर्तृभ्यश्चार्पयामहे सप्रमोदं शुभंयुजातम् । मुद्रणे संभावितान् दोषान् पण्डिताः समी कुर्युर्हंसक्षीरन्यायविद इति विभावयामः

अन्ततः पुनः परोक्षमपरोक्षं वा प्रकाशनेऽस्मिन् साहाय्यविधातॄणामुपकारभारं बिबिभृमः ।

M
एम्. वि. हेगडे
न्यायवादी होन्नावर
अध्यक्षः
श्री सुब्रह्मण्यप्राच्यविद्यापीठम्
कवलक्कि.

# श्री भगवान् वेदव्यास महर्षिः



तं वेदशास्त्रपरिनिष्ठितशुद्धबुद्धिं
चर्माम्बरं सुरमुनीन्द्रनुतं कवींद्रम् ।।
कृष्णत्विषं कनकपिङ्गजटाकलापं
व्यासं नमामि शिरसा तिलकं मुनीनाम्

# भगवान् श्री बोधायन महर्षिः




आद्यं सूत्रकृतं कराब्जकलितप्रज्ञानमुद्रं दधत्-
पुस्तं सव्यकरेण सूत्रलिखितं विद्याम्बुराशि मुनिम् ।
न्यग्रोधाग्रकृतासने सुरुचिरे व्याघ्राजिने धिष्ठितं
श्री बोधायनमादरेण सततं वन्दामि नन्दामि च ॥

श्रीमज्जगद्गुरु शङ्कराचार्य श्रीसंस्थानगोकर्ण
श्रीरामचन्द्रापुरमठ.



परमपूज्य श्रीमद्राघवेन्द्रभारतीमहास्वामिनः



॥ श्रीः ॥

प्रसीदतु श्रीरामचन्द्रः

श्रीराम

गत संख्या २६५१.

श्रीमत्परमहंस परिव्राजकाचार्यवर्य पदवाक्यप्रमाण पारावारपारीण यमनियमासन प्राणायाम प्रत्याहार ध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ षड्दर्शनस्थापनाचार्य तपश्चक्रवर्त्यनाद्यविच्छिन्न

श्रीमज्जगद्गुरु शङ्कराचार्य शिष्य

सुरेश्वराचार्य ज्येष्ठ शिष्य विद्यानन्दाचार्य गुरुपरम्पराप्राप्त सकल निगमागमसारहृदय सांख्यत्रयीप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्र-स्वतन्त्रादि-बिरुदाङ्कित विद्यानगर महाराजधानी वैभव सिंहासनाधीश्वर व्याख्यानसिंहासनारूढ श्रीमद्राजाधिराज

श्री गुरु गोकर्णमण्डलाचार्य

श्रीमच्छतशृङ्गपुरवराधीश्वर श्रीमच्छरावतीतीरवास श्रीमद्रामचन्द्र-पुरमठस्थ श्रीमद्रामचन्द्र चन्द्रमौलीश्वरपादपद्माराधक श्रीमद्रामचन्द्र-भारती श्रीगुरुकरकमलसञ्जात

॥ श्रीमद्राघवेन्द्रभारती श्री स्वामिभिः ॥

अस्मदास्थानविदुषो रामचन्द्राख्यशास्त्रिणः ।
पण्डितांश्च सदाचारान् तान्सूरीत्युपनामकान् ॥ १ ॥

नानाशास्त्रार्थगोष्ठीषु भागिनोऽपि बहुश्रुतान् ।
उद्दिश्य प्रेष्यते चैषः सन्देशो हि समाशिषा ॥ २ ॥

बोधायनो महात्मासीच्छ्रौतस्मार्तादिबोधकः ।
नानासूत्रादिनिर्माता मुनीनामग्रणीः सुधीः ॥ ३ ॥

तत्कर्तृकं गृह्यसूत्रं गृह्यसंस्कारबोधकम् ।
तदभून्मुद्रितं चापि बहुसूत्रैरसंयुतम् ॥ ४ ॥

तस्मिन्महार्थके सूत्रे बहुकालात्प्रयत्नतः ।
अदृष्टैर्बहुसूत्रैस्तु भवतापि सुपोषिते ॥ ५ ॥

शुभा सञ्जीविनीव्याख्या रचिता सुलभा तथा ।
बहूपकारिणी जाता गृह्यकर्मविधायिनाम् ॥ ६ ॥

सञ्जीविन्या तयोपेतं श्रावितं नस्तदन्तिके ।
सूचितोऽभूत्तदा तस्मिन् तत्र तत्रास्मदाशयः ॥ ७ ॥

महतोऽप्यस्य सूत्रस्य व्याख्यानसहितस्य च ।
प्रकाशनं भवेच्छीघ्रं वैदिकानां सुखावहम् ॥ ८ ॥

भगवच्चन्द्रमौलिश्रीजानकीशप्रसादतः ।
चिरं सुखं धर्मपरा भवन्तोऽपि नयन्त्विति ॥ ९ ॥

श्रीः

श्रीमन्नारायणस्मृतयः

दि – २५-१०-१९८६

मितिः– क्षयसंवत्सरे आश्विनकृष्ण सप्तम्यां स्थिरवासरे

बसतिः– तीर्थराज पुरविराजिते श्रीमद्रामचन्द्रापुरमठे

॥ श्री शृंगेरी श्रीजगद्गुरुसंस्थानम् ॥



दक्षिणतः

१) ॥ श्री प. प. अभिनवविद्यातीर्थ महास्वामिनः ॥

२) ॥ श्री प. प. श्रीमद्भारतीतीर्थ महास्वामिनः ॥



॥ श्री शृंगेरी श्रीजगद्गुरुसंस्थानम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्यगुरुपरम्पराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकल निगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्राविराजधानीविद्यानगरमहाराजधानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृंगपुरवराधीश्वर तुंगभद्रातीरवासि श्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीचन्द्रशेखरभारतीस्वामिगुरुकरकमलसञ्जात

॥ श्री जगद्गुरु शृङ्गेरी
श्रीमदभिनवविद्यातीर्थस्वामिभिः ॥

अस्मदत्यन्त प्रियशिष्य सूर्युपाह्व श्री रामचन्द्रशास्त्रिविषये
नारायणस्मरणपुरस्सरं विरचिता आशिषस्समुल्लसन्तु ।

इह खलु श्रेयोर्थिनां सर्वेषां श्रुतिस्मृत्युदितधर्मानुष्ठानमेव अतितरामावश्यकमिति सर्वेषां निश्चप्रचम् । ते च धर्माः श्रुतिषु विप्रकीर्णाः मितंपचमतिभिः अवगन्तुं न पार्यन्त इति मत्वा सर्वज्ञकल्पा आपस्तम्ब बोधायनादि महर्षयः सर्वशाखोपसंहारपूर्वकं सूत्राणि व्यरचयन्। तानि च धर्मानुष्ठाने प्रदीपायितानि

विराजन्ते । तत्र बह्वल्पं वा स्वगृह्योक्तं इत्यादि वचनैः स्वस्व परम्परागत सूत्रानुसारेण विधीयमानानि कर्माणि श्रेयःप्रापकाणि भवन्तीति स्पष्टं प्रतिपाद्यते ।

तेषु भगवता बोधायनेन विरचितं गृह्यसूत्रं संजीविन्याख्यया व्याख्यया भवन्तो व्यभूषयन्निति, सव्याख्यो ग्रन्थस्सः सुब्रह्मण्यप्राच्यविद्यापीठेन प्रकाश्यत इति च विदित्वा मोदामहे ।

ग्रन्थोयं बोधायनसूत्रानुयायिनः नितरामुपकरिष्यतीति विश्वसिमः । ग्रन्थस्यास्य सर्वत्र प्रचारं श्रीशारदाचन्द्रमौलीश्वरौ अनुगृह्णीतामित्याशास्महे।

श्रीः

शृंगगिरिः इति नारायणस्मरणम्

अक्षय भाद्रपद कृष्ण तृतीया भानुवासरः

२१ - ९ - १९८६



॥ श्री राजराजेश्वरी प्रसन्ना ॥

॥ श्री स्वर्नवल्ली महासंस्थानम् ॥

## शुभसन्देशः

अस्मदत्यन्तप्रियशिष्येण विदुषा सूर्युपाह्व रामचन्द्रशास्त्रिणा अनेकताडपत्रपुस्तकानां संग्रहेण संशोध्य, स्वकृतव्याख्यया सञ्जीविन्याख्यया विभूष्यैतावन्तमनेहसं तत्र व्याख्यानवैधुर्यं निरस्य, ग्रन्थवरमिदं बोधायनकल्पसूत्रं वैदिकजनोपकाराय मुद्रयित्वा प्राकट्यं नीयते- इत्येतद् भूरि प्रमोदास्पदम् ।

अस्मिन् ग्रन्थरत्ने कर्मकाण्डमधिजिगमिषूणां मुमुक्षूणां च कृते ऽत्यावश्यकमनुष्ठानजातं श्रेयः प्रेयः साधनं वरीवर्ति , अतोऽत्र प्रतिपादितानि नित्यनैमित्तिकादीनि कर्माणि यथावत् अनुष्ठायैषां शास्त्रिवराणां प्रयासं सफलयन्तु, प्रोत्साहयन्तु च तान् सर्वेऽप्यास्तिका वैदिकजनाः स्वयं च सुखिनो भवन्तु इति प्रशास्महे ।

अस्मदाराध्यदेवता श्री राजराजेश्वरीप्रसादरूपाणि पंचसहस्र रूप्यकाणि प्रदाय, एतान् शास्त्रिणो दीर्घायुरारोग्यभाग्येन संयोज्य परिपालयतु श्रीभगवती ललिताम्बेति चाशास्महे ।

श्रीललिताम्बाचरणदासः

**सर्वज्ञेन्द्रसरस्वतीस्वामी**

श्री स्वर्नवल्ली मठ

अंचे : मठदेवळ

तालूकु : शिरसी ( उ. क. )

क्षयाभिधाने संवत्सरे मार्गशीर्ष

शुक्ल ६ स्थिरवासरे

## विरलतरः स्पृहणीयश्च ग्रंथः

वैदिकधर्मस्य, वेदोक्त धर्मकर्मानुष्ठानस्य च नाम्नोऽपि सुतरां अभावदशायां सत्वहीनभौतिककार्यक्रमाणां एव तांडवनर्तनसमये अस्मिन् घोरकलिकाले, " बोधायनगृह्यसूत्रसंजीविनी " विवरण ग्रंथ: आवश्यक: विरलतरः स्पृहणीयश्च इत्यत्र न संशयः ।

महिमातिशायिनः बोधायनाचार्याः गृह्यकर्माणां सम्यगाचरणाय वेदान् आधारयित्वा एव " बोधायनगृह्यसूत्राणि " व्यरचयन् । स्पष्टार्थतायै तेषां विवरणं अवश्यकमिति अभिज्ञाय विद्वान् रामचन्द्रशास्त्री सूरि महोदयाः " संजीविनी " नाम्ना " वत्तिं " विरच्य तत् प्रकटने बध्दादराः वर्तन्ते ।

महाविभूतिपुरुषैः केक्कारुशिवभट्टमहोदयैः शतवर्षेभ्यः प्रागेव विद्याप्रसाराय " विश्वनाथधर्मविद्यापरिषत् " केक्कारु, इति संस्था स्थापिता। सा अद्यापि वेद- संस्कृत पाठशालां प्रचालयंतीं धार्मिक-पुस्तकपंचांगप्रकटनादिकं कुर्वन्ती सती आस्तिकानां धर्मानुष्ठाने महोपकारिका विराजते ।

प्रकृत संस्थाथाः संचालकेषु अन्यतमानां 'महोपदेशक'-विद्वान्-शंभु भट्टानां शिष्योत्तमैः, विद्वान् रामचन्द्रशास्त्री-सूरिभिः यत् अत्युपयुक्त प्रकृतग्रंथप्रकटनं क्रियते तत् सुतरां प्रमोदावहं-अस्मद्धर्मविद्या परिषदः। अन्यच्च-एतत् ग्रंथ प्रकटनाय महाजनाः स्वतः एव उद्युक्ताः संतः कार्यं निर्वहन्ति ; अनेनापि प्रकृतविश्वनाथधर्मविद्या-परिषदः उद्देशोऽपि स्वयं सिद्धो जातः ।

सूरि रामचन्द्रशास्त्रिणः अस्मदीयधर्मविद्यापरिषदा "विद्यालंकार" प्रशस्तिप्रदानेन सन्मानिताः । एते विंशतिवर्षेभ्यः अविश्रान्त प्रयत्नेन प्रकृतमहाग्रंथनिर्माणं कुर्वन्तः " विद्यायाः एव अलंकारप्रायाः "

समुपजाताः एवमेव शास्त्रिवर्यैः अन्येऽपि नैके धार्मिकग्रंथाः प्रकटिता भवन्तु, आस्तिकमहाजनाः एतादृशधार्मिककार्यं प्रोत्साहयंतु, धार्मिकता जगति सर्वत्र संवर्धतां इति आशासे ।

सज्जनविधेयः

केक्कारु
प्रभवसं । युगादिः
( ३०-३-१९८७ )

एस्. शंभु भट्टः M. A., B. Ed.
कार्यदर्शी,
विश्वनाथधर्मविद्यापरिषत् केक्कारु

---



श्री विनायकदेव इडगुंजि

अयि भोः आचान्तशास्त्रोदधयः शास्त्रिवर्याः भवत्कृतबोधायन गृह्यसूत्रव्याख्यानं संजीविन्याख्यं सर्वांगहृदयंगमं संवीक्ष्य नितांतं मोमुद्यते मे अन्तरंगम् ।

आचारविचारयोरपि बोधायनमतमेव अनुसरतां भवतां इयं संजीविनी सर्वविधसंस्कारादिषु कर्मसु शांतिकपौष्टिकेषु च सर्वानपि समुपकुर्यात् समुद्धरेत् चश्रद्धया तदुक्तकर्मणां अनुष्ठानरतान् बौधायनान् अन्यांश्च ॥ सांप्रतं सर्वेऽपि जनाः सर्वविधाचारेषु वैयर्थ्यमेवाशंकंते कर्माणि वैदिकानि किमर्थानि इति वैज्ञानिकप्रयोजनान्येव अन्विष्यन्ति च आधुनिकाः । तादृशप्रयोजनान्वेषणपराणां शंका अपि निःशंकमपाकरोति संजीविनी व्याख्या इत्यत्र नास्ति शंका कलंकपंकलेशोऽपि ॥

एवमेव ग्रन्थरत्नानि भवत्सकाशात् आविर्भवन्तु भवतः दीर्घमायुरारोग्यं अभिवर्धयन्तु इति श्रीसिद्धिविनायकं प्रार्थयामि ।

इगुंडजि ( उ.क. )
२३-३-१९८७

धर्मदर्शी
जि. एन्. सभाहितः

॥ श्रीमन्महाबलेश्वरः प्रसन्नः ॥

चिंतामणिः प्रणमतां निशामणिशिरोमणिः ।
कपाली लोकपाली वः पातु नित्यं महाबलः ॥

स्वस्ति ॥ श्रीमद्भ्यो विद्वत्प्रवरेभ्यो रामचन्द्रशास्त्रीसूरिवर्येभ्यः श्रीमहाबलेश्वरदेव संस्थानतः शुभलेखनम् ।

श्रीसंस्थानसविधे श्रीशानुग्रहकाम्यमानैः यन्निवेदितं भवद्भिः स्वविरचित सञ्जीविन्याख्य व्याख्यासमलंकृतस्य श्रीबौधायनगृह्यसूत्रस्य मुद्रापणे संकल्पनं, विदित्वा तन्महान्मोदः समजनि ।

कर्ममार्गस्यैव लुप्यमानेऽस्मिन्दुष्करसंदर्भे प्राच्यग्रंथनिचयपरिशीलनाभ्यसनादिभिर्महता परिश्रमेण संपादितेयं भवतां कृतिः कर्माभिमानिनां निष्ठया कर्माचरणप्रवृत्तौ, कर्मकाण्डजिज्ञासायां सर्वथा साह्यकारी भवेदेव ।

स्वशाखायाः स्वसूत्रस्य च विरुद्धकर्माचरणं सुतरां शाखारण्डत्व, अपाङ्क्तेयत्वस्यापादकं भवतीत्यतः " बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितं । तस्य तावति शास्त्रेऽर्थे कृते सर्वः कृतो भवेत् " ॥ इति सूक्त्या स्वसूत्रानुसारी कर्मविधि प्रयोक्तॄणां, साह्यकारितयेयं कृतिः, कर्मनिष्ठानां श्रेयोभाजनकरी, तथा सरल सुललितलक्षणा चेयं व्याख्या जिज्ञासुजनानां कल्पसूत्रार्थपरिज्ञापने सूपयुक्ता, विदुषामपि संदर्भेषु प्रयोजनकारितया संग्राह्यश्च भवेदिति, तथा च सर्वेऽप्यास्तिकवैदिक विद्याभिमानिजनाः एषां सूत्रव्याख्यातॄणां कृतेरस्याः मुद्रणप्रचारणादिषु सर्वथा प्रोत्साहनेन, श्रीशास्त्रिणां ईदृशान्यबहुकृतिकरणोत्तेजकाश्च भवेयुरित्यपि श्री क्षेत्रनाथः शिवलिंगसार्वभौमः भगवान्महाबलेश्वरः परिपूर्णतयाऽनुग्रहं कुर्यादिति संप्रार्थ्य शुभं समाशास्महे ।

इति भवदीयो विद्वद्विधेयः
विघ्नेश्वर दामोदर दीक्षितः
श्रीमहाबलेश्वरदेव संस्थानसमितिपरं

नं : ३३७/८६-८७
दि: १८-१२-१९८६



॥ श्रीगुरुः शरणम् ॥

॥ श्री काशीविश्वनाथो विजयताम् ॥

पण्डितवरेभ्यः

## श्री रामचन्द्रशास्त्रिसूरि

एतेभ्यः एष सन्देशः प्रेष्यते ।

श्री सूरिशास्त्रिभिर्व्याख्यातं सुविख्यातमिदं बौधायन गृह्यसूत्रं स्मार्तकर्मानुष्ठाननिष्ठाजुष्टान् शिष्टवरिष्ठान् तुष्टान् विधत्त इति काऽप्येषा मनीषा सन्तोषविशेषं सन्तन्तनीति नः स्वान्ते । वैदिकाचाराचरणचारुचारित्र्योऽयं विज्ञरामचन्द्रश्चान्द्रमसेनेव स्वज्योतिषाऽशेषमपि विश्वं प्रकाशयन् स्वयमार्षं पथमनुतिष्ठन् अन्यांश्च तत्र प्रतितिष्ठापयिषतीत्येषविषयः केषाञ्चिद्विदुषां नैसर्गिकीमपि परवचः श्लाघासु वाचंयमतां भञ्जयति । सूरिवरोऽयं सूरिप्रवरः बौधायनगृह्यसूत्राभिधमिदं ग्रन्थरत्नं विशिष्टैरपि कैश्चित्सूत्रविशेषैरविशेषितमालोक्य तदाधृतां च काञ्चन सानातनीं परम्परां लोपपरामालोच्य किंचिद्दूयमानमानसो मानसे कामपि भागीरथीं प्रतिज्ञामाधाय अविश्रामेण श्रमेण निमीलितप्रायमपि सारस्वतं ज्योतिरिदं " संजीविन्या " समजीवयत् – इति वार्ता श्रवणसमकालमेव

समुत्थितः कोऽपि महानन्दसन्दोहोऽस्मदीयस्वान्ते यथोचित-मवकाशमनावाप्य निसर्गतो मुखमार्गेण विनिर्गत्य च परितो व्यवाकिरत -

स्वान्ते सन्ततमेव तोषमसकृत् सन्तन्तनीत्युन्नतं,
ग्रन्थो ग्रन्थिविभेदनेऽतिनिपुणः सारस्तु सारस्वतः ।
सोऽसौ साधुसमुल्लसद् बुधवरैराराध्यतां सादरं,
कल्याणाय च कल्पतां मतिमतामित्येवमाशास्महे ॥

श्री जयराम शास्त्रीजी शुक्ल
राधाकिशोरी राजकीय कन्या
इण्टर कालेज के सामने
रामनगर वाराणसी
२२१००८

भवदीयः
पण्डितवर श्री जयराम शास्त्री शुक्लः
वाराणसेय
श्री काशीराजविद्यामन्दिरप्रधानाचार्यः

ಶ್ರೀ ಎಡನೀರು ಮಠ,
ಪೋಸ್ಟು ಎಡನೀರು
ಕಾಸರಗೋಡು



SRI EDNEER MUTT
EDNEER
KASARAGOD

ತಾ|| 21—7—1987

## शुभसन्देशः

अनेकपुस्तकानां सङ्ग्रहेण संशोध्य विद्वद्वरैः सूरि रामचन्द्र शास्त्रिभिः कृतसञ्जीविनी व्याख्या समलङ्कृतं श्री बौधायन गृह्यसूत्रं मुद्रणाय-सिद्धमिति ज्ञात्वा महान्हर्षः सञ्जातः ॥

अस्मिन् वर्तमानकरालकलिकालेऽयं ग्रन्थः सर्वेषां कर्मकाण्डकर्तृणां सञ्जीविनी भविष्यति, प्रभूतं उपकारं च करोति

अस्मिन्विषये सर्वे वैदिकजनाः श्री शास्त्रिमहोदयैरुपकृतवन्तः । अस्मिन्नवसरेऽस्मदाराध्यदेवता

श्री दक्षिणामूर्ति - श्री गोपाल कृष्णयोः प्रसादेन सर्वत्र प्रचारो भवतु-तथा - सूरिमहोदयाः दीर्घायुष्मन्तो भूयासुरित्याशास्महे –

एडनीरुमठः

Sd·—
His Holiness Shree Keshavananda
Bharathi Sripadangalavaru·

गोकर्णमठसंस्थानम्

॥ श्री वीरविठ्ठलः प्रसन्नः ॥

श्री वि ठ्ठ ल

श्रीमत्परमहंस परिव्राजकाचार्यवर्य पदवाक्य प्रमाण
पारावारपारीण यमनियमाद्यष्टाङ्ग योगसंपन्न
श्रीमद्वैष्णव सिद्धान्त प्रतिष्ठापनाचार्यवर्य
श्रीमत्सकलसुरनिकरमुकुटमणिरञ्जितदिव्य
श्रीरामदेव वीरविठ्ठलचरणकमलसंततानुराधक
श्रीसंस्थान–गोकर्ण–पर्तगाळी–जीवोत्तम–मठाधीश
श्रीमदिन्दिराकान्ततीर्थश्रीपादवडेरकरकमलसंजात
श्रीमत्कमलानाथतीर्थ श्रीपाद वडेरवर कुमारक
श्रीमद्द्वारकानाथतीर्थ श्रीपादवडेर (स्वामिभिः)
कुमारक श्रीमद्विद्याधिराज श्रीपादवडेरस्वामिभिः

श्री रामचन्द्र शास्त्री सूरिभ्यो नैकाशिषो दत्वा शुभेच्छां प्रकटीकुर्मः ।

अत्र भवतां पत्रं सुसमये प्राप्तम् । संवीक्ष्य प्रमुदितं नश्चेतः । विज्ञानयुगेऽस्मिन्प्राचीन ग्रन्थानां संशोधनपूर्वकं पुनर्मुद्रणमावश्यकमेव । नास्मिन्विषये कस्यचिदपि वैमत्यम् । भवतामेतन्महत्कार्यं निर्विघ्नं भवत्वित्याशास्महे । ( तदर्थं द्विशतं रूप्यकाणि संप्रेषितानि ) । शुभं भवत्विति शम् ॥

श्री विठ्ठल

## श्री पण्डितप्रकाण्ड भालचन्द्रशास्त्रिभिः
## विरचिता विशिष्टभूमिका

श्री शङ्करः शरणम् ।। नमः परमऋषिभ्यो वंशर्षिभ्यः ।।

समुपजीवमद्य निरवद्य एषः प्रथिमानं नीयते ग्रन्थवरो विद्वद्वरैः ब्रह्मश्रिया विराजमानैः सूर्यभिजनैः श्रीरामचन्द्रशास्त्रिवर्यैः, यत् बौधायनगृह्यसूत्रवृत्तिः सञ्जीविनीनाम्नी प्राज्ञप्रमोदावहास्वोपज्ञमिति ।।

नूनं धर्मग्लानिग्लास्नुताश्रितेऽपि कालेऽस्मिन्नार्यावर्ते वैदिकाचरणप्रश्रयवन्तः क्वापि कोणे वैरल्येनापि साकल्येनावगतधर्ममर्माणोऽपि पारम्परीमनुतिष्ठासवस्तिष्ठन्तीति विदुरेव विद्वांसः । यदा आम्नायत्वे ऐहिकामुत्रिकश्रेयः साधनपटीयांसं वेदोदितं धर्मं जानाना अपि तदनुष्ठितौ कष्टायमानमानसस्तदध्वनि केवलं श्रद्दधते । परं चिकीर्षाजुषोऽपि कात्स्न्र्येनाम्नायप्रतिपाद्यं प्रयोगप्राशुभावं अनवगत्य विधित्सन्तः कर्माणि मनःप्रणिधानं न लभन्ते ।

उत्सार्यन्तां केचन कुत्सितचेतनाः धर्मप्रामाण्ये सन्देहाः सन्दिहाना वा विवदमाना वा स्वप्रेक्षानुकूलित विधिवाक्यशिक्षा वा लोकायतिकमतायतमतयो वा लोकाः । परं वैदिककर्माण्यनुष्ठातुमनसः केचिदपि सुकृतिनः सदाचरणेनात्मनः कार्तार्थ्यमभीप्सन्तः सन्त्येव जनास्तथाविधाः अस्मिन्नपि युगेऽस्मद्भारतप्रदेशेषु, येषामेव नित्य नैमित्तिककर्ममहिम्ना महामहिमा भगवान् भूतभावनः परमेश्वरस्तत्तत्समये वातातपवर्षसस्यप्रसवादिसमृद्धिमद्धा निदध्यादिति विश्वसिमः ।

ते खलु परमेशितुः परमप्रेयांसो मीमांसन्त एव सर्वज्ञकल्पं कल्पपादपायमानं त्रयीमयं वाङ्मयं वाचामभूमिमलौकिकमर्थमधिगमयदसंसारिपुरुषनिश्वसितभूतम् । एतद्विधानेन पुरुषविशेषानधिकृत्य भगवतीश्रुतिः प्रावर्तिष्ट नैकविध - नित्यनैमित्तिक - काम्य प्रायश्चित्त-निषिद्धाख्य पञ्चविधाभिः कर्मणां स्वरूपं अवबोधयन्ती ।

वेदानामपौरुषेयत्वे चिरन्तनैर्निर्णीतफलसाधनतांशे च ये स्युः श्रद्धावन्तस्तान् विबुबोधयिषत्येव भगवती प्राची मीमांसा, इति न तत्राधिकं व्यापार्येत केनाप्यर्वाची लेखनी ।

येपुनरत्र वैशिष्टचं श्रौतस्मार्तविषये नाद्रियन्ते नास्तिवयोपहतमनीषा आत्मानं मनीषिणं मन्यमानाः । तेषां कृते नैष सूरिशास्त्रिणां यत्नः प्रबोधने साफल्यमश्नुते ।

" मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ,,

इति सूक्तिमनुसन्धानैर्वाऽस्माभिर्विमनाय्यते ॥

सम्प्रति चित्रीयते संशृण्वानानां नश्चित्तं यत्तद्वैदेशिका अपि तस्य महिमानमाम्नायराशेः प्रशंसन्त्यधिक्षिपन्ति च क्षोदिष्ठप्रेक्षान् भारतीयान् वैदिकविज्ञानविधुरानिति । तेषामपि मनीषायां श्रुतिमहत्तामापादयितुं इदमेवनिदानं प्रधानं भाति, यत् वेदोत्पत्तेः तदर्थजातसन्ततेश्च नाद्यापि समयकर्त्राद्युपलब्धिः सविशेषमेव मार्गायमाणैस्तैर्लब्धा, लब्धवर्णं मन्यैरन्यैरपि नावीन्येन संगुशुत्सुभिर्भारतीयैः । आर्षं हि वैदिकं ज्ञानं प्रतीच्या दृष्टचा, परेण च तपसा खल्वलम्भि महामहिमशालिभिर्महर्षिभिर्भारताभिजनैरेव । न खलु महर्षित्वं मनुष्यत्वेन दिविषत्त्वेन वा शक्येत सादृश्यमापादयितुम् । यतः सर्ववित्तया, लोकोत्तरमतिमत्तया च सर्वानप्यतिशेरते महानुभावास्तनूकृततपसस्ते मुनयो, यद्देवा अपि बिभ्यति तेभ्य इति पुनरितिहासविदुद्भैरुद्धुष्यत एव । एषामेव महर्षिणां त्रैवर्णिकेषु सान्तानिकी परम्परा किलाद्यापि विद्योततेऽस्मिन् आर्यावर्ते तत्तद्गोत्रजनुष्मत्तया समेषु भारतीयेषु । यथा च निजान्ववायभाजं दृष्टेनादृष्टेन वा रूपेण तत्तत्पूर्वजास्तदुत्तरजान् पुत्रपौत्रप्रणप्त्रादीन् श्रेयसा संयोजयितुं ईहन्ते, तथैव तादृशीमेव दयावशंवदतां बिभ्रति धर्मप्राणभूता भगवता प्रेरिताश्च ते जीवन्मुक्ताः पारिकांक्षिविचक्षणाः परोपकृतिपरायणाश्च तपस्वितापारदृश्वानः । अतो युगव्यवस्थया तथा पुनः ऐहिकामुष्मिककफलावाप्तिव्यवस्थितया च युगधर्मान् त्रातुं

भगवतीं श्रुतिसरस्वतीमेवावलम्ब्य प्रवृत्तिनिवृत्तिविषयभूतं धर्मद्वयं व्यबीभजन् पूर्वोत्तरकाण्डभेदेन त एव मुनिप्रकाण्डाः ।

यत्र च पराक्रामिषत जैमिनिव्यासप्रभृतयो महर्षयः सूत्र–तद्विवृति निर्मितिद्वारा सुपथि जनान् नियोजयितुम् । तत्र च कर्मकाण्डीयसूत्र - विवरणादिव्यूहानां गाम्भीर्येण तदर्थावगाहनेऽप्रभविष्णूनां कृते शबरस्वामि - कुमारिलभट्ट – प्राभाकर - पार्थसारथिमिश्रप्रभृतयः श्रौतकर्मपारावारपारीणाः भाष्य - वार्तिक - वृत्ति विवरणादिभिः सुलभावबोधेन मन्दप्रज्ञान् प्रावर्तयन् । सैव प्राची मीमांसेति प्रथते ।

यद्यपि "मन्त्रब्राह्मणयोर्वेदनामधेयं,, (बौ० सू०) इति अभियुक्तोक्त्या वेदलक्षणमुपालक्षि । परमौपनिषदे वेदभागे खल्वेतादृशं लक्षणं कियद्व्याप्नोति लक्ष्यमिदमिति विचारणीयं भवेत् । अतः खल्वलौकिकश्रेयःसाधनत्वेन धर्मस्य तत्प्रतिपादकत्वेन वेदस्य लक्षणं व्याहार्षुः तत्रभवन्तो भाट्टचिन्तामणिकृतो गागाभट्टाख्याः । इदमेव लक्षणं सर्वतन्त्रस्वतन्त्रप्रेक्षाः प्रतीक्ष्यचरणाः श्री विद्यारण्य भगवत्पादाः वेदभाष्योपक्रमे स्वीचक्रुः । सामान्यतो धर्मस्य वेदप्रतिपाद्यत्वे लक्षणे स्वाप्नानां शुभाशुभकर्मणां निर्दिश्यमानानि फलानि धर्मजन्यतां न प्राप्नुयुः । तानि पुनः स्वाप्नकर्माणि श्रेयः साधनानीति चित्तशुद्धिं जनयन्ति, भगवद्भक्ति-विरक्ति–मुखान् मनः प्रसादादि तपोङ्गतामन्विङ्गन्ति च । यथैवानुगामितारं राजानमङ्गरक्षकाः परिरक्षन्ति, तथैवेनं राजाधिराजप्रवर्तकं भगवन्तं वेदाधिराजं तत्तदङ्गेषु षडङ्गानि शिक्षाकल्पादिभेदेनेति पूर्वजैरङ्गीकृतानि । एतेषां वैध्यर्ये विशेषतो विचारविषयतामापादितेऽपि वेदार्थे न खल्वियत्तामितिकर्तव्यतां च कर्मणां निपुणमतिरपि प्रणिधापयितुं प्रभवेत् । तत्र स्वरपाठाद्यानुपूर्वमाम्नायस्य व्यवस्थापयन्ति ते शिक्षाग्रन्थाः । ये खलु नारदव्यासपाणिन्यादि प्रणीतत्वेन वैविध्यमासादयन्ति । व्याकरणछन्दसोरूहविज्ञानवैदिक

वाक्यपरिमाणद्वारा, ज्यौतिषस्य प्रयोगोपयोगि - तिथ्यादिकाल-ज्ञान द्वारा, निरुक्तस्य च स्वतएव वेदार्थोपबृंहणं मन्वते । पञ्चानामप्यमीषां अङ्गानां बहिष्परित्राणस्येव वेद- तदर्थयोरुपकारित्व-मेतया प्रणालिकया प्रदर्श्यते ॥

कल्पसूत्राणां पुनः प्राबल्यमुभयतोऽपि जागर्तीति प्रत्यपादि भाट्टचिन्तामण्यादिग्रन्थेषु यथा "शाखान्तरसन्दिग्धविध्युपसंहार द्वारा, न्यायलब्धार्थ- तात्पर्यनिर्णयद्वारा चे,, ति प्रतिपादयत्सु । अत एव ब्राह्मणवाक्यापेक्षया प्रयोगसमीकरण-परमप्रयोजकतया चान्तरङ्गिकं उपकारकत्वमेतेषां प्रथते । अतो ब्राह्मणवाक्यैरेव प्रयोग परिज्ञानात् कृतं सूत्रविचारेण, तत्प्रणयन - परिश्रमेण चेत्याद्यं चोद्यं अवद्यमेवेति हृद्यमतयो विभावयन्तु ॥

विधायकवाक्यप्रधानो वेदभागो ब्राह्मणम् । ब्राह्मणवाक्यानामर्थवादजटिलत्वेन विलम्ब्य प्रयोगोपस्थापकत्वेन कर्मणामानुपूर्वीविज्ञानं सम्बोभवीति । कल्पसूत्राणि तु शाखान्तरीयगुणोप-संहारपूर्वकं तन्न्यायेन ( पू. मी. २-४-८ ) पौर्वापर्यविशिष्टप्रयोग बोधनायैव प्रवृत्तानीति झटित्यानुपूर्वीविशेषविशिष्टं प्रयोगविधिमुपस्थापयन्ति । कल्पानां सूत्राणां च सूक्ष्मेक्षिकया वैलक्षण्यमिदं परिगण्यते, यत् क्रतुप्रयोगं पाठमात्रेण स्पष्टं कल्पयन्ति ये बौधायनीयादयो ग्रन्थाः ते कल्पाः । "ऋचां पादग्रहणे (आ. श्रौ. सू. अ. १ ख. १ सू. ८ ) इत्यादि स्वकृतसंज्ञापरिभाषादिभिः प्रयोगसूचकानि सूत्राणि भवन्ति । यथा आश्वलायनीयादीनि, तानीमानि कल्पसूत्राणि भूयांसि श्रूयन्ते । तत्र साम्प्रतं प्रायेणोपलभ्यमानानि आश्वलायनापस्तम्ब बौधायन सत्याषाढ भारद्वाज कात्यायन - वैखानस - वाधूल - लाट्यायन - द्राह्यायण - सांख्यायन - मानव - काठक - कौशिकादि सूत्राणीति विचक्षणा वर्णयन्ति ब्राह्मणकल्पसूत्रयोः विवेकम् ।

ऋक्सामयजुराख्येषु वेदेषु कर्मस्वरूपपरिबोधकत्वं यजुर्वेद मात्रे प्रत्यवसीयत इति त्रयीमयेषु क्रत्वादिकर्मसु आध्वर्यवप्रति

पादनेन तस्य प्राधान्यं निःशङ्कमुट्टङ्कयते चतुर्वेदभाष्यभूमिकासु सर्वज्ञ श्रीसायणमाधवाचार्यैः यथा "भित्तिस्थानीयो यजुर्वेदः चित्रस्थानीयावितरौ ,, इति । तत्र शुक्लकृष्णभेदेन भिन्ने यजुषी द्वे अप्याधानादिकर्मस्वरूपमवबोधयतः । तेन चैतदकथितेऽपि विज्ञायते यत् सामर्ग्वेदयोः स्तोत्रशस्त्रमात्रभागः पर्यवस्यति कर्मोपष्टम्भकत्वेनेति । अतो बह्वृचाः सामगाश्च स्वं बाह्वृच्यं सामशाखीयत्वं च प्रचिख्यापयिषवो दौर्ब्राह्मण्यपरिहृत्यै यद्याश्रयेरन् सोमपीथित्वं वा प्रकृतिविकृत्युपोद्बलित श्रौतानुष्ठानं वा तदवश्यं याजुषीं कांचन शाखां तदनुसृतां सूत्रसरणिमवलम्ब्यैव प्रवर्तेरन् । तत्रतु स्वपितृपैतामहिकपारम्परीकां वा निजमातुलाश्रितां शाखाभूमिकां वा समाश्रित्य कर्माण्यनुतिष्ठेयुः । यदैष प्रसङ्गः परिपतेत्, तदा नान्तरीयकतया द्वाभ्यामपि बह्वृच – सामभ्यां बौधायनीयमेव मतं ग्राह्यतामयते । अत्रेच "तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ,, इति स्मार्तं शासनमेव प्रमाणकोटिमवगाहते । अत एव तत्र तत्र प्रान्तेषु द्राविडान्ध्रकर्नाटकमहाराष्ट्रोत्तरापथेषु दरीदृश्यन्ते तत्सूत्र परिग्राहिणः सोमपीथिनः सम्प्रत्यपि ॥

स्थाने खल्वेतदास्थीयते यावज्जीवादिवाक्यैः नित्यत्वेन पर्यग्राहि श्रौतमेव कर्म त्रैवर्णिकानामनुष्ठेयतयेति ।। एतादृशः कर्मविशेषाः कामनास्पृशोऽपि नित्यकाम्यत्वविभागे परिगण्यन्ते, यथाच नित्यनैमित्तिकत्वेनोपरागस्नानादीनि । कामनाश्रुतिमात्रेण केचित् सन्दिहीरन् केवलं काम्यमेवेदं वैदिकं कर्मजालं प्रतिबध्नाति हि निःश्रेयसमिति । परमभिसन्धिमात्रेण प्रतिष्टम्भो वाऽप्रतिबन्धो वा सर्वत्र श्रौतस्मार्तकलाप इति कर्तुरेव तत्र स्वेच्छया प्रयोजकता काम्यत्वादौ । न खलु जात्वपि जाघटीति विधिवाक्यानां तादृशानां केवल काम्यता । एतदेव प्राहुः परममाहेश्वराः सर्ववेदसः श्रीनीलकण्ठदीक्षितवर्याः

"अर्चामीति धिया यदेवकुसुमं मुक्त्वा जनो मुच्यते
विध्यामीति धिया तदेव विकिरन् भस्मीकृतो मन्मथः ॥

इत्याभ्यन्तरयोगमात्रसुलभो बाह्यानपेक्षश्च यः
स स्वामी मम दैवतं तदितरो नाम्नाऽपि नाम्नायते ॥ „

इत्यादिना शिवोत्कर्षमञ्जर्यामाञ्जस्येन । एतदेव विव्रियते

" अनाश्रितः कर्मफलं
कार्यं कर्म करोति यः ।
स सन्यासी च योगी च „

इत्याद्युपदेशकृता भगवता ।

केवल वैदिकमन्त्रैरेव प्रवर्त्यमानानि कर्माणि श्रौतानीत्याख्यायन्ते । यद्यप्यङ्गत्वमौदुम्बरीवेष्टनक्षुताचमनाष्टकादिषु स्मार्तेनापि प्रमाणेन प्रत्यभिज्ञायते सावनिके श्रौतेऽपि कर्मणि, तथापि तत्क्रियासु मन्त्राणामेव विनियोगः परिस्फुरतीति विदुरेव वेदविदः ॥ अत एव श्रीमच्छङ्करभगवत्पादा अपि ब्रह्ममीमांसायां सूत्रभाष्यादिषु कर्मपद विवरणप्रसङ्गे "कर्माण्यग्निहोत्रादीनि „ इत्येवोट्टङ्कयन्ति । "विहितत्वाच्च आश्रमकर्मापि „ (ब्र० सू० ३–४–३२) " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् (ब्र० सू० ३–४–२६) इत्याद्यधिकरणेषु सविशेषम् । समुदाहरन्ति च तथैव मीमांसान्यायानेव श्रौतेषु अर्थेषु तत्र तत्र । यत्सत्यं प्रतिपदगहन - प्रत्यवायाकुलाढ्यं श्रौतं कर्म सुदुष्करमेव प्राकृतस्य पुंसः इति परिहीणश्रौतकर्मण्यस्मिन् कबलीकृत - वैदिककर्मकलापे काले इति समाकल्यते ।

अतिक्रामत्सु करालकालेयवत्सरेषु " ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् „ इत्याद्युदयनाचार्योदितेन वर्त्मना परमं ह्रसिमानमुपेयुषि मानुषकायमनीषाबले श्रौतानि कर्माणि विधात्रुमप्रभूष्णवः सुकरतया स्मार्तं पन्थानमाश्रितवन्त इति परिदृश्यते श्रूयते च परितः । सम्प्रति सन्ध्याप्यग्रजन्मनां क्वापि कोणे विलीनेव तिष्ठति दूरे पुनः स्मार्तक्रियाणामपि कथा । तथाप्याशेरते शते पञ्चाशदपि लोका वेदोपाकरण – मन्त्रपुरश्चरण – तत्तद्धोमकरणादीन्यनुतिष्ठान्तः स्वयं ब्राह्मण द्वारा वापीति मना

गिव समाधातव्यं भवेत्। तान्यपि यदा लुप्येरन् तदा वर्णाश्रमैक वैशिष्टयभाग्भारतदेशः परं प्रत्यन्ततामेव पुनरन्ततः कृतान्तपरतन्त्रतां यायादित्येद्ःखाकुरुते धार्मिकाणामन्तरङ्गम्। परं भगवान् भूतभावनो धर्मात्मानमेव वृषं वाहयन् सर्वज्ञः सर्वशक्तिः परमात्मा वैदिकधर्मस्य सनातनतां रिरक्षयिषुः स्वयं स्वांशेन वा भुवमवतीर्य प्रतितिष्ठापयिषत्येव प्रेयः श्रेयः प्रतिपादपटिष्ठं धर्ममिति दृढं विश्वसिम.। कथं वा मिथ्यात्वं प्राप्नुयातां "धर्मे सर्वं प्रतिष्ठितं„ "धर्मसंस्थापनार्थाय सम्भवामि„ इति च श्रुतिस्मृती।

येच पूर्वोक्ताः श्रौतस्मार्तादि कल्पसूत्रप्रणयनपटीयांस आश्वलायनापस्तम्बबोधायनादयः परमाचार्यास्तेऽपि साक्षात्कृतधर्माणः सर्वज्ञकल्पाः - इत्यतिरोहितमेव तद्विहितग्रन्थपर्यालोचनपरायत्तचित्तानां समस्तानामास्तिकानाम्। तत्रापि कर्मस्वरूप बोधक — याजुषविधीननुसृत्य प्रणीतेषु बोधायनापस्तम्ब, सत्याषाढ, पारस्कराद्याचार्याणां कल्पसूत्रप्रबन्धेषु सामान्यतया समानैव परिदृश्यते श्रौती कर्मानुपूर्वी। क्वचिच्च तत्तच्छाखोक्तानङ्ग विशेषानपि निर्दिशन्तो विशिषन्ति।

शुक्लयजुर्वेदे खल्वाध्वर्यवहौत्रादिभागो मन्त्रब्राह्मणविभागेन सुस्थितिमारूढस्तच्छाखीयसूत्रेषु श्लिष्टतरं व्यवास्थापि। परं कृष्ण यजुषि —

"आध्वर्यवं क्वचिद्धौत्रं क्वचिदित्यव्यवस्थता॥
बुद्धिमालिन्यहेतुत्वाद्यजुः कृष्णमितीर्यते"॥

इति भगवत्सायणाचार्यैः काण्वभाष्यभूमिकायां उक्त प्रकारेण तत्र तत्र विपर्यस्तामन्तरितां सन्दिग्धां मन्त्रब्राह्मण-पाठविभक्ति सर्वान्तामानुपूर्वीमाकलय्य यज्ञियं श्रौतं कर्म व्यवस्थापयांबभूवुर्बोधायनाद्याचार्याः।

परं पूर्वोदितप्रकारेण प्रतिपदं प्रयोगविषयीभूता गर्भाधानादिसंस्काराः सन्ध्याद्याचाराः काम्यनैमित्तिक - प्रायश्चित्तादिकर्म-विशेषाः गृह्यादिसूत्रेषु तैरेवाचार्यैर्निर्दिश्यन्ते। तत्राश्वलायनापस्त-

म्बादि गृह्यसूत्रेषु क्वचित्समासतः क्वचिन्निगूढतया क्वचित्साम्प्रदायिकत्वेन निर्दिश्यमानाः क्वचिच्चासादिततूष्णींभावभाविताः पुनस्तदीयाचरणेषु प्रेयः प्रेप्सुं पुरुषं न तथा प्रवर्तयेयुः, यथा बोधायनाचार्याः स्पष्टतया श्लिष्टतया प्रयोगरचनया विस्तरेणादर्शप्रायं परिदर्शयन्ति स्वीयेषु गृह्यसूत्रेषु । आपस्तम्ब - सत्याषाढीय पारस्करादि सूत्रकृद्भिराचार्यैः स्वस्वप्रबन्धेषु गृह्यसूत्राणां संक्षेपणं, पुनः श्रौतसूत्रेषु प्रयोगविस्तृतिः प्राबन्धि । परमदसीयेषु बौधायनीयेषु तद्व्यत्ययेन गृह्यप्रयोगप्राचुर्यं - श्रौतसमसनाभ्यां श्रौतकर्मसौकर्यमकारि इत्यत एव "प्रतिपदगहन प्रत्यवायाकुलाढ्ये श्रौते वार्ता कथं मे" इति श्रीभगवत्पादीय भवापराधक्षमापणस्तुतिमतीमपि वचोभङ्गीमङ्गीकारयति श्लथतामिदमीयं श्रौतसूत्रमिति विशेषः शेमुषीं जुषते दोषज्ञानाम् ॥ तथाच सुकरीकृतेऽपि श्रौते कर्मणि नाचर्यते चापलात् कलयापि मयेत्यपराधः क्षन्तव्य इति तत्स्तोत्राशयोऽवसेयः । अत एव च लोके सूत्रस्यास्य परिग्रहो विग्रहवान् धर्मइव प्रतिबोधयन् सविशेषमेवाद्रियते धार्मिकैः ।

एते पुनराचार्या अतिरिच्यन्ते परेभ्यः सूत्रकृद्भ्यः । तथाहि "काण्डद्वयोपपाद्याय कर्म ब्रह्मस्वरूपिणे ।
स्वर्गापवर्गदात्रे च यज्ञेशाय नमो नमः" । इति यज्ञनारायणस्यापचितिः सञ्चाययति मनुजस्य स्वर्गापवर्गाख्यमुभयलोकानुषङ्गिणं पुरुषार्थम् । तथैव विंशत्यध्यायात्मिकां पूर्वोत्तरमीमांसां वृत्यादिपरिकर्मितामुभयसाधनत्वेन प्राणैषुः । तामेव परिपाटीमनुरुन्धाना गृह्य - धर्मसूत्रयोरप्युभयलोकसाध्यं प्रयोजनं, तत्साधनभावमुपागच्छत्कर्मजातं च न्यरुरूपन् ।

विस्तृतस्यास्य गृह्यसूत्रजातस्य निस्सन्दिग्धार्थबोधकं वा तत्र तत्र प्रमाणपरिदर्शनपूर्वकं वा विवरणं केऽपि विद्वांसस्तच्छाखीयाः परे वा न प्राणिन्युरिति चित्रीयते चेतः तदाकलयताम् ।

क्वचिच्च पुस्तकालये संजिघृक्षितानाममीषां सूत्राणां यत्र यत्र वैपरीत्यं नैयून्यं आधिक्यं विलोपो वा विसङ्गतिबोधकता वा

प्रतिष्टभ्नाति कर्मपथं प्रवर्तयतां याज्ञिकानां विदुषां प्रवृत्तिं तथा सुनिपुणं तत्र तत्र प्रादर्शि व्याख्याकृद्भिरेतैः श्रीरामचन्द्रशास्त्रिसूरिवरैः । अत एव प्रत्यग्रतया विधीयमानोऽयं बौधायनसूत्रवृत्ति ग्रन्थोऽतिमात्रमुपाकरोतीति विशेषतो विस्फार्य लोचने विलोकयतां विपश्चितामाप्याययत्येव मानसम् ॥

एते तु बोधायनाचार्याः मीमांसादिसूत्रवृत्तिकृत - उपवर्षाचार्याद्भिन्ना वा, यामुन - रामानुजाद्याचार्यैर्ब्रह्मसूत्रादिभाष्याणि यां बौधायनीयां वृत्तिं मूलीकृत्य प्रणीतानि, तेऽपि द्वैतिनो वृत्तिकृतस्ते तेभ्यो भिन्ना वा, तथा न सन्त्येव वा, भिन्नकालिका वा, उताहो तत्कालिका वेत्यादि विचारः पण्डितराजाद्युपाधिभिः सहितैः मद्रपुरीय पोलहाभिजनरामशास्त्रिवर्यमहाभागैः स्वप्रणीत "द्राविडात्रेयदर्शन" ग्रन्थे सविस्तरं व्यतानीति तत एव कृतधियो विभायन्तु ॥

प्रकृतेऽस्मिन् "संजीविनी" व्यपदेश्ये बौधायनगृह्यसूत्रवृत्ति प्रबन्धे शास्त्रिवर्यैः प्रणेतृभिरेतैरधिगत-साङ्गवेद-न्यायमीमांसादि दर्शनैरधिकविंशैर्वत्सरैरहोरात्रं विहितविविधपरिश्रमैः प्रमाणपरिबृंहितं पराहतशिष्टपरम्पराव्याहतिकृतधियां कृतप्रमोदमकृतधियां याज्ञिकानां सुकरतया च कर्मबोधं विदधत् क्लिष्टार्थविश्लेषणपुरः सरं सङ्गतिसंरम्भसंदृब्धं चानितरसाधारणं विवरणं प्राणायीति सच्छास्त्रवादिभिर्वितीर्यमाणान् शतशो धन्यवादानर्हन्तीमे पाण्डिती प्रकर्षावतंसाः शास्त्रिवर्याः ।

यथा चास्मिन् विषयानुक्रमणीसूत्रविषयसन्दर्भः स्फुटीभवेत् क्लिष्टविषयेषु, तथास्तोकमुदाह्रियते पाठकसाधकसौकर्याय -

ये चाष्टाचत्वारिंशत्संस्कारास्त्रैवर्णिकानां विहिता धर्म - संहितासु सूत्रेषु च, तत्रादिमाः एकोनविंशाः गर्भाधानादि सहधर्मिणीसंयोगान्ताः, तदग्निमाश्च सप्त पाकसंस्थाः सप्त हविः संस्थाः सप्त सोमसंस्थास्तथा अष्टावात्मगुणा इत्याहृत्य परिगणिताः । तत्र हविः सोमसंस्थानां चतुर्दशानां श्रौतविभागीयत्वेन गृह्यबहिर्भूतत्वात् ,

अर्थादिमे नात्रान्तर्भवन्ति गृह्ये कर्मणि । संस्कारेषु पुनः प्रधानभूतः सहधर्मचारिणीसंयोगः सर्वानोत्तरान् गर्भाधानादीन् सुतसंस्कार-स्वसंस्कार भेदभिन्नान् संसाधयतीति सर्वसंस्कारनिदानभारमावहति चेति सूत्रेऽस्मिन् तत्प्राधान्य एवोपक्रान्तमाचार्यैः । अन्यासु पुन-र्धर्मसंहितासु गर्भाधान एव प्राथम्यं यदभिधीयते, तदपेक्षया अत्र प्रथममेव वैलक्षण्यं प्रतिभाति । तदनुसृत्य व्याख्याकृतः खल्वेते तथैव प्रारभन्ते सोपक्रमम् ॥

तत्र पूर्वोत्तर विभागभेदेन चतुर्दशप्रश्नीं सूत्राणां विवृण्वाना उपक्रमात्प्रश्नत्रितये क्रमेण सप्तपाकसंस्थाः तदनुकृतीश्च अभिद-धते । चतुर्थे पुनः साङ्गोपाङ्गानां तासामनुष्ठानविशेषेषु प्रमा दालस्यादिभिः प्रत्यवायापादके वैगुण्ये सम्भवति क्रत्वर्थपुरुषार्थ-भेदेन तत्प्रायश्चित्तानि अभिदधुः । पञ्चमेतु प्रश्ने सूत्रकृतां शास्त्री-यसङ्केतावहं: याज्ञिकीं परिभाषां सङ्गिरन्ते । यद्यपि अन्यदीय-सूत्रपरिपाटीमनुरुध्य प्राथमिक एव प्रश्ने परिभाषा वक्तव्या, तथापि परिभाषाया विषयभूतपदार्थावलम्बनेन, तदर्थं प्रथममनुष्ठेयान्येव कर्मजातानि न्यगदिषत सूत्रकृद्भिः । तमिमं विशेषं व्याख्यायां विवृण्वते । षष्ठे च सूक्ताभिधाने प्रश्ने गुणोपसंहारन्यायमादृत्य शाखान्तरगतानि नानाविधनैमित्तिककर्माङ्गतामवाप्तानि बह्वृ-चानां सामगानां आथर्वणिकानामप्युपयुक्तानि सूक्तानि मन्त्रांश्च प्रादीदृशन् । सप्तमतः प्रश्नचतुष्टये शाखान्तरसूत्रवैलक्षण्येन पूर्वो-क्तानां सानुकृतीनां सप्तपाकसंस्थानां परिशिष्टानि तत्र तत्र सूचि-तानि विशिष्टकर्माणि, विनियोगतः प्रमाणेयत्तां च निर्दिशंति ॥

अत्र केचिदर्वाञ्चः परिशिष्टमेनं भागं साक्षात्सूत्रकृद्भि-रनिरूपितं, तच्छिष्यपूरितं चेत्याचक्षते । परं पूर्वोत्तरसूत्राङ्गीकृतां भङ्गीं, तत्कथनानुषङ्गं च सूक्ष्मेक्षिकया समालोचयतां विपश्चितां मनसा निश्चीयेत यदेतत्सूत्रजालमाचार्यनेव कर्तृनभिधत्ते इति ॥

तदनन्तरभूतौ एकादशद्वादशप्रश्नौ सप्तदशसंस्कारान् परेतस्य मर्त्यस्य सद्गतिप्रदायिनः और्ध्वदैहिकाख्यान पितृमेधपदेन व्यपदिशन्तौ कथयतः । अत्रत्यमेव विस्तृतिविशेषं सूत्रान्तरव्याख्यानकृतः तत्तदाचार्याः स्वशाखीयसूत्रार्थन्यूनतां परिजिहीर्षवस्तत्र तत्र जिघृक्षन्ति । शरीरत्रयावच्छिन्ने खल्वात्मनि प्रयुज्यमानाःसंस्काराः यथा साक्षादुपकुर्वते, नैवं विग्रहाद्वियुज्यमानस्यान्तरालिकस्य आतिवाहिकस्य जीवस्य तद्देहद्वारा साक्षाद्वा प्रापयेयुः प्रयोजनविशेषमिति कैश्चिदाशङ्क्येत । तां च शङ्कां सूत्रकृदभिसंहितोत्तररूपेण निरसनीयां व्याख्यायां अमी सामञ्जस्येन प्रत्यपीपदन् । अर्थात् निरास्थन् । सोऽयं पितृमेधयज्ञः स ब्रह्ममेधः पित्रादीनामुत्तमलोकावाप्तिकरः, पुनःकरणे तत्सद्गति प्रतिष्टम्भकः प्रत्यवायप्रयोजकश्च प्रेतादिरूपेण संक्लेशयति पुत्रनप्त्रादीनिति समेषामनुभवगोचरोऽयं विषयः । अत एवाहुः स्मृतिग्रन्थेषु ॥

"आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥,,
"पिता ददाति सत्पुत्रं गोधनानि पितामहाः,,

इत्यादिना । तत्र श्राद्धादिकर्तुः तदुक्तफलानि, तदकर्तुः सुखादि-विपरीतशब्दवाच्य – दुःखविपत्ति – तत्साधनानि प्राप्नुयुरिति विभाव्यते । अपरं चेदं पितृमेधे वैशिष्ट्यं, यत् कुटीचकादि चतुर्थाश्रमिणामपि औत्तरं कर्मजालं उत्तराधिकारिकर्तव्यं च तत्र विशेषतः सविभागं प्रत्यपादयन्त्याचार्याः ॥

चरमौ त्रयोदश चतुर्दशप्रश्नौ प्रवरगोत्रादि निर्णयकारिणौ विस्तरशस्तत्तद्गणानाहतुः । सोऽयं गोत्रप्रवरानुबन्धस्त्रैवर्णिकानां गर्भाधानादि संस्कारानारभ्यौर्ध्वदैहिकसंस्कारं यावदनुवर्तते । तथा पुत्र पौत्र नप्त्रादीनप्यनुगृह्णाति, स्वस्य च विरुद्धजायासम्बन्धं विनिवृत्य पापस्पृष्टिं दूरीकरोति ॥ अत एव तत्र तत्रोपनिषत्सु तत्तद्गोत्रानुबन्धीन्येवाभिधानानि मुनीनां श्रूयन्ते ॥

एवं चतुर्दशलक्षणी लक्षितोऽयं ग्रन्थो विवरणवैधुर्यात् प्रयोगेषु मान्द्यं स्वाच्छन्द्यं चैतावन्तं समयं परिदर्शयन्नासीत् । सम्प्रति तु श्रीशास्त्रिचरणानां विवरणेन धिषणविशेषितेन प्रमाणपरिबृंहितेन च निःसन्दिग्धान् सूत्रसन्दृब्धानर्थान् प्रकाशयन् परिश्रमो नितान्त मुपकुर्यादेव सर्वेषां स्मार्तकर्मपरिकर्मितमनसां प्रयोगेषु इति बाढ-माशास्महे ।

विशेषतस्तु व्याख्याकृतः सर्वतोमुखेन यत्नेन सश्रममन्विष्य, विशिष्य तत्तच्छाखागतान् मन्त्रान् तदानुपूर्वीं ग्रन्थान्ते "बौधायन मन्त्रप्रश्न, व्यपदेशेन संयोज्य तत्तद्विनियोक्त्रानुकूल्याय प्रदर्शयन्तो नितान्तं सन्तन्वन्ति कर्मानुकूल्यं कारयितॄणां कर्तॄणां चेति शास्त्रि पुङ्गवानाममीषां सौजन्यजन्यं कार्तज्ञ्यं याज्ञिकैः संस्मर्तव्यमेव ।

तमिममदसीयं श्रमं, पौष्कल्येन समयं हापयित्वा संचितस्य विषयस्य चिन्तन-प्रयोगादिना सफलीकुर्युः सर्वे – इति श्रीशिवा धवं प्रार्थयमाना विस्तराद्विरमामः ।

श्रीविबुधवशंवदाः

पण्डितप्रकाण्डाः
श्री भालचन्द्रशास्त्रिणः
श्रीजगद्गुरु शंकराचार्य संस्कृत
पाठशाला – धारवाड

श्री शा ॥ श ॥ १९०९
क्षयाभिधानाब्दः
नागपञ्चमी -
श्रीमत्तन्तुपुरे ।

## विद्वान् रामचन्द्रशास्त्री सूरि.



## बौधायनगृह्यसूत्रव्याख्यातृपरिचयः ॥

(लेखकाः = ब्रह्मश्री अनन्तभट्टाः)

श्री सूरि श्रीरामचन्द्रशास्त्रिणः इति सुगृहीतनामधेयाः ममातीव परिचिताः । एषां श्री बौधायनगृह्यसूत्र – सम्पादन – संशोधनात्मकेऽस्मिन् महति कार्ये पूर्वसुकृतेन ममाऽपि प्रवेशो लब्धः - इति वक्तुं मम स्वान्तं नितान्तं मोमुदीति । नाहं शास्त्रज्ञः, नापि वेदज्ञः, किन्तु वेदशास्त्रज्ञसद्गुरुकृपया, तत्पादसेवादिना च किञ्चित्किञ्चिदिव जानामि । गुर्वनुग्रहलब्धस्मार्तवैदिकविज्ञानः संस्कृतभाषाभिज्ञश्च । तदनुज्ञयैव नैकत्र पाठशालायां पाठितशिष्यगणः सद्यः किञ्चिदूनाशीतिवर्षवयाः ॥

श्री सूरिशास्त्रिणामपेक्षया एतद्गृह्यसूत्रसंशोधनकार्ये प्रवृत्तोऽस्मि । एते शास्त्रिवर्याः मयि कुमटा – तेप्पग्रामे श्रीशारदापाठशालायां अध्यापनकर्म कुर्वति, होन्नावर होसाकुळीग्रामेऽस्मद्गुरुभिः कडतोकाभिजन - श्रीशम्भुभट्टमहोदयैः प्रचाल्यमानायां " विद्यारण्यसंस्कृतपाठशालायां ,, अध्येतुमागताः । तत्र काव्यनाटकादि पाठसमय एवैते स्वकीयाभ्यासपाटवेन एधमानाग्निकणिका इव दृश्यन्ते स्म । तदैवेषां पूर्वपरिचयोऽपि जातः । स च क्रि० - श० १९२६ - २७ तम समयः । तत्र वर्षद्वयं पठितमेभिः ।

एतेषां पूर्वतनाः सर्वेऽपि सूरिणः सकलेषु वैदिकवाङ्मयेषु । सदाचारशीलाः अनुष्ठानतत्पराश्च । तेषु परमेश्वर भट्टा, इति प्रातःस्मरणीयाभिधानाः वेदवेदाङ्गतत्वज्ञाः । पुराणतत्वं वितरत्सु प्रत्यक्षं कृष्णद्वैपायना इव जनैर्दृश्यमाना इत्यश्रूयन्त । अपिच स्मार्ताग्न्युपासकाश्चासन् । महातपस्विनस्ते स्वनिर्याणक्षणमपि पुत्रेभ्यः सूचयन्तः सायमौपासनं कृत्वा तदैव प्रयाणविधिं सम्पाद्य दिवमगुरिति श्रूयते । तेषां पञ्च पुत्राः । तेष्वन्तिमाः परमभट्टभिधाः श्रौतस्मार्तकर्मसु तन्त्रेषु च दक्षाः, सषडङ्गस्य वेदस्याध्येतारः पितृपरम्पराप्राप्ततपोऽनुष्ठानपराः लौकिकेच व्यवहारे कुशला जनप्रियाश्चासन् । तेभ्यः सकाशात् श्रीमत्यां भवान्यां क्रि० श० १८-४-१९१५

तमे दिने सूरिवंशे मणिरिवोदभवन्। एषामेकोऽनुजः पञ्च स्वसारश्च क्रमेणोद्बभूवुः ।

शास्त्रिणो गर्भाष्टमेऽब्दे उपनीता कर्णाटक्या मातृभाषाया अध्ययन समय एव पितुः सकाशात् स्वशाखां, कल्पसूत्राणि च, ज्येष्ठ पितुः सान्निध्यात् संस्कृतभाषां च अध्यैषुः ।

परन्तु बाल्य एवैकादशतमे वयसि पितुर्वियोगोऽसह्य एतान बाधत। दारिद्र्यमेकत्र, अपरत्र सुदुःखिताया मातुः बालानां अनुज भगिनीनां च पोषणभारश्चेत्येवं कष्टपरम्परामनुभवन्तः अशक्त्या अगत्या च तद्भारं मातरि विन्यस्य प्रथमं होसाकुळी "विद्यारण्य संस्कृत पाठशालां ,, प्रविविशुः ।

तत्रास्मद्गुरुभ्यः सकाशात् काव्यनाटकादीन्यधीत्यापि अतृप्यन्तः ज्ञानपिपासया पैतृष्वस्रीयेण वेङ्कटरमणशास्त्रिणा सहपाठिना सह धारवाडपुरं प्रत्यगच्छन् । तत्र भैक्षान्नेन वसन्तः समस्तभारते प्रथितयशसः उप्पिनबेटगेरी - अभिजनान् विद्वन्मणीन् श्री नागेशशास्त्रिणः उपसद्य, तेभ्यः न्यायवेदान्तशास्त्राध्ययनं प्रारभन्त ।

गच्छत्सु दिनेषु तेषामपि गुरूणां तदानीमेव स्वीकृतोत्तराश्रमाणां हानगल् अभिजनानां विदेशेऽपि प्रथिताभिधेयानां महामहोपाध्यायानां श्रीविरूपाक्षशास्त्रिणां उत्तराश्रमे श्रीविद्याभिनववालुकेश्वरभारतीमहास्वामिनां सेवार्थं तैरेव तुङ्गातीरस्थे कूडली शृङ्गेरीयोपमठे "उद्गट्टि, नामके सहपाठिना साकं नीताः श्रीशास्त्रिणः॥ तत्रापि गुरुसेवां विदधतः तान् न्यायशास्त्रमपाठयन् ते गुरवः। आनुवंशिकं दुर्गानुष्ठानं अनुतिष्ठद्भ्यः सूरिशास्त्रिभ्यः सानुग्रहं श्री चक्रानुष्ठानपद्धतिं महामन्त्रं सपूर्णाभिषेकं चोपदिदिशुः, मठे च प्रतिदिनं सप्तशतीपारायणाय न्ययुञ्जन् । ततः कतिपयाहःसु महीशूरप्रयाणमङ्गीकृतवद्भिः गुरुभिः सपरिवारैः सह महीशूरनगरं प्रत्याययुः। तत्र मठे एव यावच्चतुर्वर्षं अध्ययनमनुष्ठानं च यथावत्प्रावर्तत॥ तेन च विशेषतेजःप्रज्ञासम्पन्ना गुर्वनुग्रहपात्रमभूवन् । अपि च तदा

नीन्तनमहाराजाय नाल्वडि कृष्णराजाय वेदान्ताध्यापनार्थं प्रति-दिनं राजधानीं गच्छद्भिः श्री गुरुभिः सह स्वयमपि गत्वा तत्र प्रचाल्यमानवेदान्तपाठे भागं स्वीकृतवन्तः । तदा तेन राज्ञाऽपि सम्यक्परिचिताः, सम्भाविताश्च ।

एवं विद्यार्जनासक्तानां एषां शास्त्रिणां दुर्दैवेनापादितः श्री-गुरूणां ब्रह्मीभावः वर्णनातीतं दुःखोदधिं अतनोत् । तत्र निमग्नाः किंकर्तव्यतामूढाः अनुपशान्तज्ञानपिपासाश्च कैश्चित् सुहृद्भिः प्रेम्णा दर्शितपथाः श्रीमन्महाराजासंस्कृतमहापाठशालां प्रविश्य, तत्राद्वैत वेदान्तप्राध्यापकानां चतुःशास्त्रेष्वपि चतुरश्रपण्डितानां पालघाट् अभिजनानां आस्थानविदुषां नारायणशास्त्रिवर्याणां चरणौ प्रपीड्य तेभ्यः सपरिकरं शाङ्करं वेदान्तमधीत्य तत्रैव विद्वत्परीक्षायां प्राथ-मिकायां श्रेण्यां उत्तीर्णाः सर्वप्रावीण्यं तदनुगुणानि सुवर्णपदकानि, श्री काञ्चीकामकोटिपदोट्टङ्कितं सुवर्णकटकं शङ्खयुगलं च श्री महाराजहस्तादलभन्त । ततः तद्गुर्वनुज्ञया समावृत्ताः धारवाडनगर स्थ श्रीगुरुनागेशशास्त्रिणां चरणयोः तानि सम्भावनानि समर्प्य प्रदर्श्य च महाशीर्वचनैः सह तेषामनुग्रहं च प्रतिनिर्वर्तितसंभावनानि च लब्ध्वा स्वग्राममगमन् । (क्रि० श० १९३९)

तत्र मातुरतीवोत्कण्ठितायाश्चरणे प्रणिपत्य, तानि सर्वाणि सम्भावनानि समर्प्य प्रदर्शयामासुः । तया वात्सल्येनाऽऽलिङ्गिताः मूर्ध्न्यवघ्राताश्च सानन्दाश्रुपातमभिनन्दिताः स्वात्मानं धन्यं मेनिरे । महीशूरेऽध्ययनसमय एव श्रीगुरुनारायणशास्त्रिभिर्दत्तं ग्रन्थाक्षर – मुद्रितं श्रीमदप्पय्यदीक्षितेन्द्रकृतं सव्याख्यं मध्वतन्त्रमुखमर्दनं ग्रन्थ रत्नं ग्रन्थाक्षरज्ञानरहितानामुपकाराय देवनागरलिप्या परिवर्त्य, तैरेव गुरुभिः कृतां टिप्पणीं च संयोज्य श्री गुरुनागेशशास्त्रिणां साहाय्येन पुण्यपत्तनस्थ - आनन्दाश्रममुद्रणालये प्रकाशयामासुः । किंच स्वानुजं शङ्करशास्त्रिणमपि मैसूरमहाराजासंस्कृतमहापाठशालायां प्रवेश्य शास्त्राध्ययनायानुकूल्यमकल्पयन् । सोऽपि भ्रातृप्रदर्शितेन

पथा क्रममाण उभयमीमांसाविद्वत्परीक्षामुत्तीर्णः राज्ञा बहुमानान्य लभत ॥ ततो गृहकृत्ये सक्ताः, मातरं परिचरन्तः, याज्ञिक – पौराणिकजीवनरीतिमनुरुन्धानाः स्वीकृत - द्वितीयाश्रमाः, अनुजाय स्वसृभ्यश्च क्रमेण लंभितद्वितीयाश्रमाः, किंच असह्यमाकिञ्चन्यम – गणयन्तः, श्रीदेवीमेव शरणं मन्वानाः, स्वकीये कर्क्यभिधे ग्रामे "श्री शङ्करानन्दसंस्कृतपाठशालां,, प्रावर्तयन् । तस्यां च स्वशाखा ध्यापनं याज्ञिकग्रन्थानां वेदाङ्गानां शास्त्राणां चाध्यापनं कुर्वन्त आसत ॥ तदा नैकेऽन्तेवासिन आयन् तेषु नेके शिष्याः लोके गण्य शास्त्रज्ञाः, याज्ञिकाश्चाभूवन् । अध्यापनकार्ये श्रीशास्त्रिणः दिवा-रात्रभेदमपि न गणयन्तिस्म ।

एवमतीतेषु पञ्चदशवत्सरेषु उत्तरकन्नड - सिद्धापुर - नेलेमांवु मठाधीशैः नूतनैः "श्री शङ्करानन्दभारतीस्वामिपादैः,, स्वाध्यापनायाहूताः तेभ्यः शाङ्करवेदान्तं पाठयामासुः ॥ तत्रैव महाजन साहाय्येन प्रतिष्ठापितायां "श्री शारदाप्रसादसंस्कृतपाठशालायां अध्यापनवृत्तिमङ्गीकृत्य च नैकान् शिष्यानध्यापयामासुः राज्य-सर्वकारेणाङ्गीकृतायां तस्यां अधीत्य केचन शिष्या इदानीमपि बेङ्गलूरु मैसूरु प्रभृतिषु नगरेषु - महाविद्यालयेषु, प्रौढशालासु, पाठशालासु चाध्यापकाः सन्तो यशस्विनो विराजन्ते ।

समयेऽस्मिन् एभिः "रसालपुरवर्णनं,, नाम काव्यं व्यरचि । केन्द्रसर्वकारेण नियुक्तैः शास्त्रिभिः श्रीहर्षमहाकविकृतस्य "खण्डन खण्डखाद्यस्य,, संशोधनं विधाय, तस्य माधुर्य नाम व्याख्यानं रचितम् । एतदुभयमपि अमुद्रितमिति खेदावहम् ॥ तथा 'गणेश लीलावैभवः, 'गणेशोपासनाप्रकाश, 'प्रयोगमालाप्रकाश ,, इति ग्रन्थत्रयं कन्नडभाषायां रचितं प्रकाशितं च । 'व्यासतात्पर्य निर्णयः, "मध्यमव्यायोगः, (भासकृतः) 'धर्मदीपः, (कर्णाटक विश्वविद्यालयेन पठ्यपुस्तत्वेन नियोजितं सांस्कृतं कथासङ्कलनस्य बोधकं ( Guide ) एतत्त्रयं कर्णाटकभाषाया अनूदितं प्रकाशितं च । तथा हेरूरु महागणपति स्थापना विषयाधिकृतं स्कन्दपुराणा-

न्तर्गत – सह्याद्रिखण्डस्थं " प्रसूतपुर ( हेरूरु ) माहात्म्यं ,, कन्नडभाषयाऽनूद्य परिष्कृतं, प्रकाशितं च ।। किंच एभिः संस्कृतभाषया कर्णाटकभाषया च रचिता विवेचनात्मकाः नैके प्रबन्धाः संस्कृत पत्रिकासु, कन्नडपत्रिकासु च प्रकटिताः । अपि चानेकासु विद्वत्सभासु वाक्यार्थसभासु च भागमूढ्वा नैकमठाधीशैरन्यैश्च सम्भाविताः सम्मानिताश्च ।।

किंच श्रीगोकर्णमण्डलाधीशैः जगद्गुरु शङ्कराचार्यपीठस्थ-श्रीराघवेन्द्रभारती महास्वामिभिः होन्नावर तालूक - मुग्वाग्रामे श्री सुब्रह्मण्य क्षेत्रे स्वकरकञ्जप्रतिष्ठापितायां स्वनाम्ना प्रचाल्यमानायां सवेदसंस्कृत पाठशालायां तेषामेवाज्ञया स्वीकृतप्राध्यापकपदाः दशवत्सरेभ्यः प्रभृति अध्यापयन्ति ।। एवं अध्यापकपदव्यां तिष्ठतामेषां अधिचत्वारिंशत्संवत्सरा व्यतीयुः । " तथा च तद्धि तपस्तद्धि तपः „ इति श्रुतिवचनं सादरं निरवहन् „ इति वक्तुं मोदते मे चेतः ।

सद्यः श्रीजगद्गुरु काञ्ची कामकोटीपीठाधीशैः योजितायां श्रीभगवत्पादविद्यार्थनिक्षेप – नामक मण्डल्या चाल्यमानायां अद्वैत वेदान्तपाठशालायां प्रौढग्रन्थान् पाठयन्ति ।

एषां शास्त्रिणां वैदिकवाङ्मये शास्त्रवाङ्मये च भूयः प्रचारमवगत्य केन्द्रसर्वकारोऽष्टवर्षप्रभृति ( सार्धद्विशतरूप्यकाणि ) मासिकं गौरवधनानि ददति । राज्यसर्वकारोऽपि तथैव परिचिन्त्य मासिकं धनं ददाति ।

शास्त्रिभिः एतत्सम्पादने प्रयत्नानुभूतः प्रयासः स्तुत्यः । सर्वथाऽऽरब्धं महदेतत्कार्यं निरन्तरायं समापितम् । मया त्वत्र केवलं काचित् सेवा कृता । शास्त्रिणस्तामेव महतीं मन्यमाना मामुद्ब्रुवन्ति । तच्च तेषां सौशील्यम् । वैदिकवाङ्मयेऽभूतंपूर्वं कर्मेदं सहृदयविदुषां तुष्ट्यै भूयात्, अचलायामस्यामाचन्द्रतारमचला सती जेजीयताञ्चेति ससन्तोषमाशासे ।।

१४-११-१९८६ विबुधजनविधेयः अनन्त महादेव भट्टः
देवनीमठे देवनीमठ, गुडेअंगडी
कुमटा ( उ. क. )

## – सम्पादकमण्लीसदस्यानां निवेदनम् –

### — शुभमस्तु —

मान्याः आस्तिकमहाशयाः विबुधाग्रेसराः किञ्चिदिदं कर्णे कुरुत । भगवतः परमानुग्रहेण अनेकेषां परमहंस परिव्राजकाचार्याणां आशीर्वादेन नैकजनदानशूराणां द्रव्यसाहाय्येन च संजीविनी व्यख्यासंयुतं सुप्रसिद्धानां बोधायनाचार्याणां गृह्यसूत्रमिदानीं विद्वद्बृन्द्यानां महाजनानां करकमले समर्प्यंत इतीदं प्रमोदावहम् ।। कृतकृत्यता संपादकंच । सूत्रमिदं सकल सूत्रेषु मूर्धन्यं सकल गृह्यकर्मविषयप्रतिपादकं च ।। विषयोऽयं ग्रन्थस्यास्य विस्तृत भूमिकायां, व्याख्यातृपरिचये, व्याख्यातुरात्मनिवेदने च विस्तरतया प्रपंचितः ।। ग्रन्थस्यास्य संपादनविषये अस्माभिःसह प्रधानसंपादकानां विदुषां श्री सूरि रामचन्द्रशास्त्रिणां प्रयत्नाः विशेषतः प्रशंसार्हाः ।।

यद्यपि श्री बोधायनाचार्याः भारतस्य कतमं महीमण्डलं स्वजन्मना पवित्रीकृतवन्तः, कस्मिंश्चित्प्रदेशे उषित्वा स्वतपः सिद्धिमवापुः इत्यादि विषये निश्चयेन किमपिवक्तुं नपारयामस्तथापि हिमाचलप्रदेशे शौनकादि महर्षीणां निवासभूमौ नैमिषारण्ये न्यवसन् तस्मिन्नेन पुण्यक्षेत्रे सूत्रमिदं सूत्रयामासुश्च इत्यस्मिन् विषये सन्देहो नास्त्येव ।।

कदा जनिमवापुः इत्यस्मिन् विषये " १९४० क्रिस्ताब्दे मुंबई लक्ष्मी वेंकटेश्वर मुद्रणालये मुद्रिते शतपथ ब्राह्मणस्योपोद्घाते श्री श्रीधर शास्त्री वारे इत्येतैः एवं स्पष्टीकृतम्– " यदा याज्ञवल्क्येन भगवतः त्रयीतनोः वेदाः संप्राप्ताः तदा कृष्णयजुषः श्रुतर्षेः बोधायनस्यात्मभूः मुनिः कण्वो याज्ञवल्क्यं शिष्यत्वेनोपगम्य तस्माच्छुल्कयजूंषि अधिगतवान् । इयं च कथा आदित्यपुराणे " बोधायन पितृत्वाच्च प्रशिष्यत्वाद्दिवस्पतेः । शिष्यत्वाद्याज्ञवल्क्यस्य कण्वोऽभून्महतोमहान् ।। " इत्यादिना सूचितः । अयमेव कण्वः शुक्लयजुर्वेदीयकाण्वशाखामूलपुरुषः ।। याज्ञवल्क्यस्तु

षट्सहस्रवर्षात्प्राक्तन:,, इति तस्मिन्नेवोपोद्घाते तैरेव निर्णीतपूर्व विषय: ।। विस्तरभयान्नात्र लिख्यते । जिज्ञासुभिस्तत एवावधेयम् ।। तस्मात् अयं सूत्रकार: श्रुतर्षिरित्यपरनामधेय: बोधायनोऽपि तत्समकालीन इति निश्चेतुं शक्यम् । बोधायनानेकत्वमपि केचनाहु: । तत्र समाधानकरं मूलं न पश्याम: । एवं स्थिते बहुप्रयत्नसाध्यो बहुद्रव्ययसाध्यो महान् ग्रन्थ: । प्रकृते तत्सूत्रस्य चतु: प्रश्नसंवलित: प्रथमभागोऽयं सुब्रह्मण्य प्राच्य विद्या संस्थया प्राकाश्यं नीत: । महाजना: ग्रन्थरत्नमिदंसंगृह्य अस्माकं संपादक मण्डलीविदुषां प्रयत्नं सफलीकुर्वन्तु इति परमसौहार्देन निवेदयाम: ।।

इतिवैदिकवृन्दानुचरा:
संपादकमण्डली सदस्या:

प्रभवसं श्रावण कृष्ण ८
रविवासरे
दि - १६ - ८ - १९८७

# ಶ್ರೀ ಪಂಡಿತ ಪ್ರಕಾಂಡ ಭಾಲಚಂದ್ರ ಶಾಸ್ತ್ರಿಗಳು
## ಬರೆದ ವಿಶಿಷ್ಟ ಭೂಮಿಕೆಯ ಕನ್ನಡಾನುವಾದವು.

ಶ್ರೀ ಶಂಕರನೇ ರಕ್ಷಕನು.

ಪರಮ ಋಷಿಗಳಿಗೂ, ವಂಶರ್ಷಿಗಳಿಗೂ ನಮಸ್ಕಾರವು.

ವಿದ್ವದ್ವರರೂ ಬ್ರಹ್ಮಶ್ರೀ ವಿರಾಜಮಾನರೂ ಆದ ಸೂರಿ ರಾಮಚಂದ್ರ ಶಾಸ್ತ್ರಿಗಳು ರಚಿಸಿದ ಶ್ರೀ ಬೋಧಾಯನ ಗೃಹ್ಯಸೂತ್ರದ ಸಂಜೀವಿನೀ ವ್ಯಾಖ್ಯೆಯು ಒಳ್ಳೇ ಶ್ರೇಷ್ಠ ಗ್ರಂಥವಾಗಿದ್ದು ಪ್ರಾಜ್ಞರಿಗೆ ಸಂತೋಷದಾಯಕ ವೆಂಬುದೂ ಅದು ಇದೀಗ ಪ್ರಕಾಶಪಡುತ್ತಿರುವ ಸಂಗತಿಯೂ ಬಹಳ ಪ್ರಶಂಸನೀಯ.ವಾಗಿದೆ.

ಬಹುಶಃ ಧರ್ಮವು ಗ್ಲಾನಿಯಾಗುತ್ತಿರುವ ಈ ಕಾಲದಲ್ಲೂ ಈ ಭರತ ಖಂಡದಲ್ಲಿ ವೈದಿಕ ಧರ್ಮಾನುಷ್ಠಾನ ಮಾಡುವವರು ಎಲ್ಲಿಯೋ ಮೂಲೆಗಳಲ್ಲಿ ವಿರಳ ವಿರಳರಾಗಿದ್ದು, ಸಂಪೂರ್ಣವಾಗಿ ಧರ್ಮದ ಮರ್ಮವನ್ನರಿಯದಿದ್ದರೂ ಆ ಪರಂಪರೆಯಲ್ಲಿ ಬಂದಿರುವ ಅನುಷ್ಠಾನವನ್ನು ಮಾಡುವ ಇಚ್ಛೆಯುಳ್ಳವರಾ-ಗಿರುವರು. ಶ್ರದ್ಧೆಯುಳ್ಳವರಾಗಿರುವರು; ಎಂಬುದು ಎಲ್ಲ ವಿದ್ವಾಂಸರೂ ತಿಳಿದಿದ್ದಾರೆ.

ಯದ್ಯಪಿ ಈಗಿನ ಕಾಲದಲ್ಲಿ ಐಹಿಕವಾಗಿಯೂ, ಪಾರಲೌಕಿಕವಾಗಿಯೂ ಇರುವ ಶ್ರೇಯಸ್ಸನ್ನು ಪಡೆಯಲು ಮುಖ್ಯ ಸಾಧನವಾದ, ವೇದಗಳಲ್ಲಿ ಹೇಳಿದ ಧರ್ಮಗಳನ್ನು ತಿಳಿದರೂ ಅದನ್ನು ಅನುಷ್ಠಾನದಲ್ಲಿ ತರಲು ಬಹಳ ಕಷ್ಟ ವಾಗುತ್ತಿರುವ ಈ ಕಾಲದಲ್ಲೂ ಆ ಮಾರ್ಗದಲ್ಲಿ ಬರಿ ಶ್ರದ್ಧೆಯನ್ನು ಪೂರ್ಣ ವಾಗಿಟ್ಟಿರುವ ಜನರು ಬಹಳವಾಗಿರುವರು. ಮತ್ತು ಆ ಅನುಷ್ಠಾನಗಳನ್ನು ಮಾಡುವ ಇಚ್ಛೆಯಿದ್ದರೂ ವೇದಗಳಲ್ಲಿ ಹೇಳಿದ ಆ ಕ್ರಮಗಳನ್ನು ತಿಳಿಯಲಾರದೇ ಅವುಗಳಲ್ಲಿ ಮನಸ್ಸನ್ನು ಸರಿಯಾಗಿ ಇಡಲಾರದವರಾಗಿರುವರು.

ಕೆಲವು ಜನರು ಚಾರ್ವಾಕಮತದಲ್ಲಿ ಪ್ರೀತಿಯಿಟ್ಟು ಕುತ್ಸಿತವಾದ ಭಾವನೆ ಯನ್ನು ತಾಳಿ, ಧರ್ಮದ ಹಾಗೂ ಅದನ್ನು ಹೇಳುವ ವೇದದ ಪ್ರಾಮಾಣ್ಯದ ವಿಷಯದಲ್ಲಿ ಮಾತ್ಸರ ಬುದ್ಧಿಯಿಂದಲೋ, ಸಂದೇಹದಿಂದಲೋ ಆ ಬಗ್ಗೆ ದುರ್ವಾದವನ್ನು ಮಾಡುತ್ತಿರುವ, ಹಾಗೂ ತಮಗೆ ಕಂಡಂತೆ ವೇದಗಳ ವಿಧಿ ನಿಷೇಧಗಳನ್ನು ಅರ್ಥೈಸುತ್ತಿರುವವರು ದೂರವಿರಲಿ ಆದರೆ ವೈದಿಕ ಕರ್ಮಗಳನ್ನು ಅನುಷ್ಠಾನ ಮಾಡುವ ಮನಸ್ಸುಳ್ಳ ಹಲವು ಸುಕೃತಿಗಳು ತಮ್ಮ ಸದಾಚಾರಗಳಿಂದ ತಾವು ಧನ್ಯರೆಂದು ತಿಳಿಯುವವರು ಈಗಲೂ ಈ ಭಾರತ ಪ್ರದೇಶಗಳಲ್ಲಿ ಇದ್ದಾರೆ. ಅವರು ಮಾಡಿದ ನಿತ್ಯ ನೈಮಿತ್ತಿಕ ಅನುಷ್ಠಾನಗಳಿಂದ ಪ್ರೀತನಾದ ಮಹಾಮಹಿಮನೂ, ಈ ಜಗತ್ತನ್ನು ಸೃಷ್ಟಿಸಿದವನೂ ಆದ ಭಗವಾನ್ ಪರಮೇಶ್ವರನು ಈಗಲೂ ಆಯಾಕಾಲದಲ್ಲಿ ಗಾಳಿ, ಬಿಸಿಲು, ಮಳೆ, ಚಳಿ,

ಬೆಳೆಗಳನ್ನು ಸಮೃದ್ಧವಾಗಿ, ಸರಿಯಾಗಿ ನಮಗೆಲ್ಲಾ ನೀಡುವನು ಎಂದು ನಾವು ನಂಬಿರುವೆವು.

ಆ ಪರಮೇಶ್ವರನಿಗೆ ಪ್ರಿಯರಾದ ಜ್ಞಾನಿಗಳು ಸಕಲಜ್ಞಾನಕ್ಕೂ ಆಕರವಾದ ಕಲ್ಪವೃಕ್ಷದಂತಿರುವ, ಋಗ್ವೇದ, ಯಜುರ್ವೇದ, ಸಾಮವೇದಗಳೆಂಬ ವಾಙ್ಮಯ ವನ್ನು ಹೇಳಲು ಸಾಧ್ಯವಿಲ್ಲದಷ್ಟು ಲೌಕಿಕವೂ, ಅಲೌಕಿಕವೂ ಆದ ಸುಖವನ್ನು ಕೊಡುವದೆಂದೂ ಅದು ಅಸಂಸಾರಿಯಾದ ಮಹಾಪುರುಷನ ನಿಟ್ಟುಸುರಿಂದ ಹೊರಟಿದ್ದೆಂದೂ ಹೇಳುತ್ತ ಪವಿತ್ರವಾದ ವಿಚಾರವನ್ನು ಮಂಡಿಸುತ್ತಿದ್ದಾರೆ. ಪೂಜ್ಯ ಆ ಶ್ರುತಿಗಳು ಆಯಾ ಅಧಿಕಾರಿಗಳಿಗೆ ಸರಿಯಾಗಿ ನಾನಾವಿಧವಾದ ನಿತ್ಯ, ನೈಮಿತ್ತಿಕ, ಕಾಮ್ಯ, ಪ್ರಾಯಶ್ಚಿತ್ತ, ಹಾಗೂ ನಿಷಿದ್ಧವಾದ ಕರ್ಮ ಗಳನ್ನು ವಿಧಿಸುತ್ತ ಅವುಗಳ ಸ್ವರೂಪವನ್ನೂ ತಿಳಿಸುತ್ತಿವೆ.

ಆ ವೇದಗಳು ಅಪೌರುಷೇಯವಾದವೂ, ಇಹ ಪರ ಸುಖಗಳನ್ನು ನಿಶ್ಚಿತ ವಾಗಿ ಕೊಡುವವೆಂದೂ, ಶ್ರದ್ಧೆಯುಳ್ಳವರಿಗಾಗಿ ಪೂಜ್ಯ ಪ್ರಾಚೀಮೀಮಾಂಸೆಯು ತಿಳಿಸುತ್ತಿರುವದರಿಂದ ಈಗಿನ ನಾವಾರೂ ಆ ಬಗ್ಗೆ ಲೇಖನಿಯನ್ನು ಉಪಯೋ- ಗಿಸಲಾರೆವು.

ಯಾರು ನಾಸ್ತಿಕ್ಯ ಬುದ್ಧಿಯಿಂದ ಉಪಹತರಾಗಿ ತಾವೇ ಬುದ್ಧಿಶಾಲಿಗಳೆಂದು ಹೊಗಳಿಕೊಳ್ಳುವರೋ, ಹಾಗೂ ಶ್ರೌತಸ್ಮಾರ್ತ ಕರ್ಮಗಳಲ್ಲಿ ಇರುವ ವೈಶಿಷ್ಟ್ಯ ವನ್ನು ಆದರಿಸುವದಿಲ್ಲವೋ ಅವರಿಗಾಗಿ ಈ ಸೂರಿ ಶಾಸ್ತ್ರಿಗಳು ಪಟ್ಟ ಶ್ರಮವು ಸಾಫಲ್ಯವನ್ನು ಹೊಂದಲಾರದು.

"ನನ್ನ ಮಾತು ಸುಜ್ಞರಿಗೆ ಮನದಟ್ಟಾದರೆ
ಅಲಸರಾದ ಮೂರ್ಖರು ಆದರಿಸದಿದ್ದ ಮಾತ್ರಕ್ಕೆ
ನನ್ನ ಆ ಸೂಕ್ತಿಯು ನಿರ್ದೋಷವಾಗುವದಕ್ಕೆ
ಏನು ತೊಂದರೆ ?"

ಎಂಬ ಮಹಾತ್ಮರ ವಚನದಂತೆ ನಾವು ಅದನ್ನು ಮನಸ್ಸಿನಲ್ಲಿರಿಸಿ ವೈಮನಸ್ಯ ವನ್ನು ಹೊಂದುವದಿಲ್ಲ.

ಇದೊಂದು ಆಶ್ಚರ್ಯದ ಸಂಗತಿಯಾಗಿದೆ. ಏನೆಂದರೆ ವಿದೇಶದ ಜನಾಂಗವೂ ವೇದರಾಶಿಯನ್ನೂ, ಅದರ ಮಹಿಮೆಯನ್ನೂ ಹೊಗಳುತ್ತ ವೈದಿಕಜ್ಞಾನ ರಹಿತರಾದ, ಅಲ್ಪಜ್ಞರಾದ ಭಾರತೀಯರನ್ನು ನಿಂದಿಸುತ್ತಾರೆ; ಎಂಬುದೇ ಆಶ್ಚರ್ಯ ವಾದದ್ದು. ಆ ವಿದೇಶದ ಜನರಿಗೆ ಈ ವೇದಗಳಲ್ಲಿ ಮಹತ್ವವನ್ನು ಕಾಣಲು ಮುಖ್ಯವಾದ ಕಾರಣವೆಂದರೆ ಬಹು ಪ್ರಯಾಸಪಟ್ಟರೂ ಈ ವೇದರಾಶಿಗಳ ಕರ್ತಾ ಯಾರೆಂಬುದು ಇಂದಿಗೂ ಸಿಗಲಿಲ್ಲ. ಅಷ್ಟಲ್ಲದೇ ಸಂಶೋಧಕರೆಂದು ಹೇಳಿಕೊಂಡು ಹೊರಟ ಭಾರತೀಯರಿಗೂ ವೇದಗಳ ಕರ್ತನಾರೆಂಬುದು ಸಿಗಲಿಲ್ಲ. ಇದೇ ಅದರ ಮಹತ್ವಕ್ಕೆ ಕಾರಣವಾಗಿದೆ.

ವೈದಿಕ ಜ್ಞಾನವು ಆರ್ಷವಾಗಿದ್ದು ಅಂತರ್ದೃಷ್ಟಿಯಿಂದಲೂ, ಉತ್ತಮ ತಪಸ್ಸಿನಿಂದಲೂ ಭಾರತದಲ್ಲಿಯೇ ಹುಟ್ಟಿ ಬೆಳೆದ ಮಹರ್ಷಿಗಳಿಂದಲೇ ಅದು (ತಿಳಿಯಲ್ಪಟ್ಟದೆ.) ಪಡೆಯಲ್ಪಟ್ಟಿದೆ. ಆ ಮಹರ್ಷಿಗಳನ್ನು ಮನುಷ್ಯತ್ವದಿಂದಾಗಲೀ, ದೇವತ್ವದಿಂದಾಗಲೀ ಹೋಲಿಸಲು ಶಕ್ಯವಿಲ್ಲ. ಆ ಮಹರ್ಷಿಗಳು ಸರ್ವಜ್ಞರೂ, ಲೋಕೋತ್ತರವಾದ ಶಕ್ತಿಮತಿಶಾಲಿಗಳು ಚೆನ್ನಾದ ತಪಸ್ಸಿನಿಂದ ಎಲ್ಲ ಮಾನವ ರನ್ನೂ, ದೇವತೆಗಳನ್ನೂ ಮೀರಿದ ಮಹಾನುಭಾವರು. ಅವರಿಗೆ ದೇವತೆಗಳೂ ಹೆದರುತ್ತಿದ್ದಾರೆಂಬುದು ಇತಿಹಾಸ ಪುರಾಣಗಳಲ್ಲಿ ಘೋಷಿಸಲ್ಪಟ್ಟಿದೆ.

ಆ ಮಹರ್ಷಿಗಳ ಸಂತಾನ ಪರಂಪರೆಯು ತ್ರೈವರ್ಣಿಕರಲ್ಲಿ ಇಂದಿಗೂ ಅನಸ್ಯೂತವಾಗಿ ಬಂದಿದೆ. ಈ ಭಾರತದಲ್ಲಿ ಅಂಥವರು ಪರಿಪೂರ್ಣವಾಗಿ ನೆಲೆಸಿ-ದ್ದಾರೆ. ಆಯಾ ಋಷಿಗಳ ಹೆಸರಿನಿಂದ ಗೋತ್ರಪ್ರವರಗಳನ್ನು ಹೇಳುತ್ತ ಆ ಕುಲದಲ್ಲಿ ನಾವು ಜನಿಸಿದ್ದೇವೆಂದು ಹೇಳುವವರನ್ನು ಉದ್ದಕ್ಕೂ ಕಾಣಬಹುದು. ಆ ಋಷಿಗಳು ತಮ್ಮ ವಂಶಜರಾದ ಈ ಭಾರತೀಯರಿಗೆ ದೃಷ್ಟವಾಗಿಯೂ, ಅದೃಷ್ಟವಾಗಿಯೂ ಇದ್ದು ತಮ್ಮ ಪುತ್ರ ಪೌತ್ರ ನಪ್ತೃ ಮೊದಲಾದವರನ್ನು ಶ್ರೇಯಸ್ಸಿಗೆ ಹೊಂದಿಸಲು ಇಚ್ಛಿಸುತ್ತಿದ್ದಾರೆ. ಅದಕ್ಕನುಗುಣವಾದ ಅಸದೃಶ ದಯೆಯಿಂದ, ಭಗವಂತನಿಂದ ಪ್ರೇರೇಪಿಸಲ್ಪಟ್ಟವರಾಗಿ, ಜೀವನ್ಮುಕ್ತರಾಗಿದ್ದು ಈ ಸಂಸಾರ ಸಮುದ್ರದ ಪಾರಗಾಣಲು ಸಾಧನವನ್ನು ತಿಳಿಸುತ್ತ ಪರೋಪಕಾರ ಬುದ್ಧಿಯುಳ್ಳ ತಪಸ್ವಿಗಳಾಗಿರುವರು.

ಆದ್ದರಿಂದಲೇ ಐಹಿಕ ಆಮುಷ್ಮಿಕ ಸುಖಗಳನ್ನು ಕೊಡುವ ಯುಗ ವ್ಯವಸ್ಥೆ ಯಿಂದ ಯುಗ ಧರ್ಮಗಳನ್ನು ರಕ್ಷಿಸಲೋಸುಗ ಭಗವತೀ ಶ್ರುತಿಮಾತೆಯನ್ನ-ವಲಂಬಿಸಿ, ಪ್ರವೃತ್ತಿಮಾರ್ಗ ಹಾಗೂ ನಿವೃತ್ತಿ ಮಾರ್ಗಗಳನ್ನು ರೂಪಿಸುವ ಎರಡು ಧರ್ಮಗಳನ್ನೂ ಪೂರ್ವಕಾಂಡ, ಉತ್ತರಕಾಂಡವೆಂಬ ಎರಡು ಭೇದಗಳಿಂದ ಆ ಮುನಿವರ್ಯರೇ ವಿಭಾಗಿಸಿದ್ದಾರೆ. ಇವುಗಳಲ್ಲಿ ಜನರನ್ನು ಪ್ರೇರೇಪಿಸಲು ಜೈಮಿನಿ ವ್ಯಾಸ ಮೊದಲಾದ ಮಹರ್ಷಿಗಳು ಸೂತ್ರ ಹಾಗೂ ಶಂಕರ ಭಗವತ್ಪಾದಾ-ದ್ಯಾಚಾರ್ಯರು ಭಾಷ್ಯ ವಿವರಣೆ ಮುಂತಾದವುಗಳನ್ನು ರಚಿಸಿ ಉಪಕರಿಸಿದ್ದಾರೆ.

ಅದರಲ್ಲಿ ಕರ್ಮಕಾಂಡದ ಸೂತ್ರ ಭಾಷ್ಯ ವಿವರಣಾದಿಗಳ ಗಾಂಭೀರ್ಯ ವನ್ನು ಸುಲಭಗೊಳಿಸಿ ಅದರ ಅರ್ಥವನ್ನು ತಿಳಿಯಲೋಸುಗ ಸಮರ್ಥರಾದವರಿಗಾಗಿ ಶಬರಸ್ವಾಮಿ, ಕುಮಾರಿಲಭಟ್ಟ, ಪ್ರಭಾಕರ, ಪಾರ್ಥಸಾರಥಿ ಮಿಶ್ರ ಮುಂತಾದ ಶ್ರೌತಕರ್ಮಗಳಲ್ಲಿ ನಿಷ್ಣಾತರಾದವರು ಭಾಷ್ಯ ವಾರ್ತಿಕ ವೃತ್ತಿ ವಿವರಣ ಮುಂತಾ-ದವುಗಳನ್ನು ಮಂದ ಪ್ರಜ್ಞರಿಗಾಗಿ ಬರೆದಿದ್ದಾರೆ. ಅದಕ್ಕೆ ಪೂರ್ವಮೀಮಾಂಸೆ ಯೆನ್ನುವರು.

"ಮಂತ್ರ ಮತ್ತು ಬ್ರಾಹ್ಮಣಗಳು ವೇದಗಳು" ಎಂಬ ಲಕ್ಷಣವನ್ನು ಅಭಿಯುಕ್ತರು ಹೇಳುವದುಂಟು. ಆದರೆ ಉಪನಿಷತ್ತಿನ ವೇದಭಾಗದಲ್ಲಿ ಆಲಕ್ಷಣವು ಎಷ್ಟರಮಟ್ಟಿಗೆ ಹೊಂದುವುದೆಂಬುದನ್ನು ವಿಚಾರ ಮಾಡಬೇಕು. ಭಾಟ್ಟ ಚಿಂತಾಮಣಿ ಗ್ರಂಥವನ್ನು ಬರೆದ ಪೂಜ್ಯ ಶ್ರೀ ಗಾಗಾಭಟ್ಟರು ಮೇಲಿನ ತೊಂದರೆಯನ್ನು ತಪ್ಪಿಸಲು ಅಲೌಕಿಕ ಶ್ರೇಯಸ್ಸನ್ನು ಉಂಟುಮಾಡುವ ಧರ್ಮವನ್ನು ಪ್ರತಿಪಾದಿಸುವದು ವೇದವೆಂದು ಬೇರೆ ಲಕ್ಷಣವನ್ನೇ ಹೇಳಿರುವರು. ಈ ಗಾಗಾಭಟ್ಟರು ಹೇಳಿದ ಲಕ್ಷಣವನ್ನೇ ಸರ್ವತಂತ್ರ ಸ್ವತಂತ್ರರಾದ ಪರಮ ಪೂಜ್ಯ ವಿದ್ಯಾರಣ್ಯ ಮಹಾಸ್ವಾಮಿಗಳು ತಮ್ಮ ವೇದಭಾಷ್ಯದ ಉಪಕ್ರಮದಲ್ಲಿ ಎತ್ತಿ ತಿಳಿಸಿದ್ದಾರೆ. (ವೇದದಲ್ಲಿ ಹೇಳಿದ್ದೇ ಧರ್ಮವೆಂದು, ಧರ್ಮದ ಲಕ್ಷಣವನ್ನು ಹೇಳಿದರೆ ಸ್ವಪ್ನದಲ್ಲಿ ಕಾಣುವ ಶುಭಾಶುಭ ಕರ್ಮಗಳಿಗೆ ಹೇಳುವ ಫಲಗಳು ಧರ್ಮಜನ್ಯವಾಗಲಿಕ್ಕಿಲ್ಲ ಆ ಸ್ವಾಪ್ನಕರ್ಮಗಳೂ ಶ್ರೇಯಃ ಸಾಧನವಾಗುವದರಿಂದ ಚಿತ್ತಶುದ್ಧಿಯನ್ನುಂಟುಮಾಡುತ್ತವೆ. ಭಗವಂತನಲ್ಲಿ ಭಕ್ತಿಯನ್ನೂ, ವೈರಾಗ್ಯವನ್ನೂ ಮುಂತಾದ ಮನಃಶಾಂತಿಯನ್ನು ಹುಟ್ಟಿಸುತ್ತ ತಪೋಂಗತ್ವವನ್ನು ಪಡೆಯುತ್ತವೆ.)

ಪ್ರಜಾಜನ ರಕ್ಷಕನಾದ ರಾಜನನ್ನು ಆತನ ಅಂಗರಕ್ಷಕರು ಅನುಸರಿಸಿರುವಂತೆ ರಾಜಾಧಿರಾಜನನ್ನೂ, ಆಳುವ ಈ ಪೂಜ್ಯ ವೇದರಾಜನನ್ನು ಶಿಕ್ಷಾ, ಕಲ್ಪ, ವ್ಯಾಕರಣ, ಛಂದಸ್ಸು, ಜ್ಯೋತಿಷ, ನಿರುಕ್ತವೆಂಬ ಆರು ಅಂಗಗಳು ರಕ್ಷಿಸುತ್ತಿವೆಯೆಂದು ಪೂರ್ವಋಷಿಗಳು ಹೇಳಿದ್ದಾರೆ. ಈ ಆರು ಅಂಗಗಳಿಲ್ಲದಿದ್ದರೆ ವಿಶೇಷವಾಗಿ ವಿಚಾರ ಮಾಡಿದರೂ ವೇದಾರ್ಥವು ಸರಿಯಾಗಿ ತಿಳಿಯದೇ ಅದರಲ್ಲಿಯ ಕರ್ಮಗಳ ರೂಪರೇಷೆಯನ್ನೂ, ಇಯತ್ತೆಯನ್ನೂ, ನಿಪುಣ ಮತಿಶಾಲಿಗಳೂ ತಿಳಿಯಲಾರರು.

ಆ ಅಂಗಗಳೊಳಗೆ ಶಿಕ್ಷೆಯು ವೇದದ ಸ್ವರಪಾಠ ಮುಂತಾದ ವೇದಾನು ಪೂರ್ವಿಯನ್ನು ವ್ಯವಸ್ಥೆ ಮಾಡುತ್ತದೆ. ವ್ಯಾಕರಣವೂ, ಛಂದಸ್ಸೂ, ಊಹದ ಜ್ಞಾನ. ವೈದಿಕವಾಕ್ಯದ ಪರಿಮಾಣಗಳನ್ನು ತಿಳಿಸುತ್ತವೆ, ಜ್ಯೋತಿಷವು ಪ್ರಯೋಗಗಳಿಗೆ ಉಪಯುಕ್ತವಾದ ತಿಥಿ, ನಕ್ಷತ್ರ ಮೊದಲಾದ ಕಾಲಗಳ ಜ್ಞಾನವನ್ನು ಉಂಟು ಮಾಡುತ್ತದೆ. ನಿರುಕ್ತವು ಸ್ವತಃ ನೇರವಾಗಿ ವೇದಾರ್ಥ ಜ್ಞಾನವನ್ನು ಹುಟ್ಟಿಸುವದು. ಈ ಐದೂ ಅಂಗಗಳಿಂದ ವೇದಗಳ ಬಾಹ್ಯರಕ್ಷಣೆಯಾಗುವದು.

ಕಲ್ಪ ಸೂತ್ರಗಳು ಹೊರಗೂ, ಒಳಗೂ ವೇದಗಳ ರಕ್ಷಣೆಯನ್ನು ನೀಡುವವು. ಈ ವಿಚಾರವನ್ನು ಭಾಟ್ಟ ಚಿಂತಾಮಣಿ ಮುಂತಾದ ಗ್ರಂಥಗಳಲ್ಲಿ, ಬೇರೆ ಬೇರೆ ಶಾಖೆಗಳಲ್ಲಿ ಹೇಳಿದ ಸಂದಿಗ್ಧವಾದ ವಿಧಿಗಳನ್ನು ಎಲ್ಲಿಯೂ ಉಪಸಂಹಾರ ಮಾಡಿ ನ್ಯಾಯದಿಂದ ಬರುವ ಅರ್ಥವನ್ನೂ, ತಾತ್ಪರ್ಯ ನಿರ್ಣಯವನ್ನೂ ತಿಳಿಸಿ ಹೇಳುತ್ತವೆ, ಎಂಬ ಮಾತಿನಿಂದ ಹೇಳಿದೆ. ಆದ್ದರಿಂದಲೇ ಬ್ರಾಹ್ಮಣ ವಾಕ್ಯಕ್ಕಿಂತಲೂ

तण्डुलपूरणात्पूर्वमुत्तरं च पयसाऽञ्जलावभिघारणं द्विर्द्विः कार्यमिति कारिकायामुक्तम् ।। अत्र कर्तव्यशेषांशः शेषे द्रष्टव्यः ।। १६ ।।

(४ कण्ठसूत्रबन्धः, पाणिग्रहः सप्तपदी च)

**१७ अथ वरो वधूगले मांगल्याभरणं बध्नाति**

"मांगल्यतन्तुनानेन मम जीवनहेतुना ।

कण्ठे बध्नामि सुभगे त्वं जीव शरदां शतम्" इति कण्ठसूत्र बन्धने मन्त्रः । इदं कण्ठसूत्रं वधूः यावज्जीवं नित्यं धारयेत् इत्यर्थः धारयति इति सांप्रदायिकाः ।। १७ ।।

**१८ अथ पुरोधास्तयोरुत्तरीये बध्नाति ॐ नीललोहिते भवतः कृत्याऽऽसक्तिर्व्यज्यते । एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् ।।**

उत्तरीये वधूवरयोः परस्परं बध्नातीत्यध्याहृत्यान्वयः । उत्तरीये पूगीफलहरिद्राखण्डादि ग्रन्थियुते ज्ञेये । उत्तरीये-आच्छादन वस्त्रे । तत्प्रान्तौ अञ्चलौ इति यावत् ।। १८ ।।

**१९ अथैनां वरो दक्षिणहस्ते गृह्णाति 'ॐ मित्रोऽसि' इति ।।**

स्वदक्षिणहस्तेन वधूदक्षिणहस्तं गृह्णीयादित्यर्थः ।। १९ ।।

**२० अथैनां देवयजनमुदानयति - 'ॐ एकमिषे विष्णुस्त्वाऽन्वेतु । द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु । त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु । चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु । पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु । षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु । सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु – इत्युदक् सप्त पदानि ।।**

उदक् - उदगपवर्गं सप्तपदानि उदानयतीत्यन्वयः द्विकर्मकः । एनां देवयजनं - होमस्थानमिति च कर्म ।। २० ::

२१ सप्तमं पदमुपसंगृह्य जपति – ॐ स[1]खासि
सप्तपदा अभूम । सख्यं ते गमेयम् । सख्यात्ते मा योषम् ।
सख्यान्मे मा योष्ठाः' इति ॥

सप्तमं पदं - वध्वाः सप्तमं पदं उपसंगृह्य - ईषत्संस्पृश्य जपति वरः सप्तभिः दक्षिणैरेव पदैः तण्डुलराशिं क्रामयेदिति सम्प्रदायः ॥२१॥

॥ इति बौधायनगृह्यसूत्रे प्रथमप्रश्ने द्वितीयः खण्डः ॥

❋ ॥ अथ तृतीयः खण्डः ॥ ❋

(५ मधुपर्कः, मधुपर्कार्हाश्च )

१ आवेद्यार्घ्यं [2]दद्यात् ॥

आवेद्य - सङ्कल्प्य, स्वसङ्कल्पं ऋत्विगादिपुरतो निवेद्येति यावत् । पूर्वं 'अर्चित इत्यनेन सूचितं मधुपर्कं विवृणोति । अयं मधुपर्कः वराय प्राप्तोऽपि यागादौ ऋत्विगादिभ्यश्चावश्यक इति एकोक्त्या तं कथयति ॥ अर्घ्यः - मधुपर्कः । अर्घाय अर्हं अर्घ्यः ॥ १ ॥

२ मध्येऽगारस्योदीचीनप्रतिषेवणा एरका उ[3]पस्तृणाति ॥

अगारस्य - विवाहार्थं कृतस्य मण्डपस्य ॥ विविक्ते देशे इत्यर्थः । उदीचीनप्रतिषेवणा - उदक् प्रवणा । एरकाः - आसनदर्भान् । उपस्तृणाति - आसादयेत् ॥ २ ॥

३ तासु अहतानि बहुगुणान्युत्तरदशानि वासांस्यास्तीर्य,
तेषु ऋत्विजः प्राङ्मुखा उपविशन्ति ॥

उत्तरदशानि - उत्तराग्राणि । ऋत्विज इत्युपलक्षणं मधुपर्कार्हाणाम् ॥ ३ ॥

४ उत्तरपूर्वेऽगारस्य प्राक्कूलान् दर्भान् सꣳस्तीर्य
तेषु अर्घ्यद्रव्याणि सꣳसादयति ॥

---

१ क. ख ग. ठ. सखायः । २ क. ज ठ. कुर्यात् । ३ क. ज. ठ. उपरतृणीते ।

उत्तरपूर्वे - ईशानदेशे । प्राक्कूलान् - प्रागग्रान् ॥ ४ ॥

**५ यावन्त ऋत्विजः, तावन्ति कांस्यानि पात्राणि सापिधानानि, तावतः कूर्चान् । द्वावन्यौ परिग्राहणीयौ कूर्चौ**

संसादयतीत्यनेनान्वयः । सापिधानानि - आच्छादनपात्रसहितानि । कूर्चान् - ग्रन्थियुतान् पंचसप्तनवान्यतमसंख्यान्दर्भान् ॥ परिग्राहणीयौ - ऋत्विग्भ्यः तत्तत्पदार्थप्रतिग्राहणार्थौ द्वौ पृथक् ॥५॥

**६ दधि-मधु-घृतमापःपयो वस्त्रयुगानि कुण्डलयुगानि गौः गोपयश्चमसं स्रगलङ्करणीयं चेति ॥**

इत्येतानि अर्घ्यद्रव्याणीत्यर्थः । युग शब्दौ प्रत्येकं ऋत्विग्भ्यः युग्मं युग्मं देयमिति प्रदर्शनार्थौ ॥ गोपयश्चमसं - गोदोहनपात्रं । अलङ्करणीयं - अंगुलीयादि ॥ वरोपचारयोग्यद्रव्याणां संग्रहाय च शब्दः ॥ ६ ॥

**७ पवित्रे कृत्वा तूष्णीꣳसꣳस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा, प्रोक्ष्य. कूर्चे कांस्यपात्रं निधाय; तिरः पवित्रं मध्वानयति । तच्च सकृत् ॥**

पवित्र इति द्विवचनं ग्रथितौ द्वौ दर्भौ वक्ति । तूष्णीं - अमन्त्रकं । संस्कृताभिः - उत्तरत्र प्रोक्षणीपात्रसंस्कारोक्तदिशा पाविताभिः ॥ एवं उत्तरत्रापि ज्ञेयम् ॥ एतत्पवित्रं पूर्वपवित्रेभ्योऽन्यदेव । संस्कारानन्तरं विसर्जनीयम् ॥ सकृत् - सकृदेव पूरणीयम् ॥ ७ ॥

**८ दधि पयो वा द्वितीयं, सद्विवृत् ॥**

दधिपयसोः द्वितीयचतुर्थस्थाने विकल्पः ॥ सद्विवृत् - द्विवारं पूरणीयमित्यर्थः ॥ एवमुत्तरत्रापि ॥ ८ ॥

**९ घृतं तृतीयं, सत्रिवृत् ॥**

तृतीयं - तृतीयस्थाने ॥ ९ ॥

**१० यद्द्वितीयं तच्चतुर्थं, सचब्रुवंत् ॥**

द्वितीयस्थाने विकल्पितयोर्मध्ये तत्र पूरितादन्यत् चतुर्थस्थाने पूरणीयमित्यर्थः ॥ १० ॥

**११ आपः पञ्चमी, सपांक्ताः ॥**

पञ्चमी - पञ्चमस्थानीयाः । ताः पञ्चवारं प्रपूरयेत् ॥ पांक्त शब्दः पञ्चसंख्यां वक्ति तानि सर्वाणि मेलयेत् ॥ ११ ॥

**१२ वर्षीयसा तेजोमयेनापिधाय, नाना पुरुषाः अर्घ्यद्रव्याण्याददते, अन्वगनुसंव्रजन्तः ॥**

वर्षीयसा - अधिकप्रमाणवता, अर्घ्यपात्रापेक्षया इति शेषः ॥ तेजोमयेन - कांस्यमयेन पात्रेण । नाना - अनेके सहायकाः । ऋत्विजामनेकत्वात् ॥ अर्घ्यद्रव्याणि - क्रमेण वक्ष्यमाणानि । अन्वक् - यजमानपृष्ठतः अनुसंव्रजन्तः-तमनुसृत्य प्रतिऋत्विजं गच्छन्तः ॥ १२ ॥

**१३ 'कूर्चः' इति प्राह । तं 'सुकूर्चः' इतीतरः प्र[1]ति गृह्णाति ॥**

प्राह यजमानः । ऋत्विजं प्रतीत्यर्थः । इतरः - ऋत्विक् । सुकूर्च इति वदन् गृह्णीयात् ॥ एवमुत्तरत्रापि । सूत्राणि प्रायः प्रयोगरूपाणि, अतएव सुलभानि ॥ १३ ॥

**१४ तं प्रदक्षिणं पर्यस्य उदगावृत्य उपविशति । पुरस्ताच्चैनं प्रत्यञ्चमुपोहते - 'ॐ राष्ट्रभृदस्याचार्या - सन्दी मा त्वद्योषम्' इति ॥**

तं - कूर्चं । प्रदक्षिणं पर्यस्य - आत्मानं परितः प्रादक्षिण्येन परिभ्राम्य । उदगावृत्य - उत्तरत आनीय । पुरस्तात्प्रत्यञ्चं - पूर्वतः पश्चिमदिश उपोहते - उपगूह्याऽऽत्मनाधः स्थापयति । तत्रोपविशति ॥ १४ ॥

---

१ क. प्रत्याह ।

१५ अथास्मा उदपात्र[1]मानीय कूर्चाभ्यां परिगृह्य 'पाद्या आपः' इति प्राह । ता इतरोऽभिमन्त्रयते – 'ॐ आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे । अस्मिन् कुले ब्रह्मवर्चस्यसानि' इति ॥

अस्मै - ऋत्विजे ॥ १५ ॥

१६ दक्षिणं पादं पूर्वं ब्राह्मणाय प्रसारयति । सव्यमि[2]तरस्मै ॥

ब्राह्मणाय - मधुपर्कदात्रे । प्रसारयति - क्षालनाय दद्यात् । ब्राह्मणपदं त्रैवर्णिकपरम् ॥ इतरस्मै - शूद्राय ॥ १६ ॥

१७ स्त्री प्रक्षाळयति । पुमानभिषिञ्चति । विपरीतमेके ॥

पाद्यार्था अप इत्यनुकर्षः । पुमान् - दाता । स्त्री - तत्स्त्री । विपरीतं - अभिषेक प्रक्षाळनकर्त्रोः व्यत्ययं एके समामनन्ति ॥ १७ ॥

१८ [3]नियमात्पत्नीयजमानौ जङ्घे धावयतः ॥

नियमात् - तत्रैकं नियममाश्रित्य । जंघे - पादौ जंघापर्यन्तमित्यर्थः । धावयतः क्षालयतः । अनियमादितिपाठे, तत्र यथेच्छमित्यर्थः ॥ १८ ॥

१९ अवनेक्तुः पाणी सम्मृशति 'ॐ मयि महो मयि भगो मयि भर्गो मयि यशः' इति ॥

अवनेक्तुः - प्रक्षाळयितुः । ऋत्विगिति शेषः ॥ १९ ॥

२० अथाप उपस्पृश्य, 'ॐ मयीन्द्रियं वीर्यं' इत्युरः प्रत्यात्मानं प्रत्यभिमृशते ॥

प्रत्यात्मानं - उरोभिमुखं आत्मानम् ॥ २० ॥

२१ अपो व्रीहिभिर्यवैर्वा समुदायुत्य तथैव कूर्चाभ्यां परिगृह्य 'अर्हणीया आपः' इति प्राह । इतरस्ता

---

१ घ. झ. आदाय । २ क. ग. ठ. शूद्रायेत्यधिकः । ३ ज. ट. अनियमात् ।

**अभिमन्त्रयते - 'ॐ आम आगाद्वर्चसा यशसा स॰सृज पयसा तेजसा च । तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति ॥**

समुदायुत्य - सम्मिश्र्य । तथैव - पूर्ववत् ॥ २१ ॥

**२२ तदेकदेशमञ्जलावानीयमानमनुमन्त्रयते 'ॐ विराजोऽसि विराजो दोहमशीय । मम पद्याय विराजा' इति ॥**

तदेकदेशं - अभिमन्त्रितापां एकभागं । अञ्जलौ - स्वकीयाञ्जलौ । आनीयमानं यजमानेनं सिच्यमान । अभिमन्त्रयते, ऋत्विक् ॥ २२ ॥

**२३ अतिशिष्टाः पराचीर्निनीयमाना अनुमन्त्रयते 'ॐ समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मापरासेचि मत्पयः' इति ॥**

पराचीः - अनभिमुखं निनीयमानाः, यजमानेन ॥ अनुमन्त्रयते वरः ॥ २३ ॥

**२४ अथ तथैव कूर्चाभ्यां परिगृह्य 'उपस्तरणीया आपः' इति प्राह । इतरस्ताः पिबति - 'ॐ अमृतोपस्तरणमसि' इति त्रिः पिबति ॥**

परिगृह्य शुद्धा अपः इति शेषः । त्रिः पिबति - त्रिवारं पिबेदित्यर्थः । अत्र पिबत्यर्थमुद्दिश्य त्रित्वं विहितम् । अतो न मन्त्रावृत्तिः । एवमुत्तरत्र ॥ २४ ॥

**२५ त्रिराचामेत् । त्रिः परिमृजेत् । द्विरित्येके ॥**

अत्र परिमार्जनविध्यर्थं पूर्वसूत्रोक्त त्रिः पिबतीत्यस्यैवानुवादः, त्रिराचामेदिति ॥ न तु आचमनत्रयविधिः ॥ परिमार्जनन्तु त्रिवारं द्विवारं वेति विकल्पः । मुखमितिशेषः ॥ २५ ॥

२६ आचान्तायापावृत्ताय तथैव 'अर्घ्यः' इति प्राह ॥ 'मधुपर्क' इति वा । तदितरो मधुपर्कं प्रोक्तमनुमन्त्रयते 'ॐ त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि । तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति॥

अपावृत्ताय - स्वसम्मुखीभूताय ऋत्विजे । अत्रैकवचनमविवक्षितम् ॥ एवं अत्र सर्वत्रापि ॥ २६ ॥

२७ इतरस्तमुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति - 'ॐ देवस्यत्वा–हस्ताभ्यां प्रतिगृह्णामि' इति ॥

स्पष्टम् ॥ २७ ॥

२८ तस्मिंश्चित् किञ्चिदापतितं स्यात्तदंगुष्ठेन महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति - 'ॐ नेष्टाविद्धं कृन्तामि या ते घोरा तनूः । तया तमाविश योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः' इति ॥

तस्मिन् - मधुपर्कपात्रे । चिदिति सम्भावनायाम् । महानाम्न्या - अनामिकया । उपसंगृह्य - गृहीत्वा । इमांदिशं - नैर्ऋतीं - प्रति ॥ २८ ॥

२९ अथापउपस्पृश्य सर्वाभिरंगुलीभिः [1]समुदायुत्य प्राश्नाति 'ॐ यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम् । तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादी मधव्योऽसानि' इति ॥

समुदायुत्य - आलोड्य । प्राश्नाति - अत्रापि सर्वाभिरंगुलीभि रित्यनुषंगः । समुदिताभिरिति पाठे तदंगुलिविशेषणं, आलोडनंतु आर्थिकम् ॥ २९ ॥

---

१ क. ग समुदिताभिः ।

**३० त्रिः प्राश्य, त्रिरनुपिबेत् । शेषं च कुर्यात् ।।**

अनु - पात्रमनु, पात्रेणेत्यर्थः ।। अत्रोभयत्र मन्त्रोच्चारणं सकृत् ।। शेषं च कुर्यात् - मधुपर्कं पात्रे अवशेषयेत् ।। ३० ।।

तत्प्रतिपत्तिमाह – यमात्मन इति –

**३१ यमात्मनः श्रेयांसमिच्छेत्, तस्मै शेषं दद्यात् ।।**

श्रेयांसं - प्रियं, हितकरमिति यावत् । तस्मै - मित्राय ।। ३१ ।।

**३२ आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्य 'अपिधानीया आपः' इति प्राह । इतरस्ताः पिबति - 'ॐ अमृतापिधानमसि' इति त्रिः पिबति ।।**

अत्र आचान्तायेत्यनेन मधुपर्कप्राशनान्ते प्राप्तमाचमनमनूदितम् । अपावृत्तायेत्यनेन आचमने उदङ्मुखो भवेदिति सूचितम् ।। एवं सर्वत्र ।। ३२ ।।

**३३ त्रिराचामेत्, त्रिः परिमृजेत्, द्विरित्येके ।।**

उक्तार्थम् ।। ३३ ।।

**३४ 'गौः' इति [1]गांदर्शयति इतरस्तामनुमन्त्रयते – 'ॐ गौरस्यपहतपाप्माऽप पाप्मानं नुद मम 'चामुष्य च' इत्युपनेतुर्नामगृह्णाति ।।**

अमुष्य पदस्थाने उपनेतुः - गां दर्शयितुः नाम गृह्णाति – ऊहेत् ।। ३४ ।।

**३५ नाना महर्त्विग्भ्यो गाः प्राह ।।**

महर्त्विग्भ्यः - अध्वर्युब्रह्मादिप्रधानऋत्विग्भ्यः । नाना – अनेकाः गाः प्राह - दर्शयेत् ।। ३५ ।।

---

१ क. ज. ञ. गां प्राह ।

**३६ एकां होतृकेभ्यः ॥ सर्वेभ्यो वा एकां, अविभवत्वात् ॥**

होतृकेभ्यः - इतरेभ्यो ऋत्विग्भ्यः आहृत्य एकाम् ॥ अथवा सर्वेभ्यः आहृत्यैकामेव । कुतः ? अविभवत्वात् - कर्तुः सम्पत्त्यभावे॥ ३६ ॥

**३७ यः प्राह, स तस्मा उपाकरोति ॥**

यः दाता, सः, तस्मै ऋत्विजे - तदर्थमिति यावत् । उपाकरोति शिरस्यभिघारयति, गोरिति शेषः ॥ उपाकरणमत्र अभिघारणादि विशसनपर्यन्तस्योपलक्षणम् ॥ एतत् श्रौते पशौ प्रसिद्धम् ॥ अत्र गोमेधः युगान्तरमात्रविषयः । 'अश्वालम्भं गवालम्भं सन्यासं पलपैतृकम् । देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्' इति स्मृत्या निषिद्धत्वात् । एवमुत्तरत्र एतादृशप्रकरणे ज्ञेयम् ॥ सन्यासं – परमहंसादन्यं । तस्यानिषिद्धत्वेनाचार्यादिभिः गणनात् । अत एवोत्तरसूत्रे तदुत्सर्गं विधत्ते 'यद्युत्स्रक्ष्यन्' इत्यादिना ॥ ३७ ॥

**३८ एकदेशं वपाया जुहोति 'ॐ अग्निः प्रथमः प्राश्नातु ।**
**स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः ।**
**कृणोतु विश्वचर्षणिः स्वाहा' इति ॥**

**३९ एकदेशमुपहरति । इतरस्तत्प्राश्नाति - 'ॐ अग्निः**
**प्रथमः प्राश्नातु । स हि वेद यथा हविः । अरिष्टमस्माकं**
**कृणोतु । असौ ब्राह्मणो ब्राह्मणेषु' इति ॥**

**४० अथ यद्युत्स्रक्ष्यन् भवति तामनुमन्त्रयते - 'ॐ**
**गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनाᳺ स्वसाऽऽ**
**दित्यानाममृतस्य नाभिः । प्रणुवोचं चिकितुषे जनाय**
**मा गामनागामदितिं वधिष्ट । पिबतूदकं तृणान्यत्तु ।**
**ओमुत्सृजत' इति ॥**

यदि उत्स्रक्ष्यन् - इत्येतेन युगान्तरेऽपि ऐच्छिकोयं गोवध इति

सूच्यते ।। अत एव जनकादयः गोमांसरहितमेव मधुपर्कं कुर्वन्ति गृह्णन्ति स्म च ।। ४० ।।

**४१ तस्यामुत्सृष्टायां मेषमजं वाऽऽलभते[1] । आरण्येन वा मांसेन ।। न त्वेवामांसोऽर्घ्यः स्यात् ।।**

मेषः अजो वा गोप्रतिनिधिः ।। नत्वेवेति निषेधमुखो विधिः । मांसरहितं मधुपर्कं न कुर्यात् । मांसाहारिणामेवायं विधिः । शाकाऽऽहारिणान्तु - उत्तरेण सूत्रेणाभिधत्ते ।। ४१ ।।

**४२ अशक्तौ पिष्टान्नं संसिध्येत् ।।**

अशक्तौ दारिद्र्यादिना 'मा हिंस्यात् सर्वाभूतानि' इतिनिषेधाऽऽदरेण वा मनसि मांसखादनप्रीतिराहित्यरूपे अशक्तौ वा ।। ४२ ।।

**४३ सिद्धे 'भूतं' इति प्राह । तत् 'सुभूतं' इतीतरः ।।**

सिद्धे -पिष्टमये लड्डुकादौ दास्यमाने सति इति शेषः ।। ४३ ।।

**४४ तदभिमन्त्रयते - 'भूतꣳसा विराट् । तन्माक्षायि तन्मेऽशीय । तन्म ऊर्जन्धाः । ॐ कल्पयत' इति ।।**

**४५ 'चतुरो नानागोत्रान् ब्राह्मणान् भोजयत' इति ब्रूयात् ।।**

ऋत्विगादिरिति, यजमानमिति च शेषः ।। ४५ ।।

**४६ तेषु भुक्तवत्सु शिष्टमस्मा उपहरति । तत्प्राश्नाति - 'ॐ विराडसि विराडन्नं विराड् विराजो मयि धेहि' इति ।।**

तेषु ब्राह्मणेषु । भुक्तवत्सु, शिष्टं भूतं ।। अस्मै - ऋत्विजे । उपहरति यजमानः ।। ४६ ।।

**४७ भुक्तवद्भ्यो वस्त्रयुगानि कुण्डलयुगानि**

---

१ ज. ठ. आलभेत ।

**गोपयश्चमसं स्रगलङ्करणं इति दद्यात् ।**
**एकधेनुं पष्ठौहीं [1]दम्यावित्येके ।।**

भुक्तवद्भ्यः - भूतभोक्तृभ्यो ऋत्विग्भ्यः । एकधेनुं, पष्ठौहीं - सगर्भां वत्सतरीम् । दम्यौ - तरुणौ । सर्वेभ्यो ऋत्विग्भ्यः - इति शेषः ।। ४७ ।।

**४८ प्राङ्मधुपर्कात् अलङ्करणमेके समामनन्ति ।**

मधुपर्कदानात्प्रागेव उपस्तरणानन्तरं । अलङ्करणदानं एके वदन्ति ।। ४८ ।।

**४९ महयेदृत्विजमाचार्यं च । 'आत्मानं वा एष महयति, यः समृत्विजं आचार्यं महयति । एवं व्रता वा आत्यन्तिकाः स्युः । पतित अननूचान इति निमित्तमतिवरणे ।।**

महयेत् - पूजयेत् । आत्मानं वेत्यादिरर्थवादः । ऋत्विगादीनां मधुपर्कपूजनं आत्मश्रेयसे भवति । तस्मादवश्यं कार्यमिति तदर्थः । एवंव्रताः - एवं मधुपर्कदानशीलाः । आत्यन्तिकाः - अतिश्रेष्ठाः । परन्तु पतितः - कर्मणाव्रात्यः, महापापादिना वा पतितः । अननूचानः - वेदाध्ययनादिरहितः । इति दोषजातं अतिवरणे - मधुपर्काकरणे निमित्तम् । उक्तदोषवद्भ्यः मधुपर्कपूजां न कुर्यादिति भावः ।। ४९ ।।

**५० अग्न्याधेयप्रभृतिषु ऋत्विजो वरयेत् । तथाऽऽचार्येषु इति ।।**

आचार्येषु - केवलमाचार्यवत्सु कर्मसु ।। ५० ।।

**५१ तथैते अर्घार्हाः - ऋत्विक्, श्वशुरः, पितृव्यो, मातुलः, आचार्यो, राजा वा, स्नातकः, प्रियो, वरोऽतिथिरिति ।।**

---

१ ज. दद्यादित्येके ।

श्वशुरादिभ्यः - संवत्सरान्ते पुनरागतेभ्यः । तत्पूर्वमागतेभ्यो विकल्पः स्वसामर्थ्यादिना । वराय विवाह एव । ऋत्विग्भ्यः कर्मणि कर्मणि मधुपर्कं दद्यात् ।। ५२ ।।

।। इति बौधायनगृह्यसूत्रे प्रथमप्रश्ने तृतीयः खण्डः ।।

* ।। अथ चतुर्थः खण्डः ।। *

( सर्वसाधारणाग्निमुखम् ।।)

१ अथ शुचौ समे देशे अग्न्यायतनं शकलेन त्रिः प्राचीनमुल्लिखेत्, त्रिरुदीचीनम् ।।

विवाहहोमार्थं अग्निमुखं कर्म वक्तव्यं, तत्र सर्वेषां होमानां आनुकूल्याय सर्वसाधारणाग्निमुखमेव प्रस्तौति - अथेत्यादिना । अग्न्यायतनं - होमस्थानं, स्थण्डिलमित्यर्थः । शकलेन - शेषे वक्ष्यमाणेन हिरण्याद्यन्यतमेन, लेखनयोग्यसूच्या । प्राचीनं - पूर्वाग्रं, उदीचीनं - उत्तराग्रम् । त्रिस्त्रिरिति उल्लेखनविशेषणम् । उल्लेखनेषु मन्त्राः शेषे वक्ष्यन्ते । इदं स्थलशुद्धये कर्म ।। १ ।।

२ अथाद्भिरभ्युक्ष्य, शकलं निरस्य, अपउपस्पृश्य, याज्ञियात् काष्ठादग्निं मथित्वा, श्रोत्रियागाराद्वाऽऽहृत्य, व्याहृतिभिर्नियु[1]प्य, उपसमाधायोपतिष्ठते - 'ॐ जुष्टो दमूना अतिथिर्दुरोणे । इमं नो यज्ञमुपयाहि विद्वान् ।विश्वा अग्नेऽभियुजो विहत्य । शत्रूयतामाभरा भोजनानि' इति ।।

नियुप्य - स्थण्डिले प्रतिष्ठाप्य । उपसमाधाय - काष्ठानि निक्षिप्य प्रज्वाल्य । उपतिष्ठते - उपस्थानं कुर्यादित्यर्थः ।। २ ।।

३ अथैनं प्रदक्षिणमग्निं परिसमूह्य, पर्युक्ष्य, परिस्तीर्य, प्रागग्रैर्दर्भैः अग्निं परितः परिस्तृणाति । अपिवो –

---

१ ज. न्युप्य ।

[१]दगग्रैः पश्चात् पुरस्ताच्च ॥

पश्चात् पुरस्ताच्च अग्नेः उदगग्रैः परिस्तरणम् । दक्षिणोत्तरयोः प्रागग्रैः परिस्तरणमिति विभज्य ज्ञेयम् । शेषे विस्तृतम् ॥ ३ ॥

४ दक्षिणानुत्तरान् उत्तरानधरान् ॥ यदिप्रागुदगग्राः ॥

दक्षिणस्थपरिस्तरणदर्भान् प्राक् पश्चिमस्थपरिस्तरणोपरि कुर्यात् । उत्तरान् तान् अधः कुर्यादित्यर्थः । यदि शब्देन पितृमेधादिषु दक्षिणाग्रपरिस्तरणे उपर्यधोभाववैपरीत्यं सूचयति ॥ ४ ॥

५ उत्तरेणाग्निं प्रागग्रान्दर्भान्स॒स्तीर्य, तेषु द्वन्द्वं न्यञ्चि पात्राणि सादयति देवसंयुक्तानि । एकैकशः पितृसंयुक्तानि । सकृदेव मनुष्यसंयुक्तानि । 'यत्सह सर्वाणि मानुषाणि' इत्येतस्माद्ब्राह्मणात् ॥

उत्तरेणेति, परिस्तरणाद्बहिरिति ज्ञेयम् । न्यञ्चि - अधोमुखानि । द्वन्द्वं एकैकशः सकृदेवेति पदानि सादयतीत्यनेनानुयन्ति । संयुक्त - पदानि होमेषु तत्तत्सम्बन्धं ज्ञापयन्ति ॥ ५ ॥

६ पवित्रे कृत्वा तूष्णी॒स॒स्कृताभिरद्भिः उत्तानानि पात्राणि कृत्वा, प्रोक्ष्य, विस्रस्येध्मं त्रिः सर्वं प्रोक्षति ॥

पवित्रे - ग्रथिते कुशद्वये इत्यादि पूर्वं व्याख्यातम् । तूष्णीमित्यनेन अमन्त्रकत्वमुक्तम् । सर्वं - पात्रजातं ॥ पात्राणि शेषसूत्रे वक्ष्यन्ते ॥ ६ ॥

७ दर्भेषु दक्षिणतो ब्राह्मणं ब्रह्माणमुपवेशयति ॥ उत्तरत उदपात्रम् । लाजान्निरूप्य ॥

उदपात्रं - प्रणीतापात्रम् । ब्रह्मोपवेशन - प्रणीताप्रणयनादि सर्वं सक्रमं शेषे द्रष्टव्यम् ॥ लाजानिति विवाह एव ॥ अन्यत्र यथाकल्पं चरुः पायसादिकं निर्वापे ऊह्यः ॥ ७ ॥

---

२ क. ज. ञ. ठ उदगग्राः ।

८ अथ तिरः पवित्रं आज्यस्थाल्यामाज्यं निरुप्य उत्तरतोऽङ्गारान्निरूह्य व्यन्तान् कृत्वा तेष्वधिश्रित्य अभिद्योतनेनाभिद्योत्य, द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाळ्य, पुनरभिद्योत्य, उभयं त्रिः पर्यग्निकृत्वा वर्त्म कुर्वन्नुदगुद्वास्य, प्रत्यूह्याङ्गारान्, बर्हिरास्तीर्यासाद्य, अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय, विस्रस्य पवित्रेऽद्भिः सं॒स्पृश्याग्नावनुप्रहरति ॥

आज्यनिर्वापस्य कांश्चिदंशानाह । शिष्टाः शेषे द्रष्टव्याः । व्यन्तान् - अनतिदूरान् परिस्तराद्बहिः, इद्धान् वा ॥ वर्त्म कुर्वन् - कर्षन्निव ॥ ८ ॥

९ अथ स्रुवं स्रुचं दर्वी मेक्षणंच निष्टप्य दर्भैः सम्मृज्य, अद्भिः सं॒स्पृश्य, पुनर्निष्टप्य प्रोक्ष्य निधाय दर्भावद्भिः सं॒स्पृश्याग्नावनु प्रहरति ॥

दर्भैः सम्मृज्येति, इदं बहुवचनं एकभिन्नसंख्यापरं, अन्ते 'दर्भौ' इति वचनात् । शेषे स्रुगादिमार्जने दर्भद्वयस्य कण्ठतः कथनाच्च । अथवा दर्भाभ्यामिति पाठः । स्रुवादिमार्जनक्रमः तै. ब्रा० 'तस्मात्स्रुवमेवाग्रे सम्मार्ष्टि' इत्युक्तः । शेषे विवृतश्चाचार्यैः ॥ ९ ॥

१० अथ शम्याः परिदधाति ॥

शम्याः - गदाकृतीः बाहुमात्राः तिस्रः समिधः । परिदधातीत्यनेनान्वयः ॥ १० ॥

११ खादिरी दर्वी तेजस्कामस्य, औदुम्बरी अन्नाद्यकामस्य, पालाशी ब्रह्मवर्चसकामस्य ॥

कामनाभेदेन दर्वीभेदः । निष्कामस्यापि खादिरीति द्रष्टव्यम् ॥ ११ ॥

१२ अथ हैकेषां विज्ञायते 'निर्ऋतिगृहीता वै दर्वी यद्दर्व्या जुहुयात्, निर्ऋत्याऽस्य यज्ञं ग्राहयेत्, तस्मात् स्रुवेणैव होतव्यं' इति

आज्यहोमः स्रुवेणैव कार्य इत्यभिप्रायकोऽर्थवादः 'निर्ऋति गृहीता - इत्यादिः ।। एकेषां - शाखिनां ब्राह्मणेषु - विज्ञायते ।। १२ ।।

१३ पालाशेन स्रुवेणेत्यात्रेयः ।।

१४ खादिरेणेत्याङ्गिरसः ।।

१५ ताम्रायसेनेत्याथर्वणः ।।

१६ कार्ष्णायसेनाभिचरन् इति सार्वत्रिकम् ।।

ताम्रायसेन - ताम्रधातुमयेन - कार्ष्णायसेन - कृष्णायसधातु-मयेन । सार्वत्रिकं सर्वाभिमतम् । अभिचरन् - शत्रुवधकामः । ।। १५ ।। ।। १६ ।।

१७ अन्यो वाऽस्यैतावत् कृत्वा दम्पत्योरागमनमाकांक्षेत् ।।

इतःपरं विवाहहोमाङ्गान्याह - अन्य इति ।। अन्यः - आचा-र्यादिः, अस्याग्निमुखस्य एतावत् परिधिपरिधानान्तं कृत्वा ।। वा शब्देन वर एवादित अग्निमुखं कुर्यादिति ज्ञाप्यते । युक्तं चैतत्, तदग्नेः स्वकीयत्वेन स्वेनैव तत्कार्यस्य सामञ्जस्यात् ।। स्वयमशक्त-श्चेत् आचार्यं वृणुयात् ।। यदि स्वयमाचार्यकर्म करोति दम्पत्याऽऽ गमनाकांक्षा निवर्तते ।। १७ ।।

१८ अपरेणाग्निमुदीचीनप्रतिषेवणां एरकां साधिवासा-मास्तीर्य तस्यां प्राङ्मुखावुपविशतः, उत्तरतः पतिः, दक्षिणतः पत्नी ।।

अग्निमपरेण - अग्नेः प्रश्चात् । उदीचीनप्रतिषेवणां - उदगग्रां उत्तरप्लवां च । एरकां - आसनरूपां शय्यां । साधिवासां – सुगन्ध

प्रच्छादनपटीयुताम् ॥ उत्तरतः दक्षिणतः- इति तयोरेवपरस्परम् ॥१८॥

१९ अन्वारब्धायां प्रदक्षिणं अग्निं परिसमूहति– "ॐ जुषस्वनः समिधमग्ने अद्यशोचा बृहद्यजतं धूममृण्वन् । उपस्पृशदिव्य॰ सानुस्तूपैः स॰रश्मिभिस्ततनः सूर्यस्य,, इति समिधमाधत्ते॥

इतः पुनः सर्वसाधारण एव प्रयोगः । अन्वारब्धायां पत्न्यां,-इतिशेषः । परिसमूहनादिकं प्रयोगग्रन्थतो ज्ञेयम् । आधत्ते-अग्नाविति शेषः ॥१९॥

२० अथैनमग्निं परिषिञ्चति – "ॐ अदितेऽनुमन्यस्व,, इति दक्षिणतः प्राचीनम् । ॐ अनुमतेऽनुमन्यस्व,, इति पश्चादुदीचीनम् । ॐ सरस्वतेऽनुमन्यस्व,, इति उत्तरतः प्राचीनम् । ॐ देवसवितः प्रसुव,, इति समन्तं प्रदक्षिणम् । समन्तमेव वा तूष्णीम् ॥

परिषेचनक्रमोऽयम् । इदं पूर्वपरिषेचनं, उत्तरपरिषेचने तु मन्त्रा भिन्नाः। दक्षिणत इत्यादि अग्निमभिव्याप्य दिग्वचनम् । प्राचीनमित्यादितु अपवर्ग वाचकम् ॥ समन्तमेववेति, व्यवस्थितविकल्पोऽयम् । पैतृमेधिकादिषु तूष्णीमेव समन्ततः । अन्यत्र समन्त्रकं उक्तप्रकारेणैवेति ॥२०॥

२१ अथेध्ममभ्यज्य परिसमिधं शिनष्टि । ससन्नहनां एकां समिधं प्रणीतायां निधाय, स्वाहाकारेण हुताशनं ध्यात्वाऽभ्याऽऽधाय, अथाऽऽघारावाघारयति– ॐ प्रजापतये स्वाहा,, इति मनसोत्तरे परिधिसन्धौ स॰स्पृश्याक्ष्ण्या सन्ततम् ॥

इध्मं =पंचदशसंख्यं । परिसमिधं =षष्ठं परिधिं परिशिनष्टि । ससन्नहनां =द्वादशदर्भकृतरज्जुनाऽऽवेष्टितां । रज्जुश्च शिवजटाकारः । एकां स्फयाख्यांच तदुभयमपि प्रणीतायां निधायेत्यन्वयः ॥ इध्ममित्यस्य स्वाहाकारेणाभ्याधायेत्यनेनान्वयः । मनसा-इति प्रजापतये इतिमन्त्रं मनसैवोच्चारयेत् । स्वाहातुउच्चैः । प्रजापतिमंत्रं तूष्णीं,, इति नियमः । अयमाघारहोमः यज्ञस्यशिर इत्युच्यते । स॰स्पृश्य,स्रुवमितिशेषः । अक्ष्ण्या अक्षीणया

सन्ततं ईकारलोपश्छांदसः । यथा कर्णरेखोत्पत्तिः तथाऽविच्छिन्नं । उत्तरपरिधिसंधिमारभ्य अग्निमध्यपर्यन्तं सन्ततधारया जुहुयादिति यावत् । एवमन्यामपि ॥२१॥

२२ इन्द्राय स्वाहा,, इत्युपांशु दक्षिणे परिधिसन्धौ संस्पृश्य अक्ष्णया सन्ततम् ॥

उपांशु=स्वोक्तमन्यो न श्रृणुयात् यथा तथा । अक्ष्णयेत्यादि पूर्ववत् इदं आहुतिद्वयमाघारसंज्ञितम् आघारस्य ऋजुत्वं सान्तत्यं च धर्मः ॥२२॥

२३ अथाज्यभागौ जुहोति– अग्नये स्वाहा,, इत्युत्तरार्धपूर्वार्धे । सोमाय स्वाहा,, इति दक्षिणार्धपूर्वार्धे ॥ प्रतिमुखं प्रबाहुग्जुहोति ॥

आज्यभागौ तन्नामानौ यागविशेषौ । उत्तरपूर्वार्धे=ईशानभागे । दक्षिणार्धपूर्वार्धे= आग्नेयभागे । प्रतिमुखं=आत्मसम्मुखं हस्तं प्रबाहुक्=समं यथा भवति तथा । उभयोराहुत्योः पंक्तिरूपत्वं परिमाणवैषम्यं च वारयितुं साम्यविधानम् प्रबाहुगिति । आज्यभागौ यज्ञस्य चक्षुषी ॥ "चक्षुषी वा एते यज्ञस्य यदाऽऽज्यभागौ,, (तै. सं. २.६.२.) इति श्रुतेः ॥ अत एव तयोः पूर्वार्धे हवनम् ॥ " शिरसः पूर्वभागे चक्षुषी तिष्ठतः- इति सा० भाष्यम् ॥२३॥

॥ इति प्रथमप्रश्ने चतुर्थः खण्डः ॥

## * पञ्चमः खण्डः *

### ( ७ अग्निमुखाङ्गहोमः )

१ अथाग्निमुखं जुहोति –[ द्वादशभिः ]

" ॐ युक्तोवह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान् पुरुषान् सनेमि स्वाहा ॥१॥

ॐ चतस्र आशाः प्रचरन्त्वग्नय इमं नो यज्ञं नयतु प्रजानन् । घृतं पिन्वन्नजरंसुवीरंब्रह्म समिद्भवत्याहुतीनांस्वाहा ।२।

ॐ आनोभद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवानो यथा सदमिद्वृधेऽसन्नप्रायुवो रक्षितारो दिवे दिवे स्वाहा ॥३॥

ॐ विरूपाक्ष मा विबाधिष्ठा मा विबाध विबाधिथाः। निर्ऋत्यै त्वा पुत्रमाहुः सनः कर्माणि साधय स्वाहा ।.४॥

ॐ विरूपाक्षमहं यजे निजङ्घ०शबलोदरम् ।
यो माऽयं परिबाधते श्रियै पुष्ट्यैव नित्यदा तस्मै स्वाहा,।५।

ॐ यातिरश्चीनिपद्यसेऽहं विधरणी इति ।
तां त्वा घृतस्य धारयाग्नौ स०राधिनीं यजे स्वाहा, ॥६॥

ॐ सं० राधिन्यै देव्यै स्वाहा।७।ॐ प्रसाधिन्यै देव्यै स्वाहा,८
ॐ भूः स्वाहा ॥९॥ ॐ भुवः स्वाहा, ॥१०॥ ॐ०सुवः स्वाहा, ।११। ॐ भूर्भुवः सुवः स्वाहा इति ॥१२॥

२ [१] इत्येतावान् सर्वदर्वीहोमानां आघारवतामेष कल्पः समानः ॥

एतावान् शुचौ समेदेशे इत्यादिः अग्निमुखाहुत्यन्तः। दर्वी होमानां=चरु होमवतां, आघारवतां=आघाराहुतिमतां पाकयज्ञानां एष कल्पः=अयं विधिः समानः। आघारवतामित्यनेन आपूर्विकतन्त्रनिरासः ॥२॥

॥ इति प्रथमप्रश्ने पञ्चमः खण्डः ॥

* षष्ठः खण्डः *

( ८ विवाह होमः )

१ अथास्या उपोत्थाय दक्षिणेन हस्तेन दक्षिणमंसं प्रतिबाहुं अन्वगवहत्य हृदयदेशमभिमृशति– ॐ मम हृदये

---

१ क. ग. ङ. ठ. पुस्तकेषु मात्रमिदं सूत्रम् ।

हृदयन्ते अस्तु मम चित्ते चित्तमस्तुते । मम वाचमेकमनाः शृणु मामेवानुव्रता सहचर्या मया भव, इति ।

इदानीं विवाह होमे विशेषः कथ्यते -अथेति ।। अस्याः = वध्वाः, तस्या उत्थितायाः, दक्षिणमंसमित्यनेनान्वयः । उपोत्थाय = किञ्चिदुत्थाय । अभिमृशति-वामहस्तेनेति बहवः । प्रतिबाहुं = बाहुंलक्षीकृत्य, अन्वगव हत्येत्यनेन दक्षिणांसमावृत्यागतेन दक्षिणहस्तेनैवेति अस्मत्पितृ चरणाः ।।१।।

२ अथास्या दक्षिणकर्णे जपति-

ॐ मान्ते मनः प्रविशतु मां चक्षुर्मामु ते भगः ।
मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ।।

ॐ मधुहे मध्वगाहे जिह्वा मे मधुवादिनी ।
मुखे मे सारघं मधु दत्सु संवननं कृतम् ।।

ॐ चाक्रवाकꣳ संवननं यन्नदीभ्य उदाहृतम् ।
यद्वित्तौ देवगन्धर्वौ तेन संवनिनौ स्वः ।।

ॐ स्पृशामि तेऽहमङ्गानि वायुरापश्च मा परः ।
मां चैव पश्य सूर्यं च माचान्येषु मनः कृथाः ।।

ॐ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ।।

ॐ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्‌ग्नये ।
रयिंच पुत्राꣳ श्चादादग्निर्मह्यमथो इमाम् ।।

ॐ सरस्वति प्रेदमव सुभगे वाजिनीवति ।
तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः ।। इति

३ अथास्या दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानꣳहस्तꣳसांगुष्ठं अभीव लोमानि गृह्णाति- ॐ गृभ्णामि ते सुप्रजास्त्वाय

हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः,, इति

अस्या दक्षिणहस्तमुत्तानमित्यन्वयः । नीचा=अधोमुखेन, स्वस्य दक्षिणेन हस्तेन, सांगुष्ठं=अगुष्ठसहितं, अभीव लोमानि=लोमाभिमुखं यथा तथा गृह्णातीत्यन्वयः ॥३॥

४ अथैनां प्रदक्षिणमग्निं पर्याणयति— ॐ परित्वाग्ने पुरं वयं विप्र॰सहस्य धीमहि । धृषद्वर्णं दिवे दिवे भेत्तारं भङ्गुरावतः,, इति ॥

प्रदक्षिणमग्निं= अग्नेः प्रादक्षिण्येन । पर्याणयति=भ्रामयति । अनेन स्वयं तस्या हस्तं गृहीत्वैव प्रदक्षिणं कुर्यादित्यर्थः सिध्यति ॥४॥

५ तथोपविश्य अन्वारब्धायां अस्यां एकादश उपयमनीर्जुहोति

तथोपविश्य=पूर्ववदुपविश्य । उपयमनीति तन्मन्त्राणां संज्ञा ।

ॐ अग्ने शर्धमहते सौभगाय । तवद्युम्नान्युत्तमानि संतु । सञ्जास्पत्य॰ सुयममा कृणुष्व । शत्रूयतामभितिष्ठा महा॰सि स्वाहा,, ॥१॥

ॐ सोमाय जनिविदे स्वाहा,, २॥ ॐ गन्धर्वाय जनिविदे स्वाहा ॥३॥

ॐ अग्नये जनिविदे स्वाहा ,, ४॥ ॐ कन्यला पितृभ्यो यती पतिलोकमव दीक्षामदास्थः स्वाहा,, ॥५॥

ॐ प्रेतो मुञ्चाति नाऽमुतः सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वः सुपुत्रा॰ सुभगा सतीस्वाहा,, ॥६॥

ॐ इमां त्वमिन्द्रमीढ्वः सुपुत्रा॰ सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि स्वाहा,, ॥७॥

ॐ अग्निरैतु प्रथमो देवताना७ सोऽस्यै प्रजां मुञ्चतु मृत्यु पाशात् । तदय७ राजा वरुणोऽनुमन्यतां यथेय७ स्त्री पौत्रमघं नरोदात्स्वाहा,, ॥८॥

ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुध्य-तामिय७ स्वाहा,, ॥९॥

ॐ माते गृहे निशिघोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजा७ सुमनस्यमाना स्वाहा,, ॥१०॥

ॐ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामिपाश७ स्वाहा ,' ॥११॥

६ अथैनामुत्थाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति-

–,‘ ॐ आतिष्ठेममश्मान मश्मेव त्व७स्थिरा भव ।
अभितिष्ठ पृतन्यतः सहस्व पृतनायतः ,, इति ॥

आस्थापयति- इत्यनेन तां गृहीत्वा अश्मास्थापनं कारयतीत्यर्थलाभः स्वकरेण तस्याः पदं गृहीत्वाऽऽस्थापयतीति यावत् ॥६॥

७ अथ यथागतं पुनरानीयास्या अञ्जलौ उपस्तृणीते । तस्याः सोदर्यो तत्र द्विर्लाजानावपति । तानभिघार्यं जुहोति-

,, ॐ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिर्जीवातु शरदः शत७स्वाहा,, इति ॥

यथागतं=अश्माऽऽस्थापनार्थं येन पथागतं, तेनैव पुनः प्रत्यानीयेत्यर्थः । उपस्तृणीते = अभिघारयति । दर्वी स्थाने अञ्जलिः । सोदर्यो=अनुजः, ज्येष्ठो वा भ्राता । द्विर्लाजानावपति अञ्जलौ, वरः तदञ्जलि-मादाय अञ्जलेर्वामपार्श्वेन जुहोति । अत्राञ्जलिभेदो न कार्यः ॥७॥

८ अथैनां प्रदक्षिणमग्निं तथैव पर्याणयति- " ॐ तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतु ना सह । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह" इति ।

९ तथैवाऽऽस्थापयति , तथैव जुहोति ॥

१० अथैनां पुनरेव प्रदक्षिणमग्निं पर्याणयति- "ॐ पुनः पत्नी-मग्निरदादायुषा सहवर्चसा । दीर्घायुरस्या यः पतिः स एतु शरदः शतम् ॥इति॥

११ तथैवास्थापयति तथैव जुहोति ॥

१२ अथैनां पुनरेव पर्याणयति-" विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥इति॥

अत्र अश्माऽऽस्थापनं, लाजहोमः, प्रदक्षिणं चेति त्रिस्त्रिर्भवन्ति ॥ स्पष्ट मन्यत् ॥१२॥

॥ इति प्रथमप्रश्ने षष्ठः खण्डः ॥

## सप्तमः खण्डः

## (९ विवाहे अग्निमुखशेषकर्माणि)

१ अथ तथोपविश्यान्वारब्धायां लाजैः स्विष्टकृतं हुत्वा, अति शिष्टां समिधमाधाय, जयानभ्यातानान् जुहोति- "यद्देवा देवहेडनमिति ॥

लाजैः स्विष्टकृतं, अञ्जलावभिघारणादि समानं, लाजावपनं तु एकवार-मेव । अन्यत् स्विष्टकृद्धर्मः । अतिशिष्टामित्यादि सर्वाग्निमुखसमानम् । अतिशिष्टां = प्रणीतायां स्थापितां षष्ठपरिधिरूपां अनूयाजाख्याम् ॥ जयान् = चित्तञ्चेत्यादि त्रयोदश । अभ्यातानान् = अग्निर्भूताना-मित्यादि सप्तदश । राष्ट्रभृतः = ऋताषाडित्यादि द्वाविंशति मन्त्रान् ॥ अमात्य होमान् = यद्देवा देवहेडनमित्यादि विंशतिमन्त्रान् ॥ " जयाऽ भ्यातानराष्ट्रभृदमात्यहोमेषु आदौ द्वेमिन्द्राहुती जुहुयात् " इतिशेषे ॥१॥

२ अथ प्राजापत्यां जुहोति "प्रजापते नत्वत्,, इति ॥

३ अथ सौवि[1]ष्टकृतं जुहोति-"ॐ यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मेऽग्नये स्विष्टकृते सुहुत हुत आहुतीनां कामानां समर्धयित्रे स्वाहा,, । इत्युत्तरार्धे पूर्वार्धे ॥

४ अथ स्रुवेण परिधीननक्ति ॥

५ अथ परिस्तरान् समुल्लिप्य आज्यस्थाल्यांप्रस्तरवत्बर्हिरङ्क्त्वा तृणं प्रच्छिद्याग्नावनुप्रहरति ॥

समुल्लिप्य = आज्येनाभिघार्य । उद्धृत्य प्रागादिक्रमेणेति शेषः । प्रस्तरवत् = दर्भमुष्टिमिव । अयं क्रमः श्रौतसूत्रे उक्तः । बर्हिः शब्दः परिस्तरणदर्भान् वक्ति ॥ तृणं = एकं दर्भं । प्रच्छिद्य = पृथक् कृत्य, तस्यान्ते पृथक् प्रहरणं कार्यम् ॥५॥

३ अथ शम्या अपोह्य । तथैव परिषिञ्चति -" अन्वमंस्थाः । " प्रासावीः ,, इति मन्त्रान्तान् सन्नमयति ॥

शम्याः =परिधीन्, अपोह्य=प्रहृत्य । प्रहरणक्रमः शेषे स्पष्टः । तथैव = पूर्वोक्तक्रमेण । अनुमन्यस्वस्थाने " अन्वमंस्थाः ,, इति, "प्रसुव,,इति स्थाने "प्रासावीः,, इति च परिषेचनमन्त्रान्ते सन्नमयति =ऊहते ॥६॥

७ अथ प्रणीताभ्यो दिशो व्युन्नीय ब्रह्मणे वरं ददाति गां ब्राह्मणेभ्यः ॥

प्रणीताभ्य प्रणीताजलैः । दिशः प्रागादि चतस्रः ऊर्ध्वं च । व्युन्नीय मार्जयित्वा । शेषे वक्ष्यमाणमन्त्रैः तत्रोक्तरीत्या च ॥ वरं गां । सर्वत्र दक्षिणार्थत्वेन गां दद्यादिति शेषांशार्थः ॥७॥

८ स एष आघारवान् दर्वी होमः ॥ स्पष्टम् ॥८॥

---

1 क. ठ. सौविष्टकृतीं

( १० आग्निहोत्रापूर्विकयोः दिग्दर्शनम् )

९ अथापरः- परिसमूह्य पर्युक्ष्य परिस्तीर्य, आज्यं विलाप्योत्पूय स्रुक् स्रुवौ निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान् समनुद्रुत्य सकृदेवाहुतिं जुहोति । द्विर्जुहोति द्विर्निर्मार्ष्टि द्विः प्राश्नाति । उपसृप्याचामति । निर्लेढि, इत्येष आग्निहोत्रिकः ॥

सूत्रं प्रयोगरूपेणैवास्ति । सर्वान् मन्त्रान् समनुद्रुत्य=एकश्वासेन पठित्वा यस्मिन् कर्मणि यावन्तो मन्त्रास्तान् सर्वान् ( स्वररहितान् ) एकस्वरेणोक्त्वा सकृदेवाज्यं जुहुयात् ॥ एवं द्विः जुहोति । द्विवारं निर्मार्ष्टि = स्रुचा स्रुवं सम्मृज्यात् । तच्छेषं द्विः प्राश्नाति । ततः उपसृप्य = प्राशनदेशादन्यत्र उपक्रम्य आचामति । प्राश्नातीत्यस्यैव विवरणं निर्लेढीति । प्राशनं =लेहनरूपमित्यर्थः । अयं आग्निहोत्रिकः- अग्निहोत्रे औपासनादौ उपयुक्तः ॥ विशेषतः श्रौते ॥ १ ॥

१० अथापरः-परिसमूह्य पर्युक्ष्य परिस्तीर्य हविर्निर्वापणादि सिद्धम् ॥

सिद्धं = आघारवत्तन्त्रोक्तम् ॥ १० ॥

११ चतस्रः समिधोऽभ्याधाय प्राकृतेन हविषा तत्तदुक्तमन्त्राभ्यां पक्वं, नाममन्त्रेण वा, आद्यन्तयोर्भिन्दाव्याहृतयः मध्ये कर्माम्नातं, अग्निः स्विष्टकृत् ॥

प्राकृतेन कल्पोक्तेन । अयमापूर्विको दर्वीहोमः । अत्र विशेषस्तु शेषे वक्ष्यते ॥

१२ तत्रोदाहरन्ति-

" न परिधिर्नच ब्रह्मा न प्रणीता न बर्हिषः ।

न च स्विष्टकृतादीनि तन्त्रमापूर्विकं स्मृतम् ॥

न च स्विष्टकृत्=मन्त्रेण स्विष्टकृन्निषेधः । नाममन्त्रेणतु "अग्निः स्विष्टकृत्,, इत्युक्तत्वादस्ति ॥ आदिपदेन शेषसूत्रे निषिद्धाः ज्ञेयाः ॥

" आघारं प्रकृतिं प्राह दर्वीहोमस्य बादरिः ।।
आग्निहोत्रं तथाऽऽत्रेयः काशकृत्स्नस्त्वपूर्वताम् ।।

सर्वस्यापि दर्वीहोमस्य आघारं = आघारहोमवत्तन्त्रं प्रकृतिं = मूलं इति बादरिराचार्यो मन्यते । तथा आग्निहोत्रिकं तन्त्रं अपूर्वतां अपूर्वतन्त्रं प्रति तथा = प्रकृतिरिति आत्रेयः काशकृत्स्नो मन्यते ।।

" अशक्तः सङ्कटे रोगे द्रव्याभावे नृपाह्वये ।
कुर्यादापूर्विकेणैव सुकृता चैव सा भवेत् ।। "

सर्वत्र पाकसंस्थाः आघारवत्तन्त्रेणैव कुर्यात् ।। किन्तु अशक्त्यादि निमित्ते सत्येव आपूर्विकतन्त्रेण कुर्यात् । तदा सा सुकृता = सम्यक् कृता भवति नान्यथेति भावः ।। १२ ।।

१३ अथापरः– परिसमूह्य पर्युक्ष्य परिस्तीर्य यावदाम्नात माज्यहुतीर्जुहोति, आद्यन्तयोः व्याहृतीः, इत्येष ह्यपूर्वः ।।

अपरः = अपूर्व तन्त्रात्मकः । यावदाम्नातं = तत्तत्कल्पोक्ताः आज्याहुतीः ।। आदौ अन्तेच व्याहृतिहोमः । अत्र तन्त्रे दर्वी नास्ति । आग्निहोत्रिकवत् स्रुक् स्रुवावेव नतु द्विरवदान लेपन लेहनादि नास्ति । अंशमात्रं प्रकृति विकृति भावः । तथाच चरु-पायस-होम-सद्भावे इदं तन्त्र न कर्तव्यम् । आज्येत्युपलक्षणं चरुभिन्नानां द्रव्याणां होमेषु इदं तन्त्र कुर्यात् ।। १३ ।।

१४ तान् न मिथः संसादयेत् ।। अनादेशात् ।।

तान् – आघारादि चतुस्तंत्रात्मकान् मिथः = परस्परं न संसादयेत् = न मिश्रीकुर्यात् । अनादेशात् = विध्यभावात ।। १४ ।।

।। इति प्रथमप्रश्ने सप्तमः खण्डः ।।

## * अष्टमः प्रश्नः *

## ( वधूप्रवेशः नक्षत्रध्रुवारुन्धतीदर्शनं च )

१ अनुनयन्त्येतमग्निम् ॥

एतमग्निं = औपासनाग्निं, अनुनयन्ति = वधूगृहप्रवेशसमये पृष्ठतो नयेयुः । अत्र शिष्टाः समिदादौ समारोप्य नयन्ति ॥ १ ॥

२ अथैनां पितुरङ्कादुद्वहति, गुरोर्वा– ॐ ये वध्वश्चन्द्रं वहतु यक्ष्मायन्ति जनाऽअनु । पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः,, इति ॥

पितुः=मातुः पितुर्वा । अङ्कात् उत्संगात् उत्सङ्गगतां एनां=वधूं । गुरोर्वा = वृद्धबन्धवादेः ॥ उद्वहति = पाणिं गृहीत्वा उत्थापयति ॥ २ ॥

३ अथैनां दक्षिणहस्ते गृहीत्वा स्वरथमारोप्य स्वान् गृहानानयति– " ॐ पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहताऽ रथेन । गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि ,, इति ॥

स्वदक्षिणहस्तेन तस्या दक्षिणहस्ते गृहीत्वा एनां इत्यस्य स्वरथं आरोप्येत्यन्वयः । अनेन यानादिकमारोप्यैव वधूं स्वगृहं नयेदिति ज्ञायते ॥ ३ ॥

४ पन्थानमनुमन्त्रयते –" ॐ सुगं पन्थानमारुक्षमरिष्टऽ स्वस्तिवाहनम् । यस्मिन् वीरो नरिष्यत्यन्येषां विन्दते वसु,, इति ।

पन्थानं गच्छन्, पुनः पन्थानं इति आवृत्य, तस्य अनुमन्त्रयते इत्यन्वयः ।

५ ओषधिवनस्पतयो नद्यो वनानि, तान्यनुमन्त्रयते– "ॐ या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना । ते त्वा वधु प्रजावतीं प्रत्वे मुञ्चत्वऽ हसः ,, इति ।

पथिप्राप्तान् ओषध्यादीन् अनुमन्त्रयते = दृष्ट्वा जपति ॥ यदि तेषां

प्राप्त्यभावे अनुमन्त्रणाभावः । विषयाऽभावात् । यद्येकतमप्राप्तावपि अनुमन्त्रणं कुर्यादेव ।। मन्त्रे ऊहो न ।। ५ ।।

६ अथ जायामानीय स्वान् गृहान् प्रापयति – ॐ भद्रान् गृहान् सुमनसः प्रपद्ये वीरघ्नी वीरवतः सुवीरान् । इरां वहतो घृतमुक्षमाणास्तेष्वहꣳ सुमनाः संविशानि,, इति ।

७ अथैनां कल्याणीं वाचं वाचयति–' ॐ प्रजावती पशुमती पुष्टिमती रयिमती तेजस्विनी गृहमेधिनी ब्रह्मवर्चस्विनी भूयासम्,, इति ।।

८ अथैनामानडुहे चर्मण्युपवेशयति– " ॐ इहगावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणा रायस्पोषो निषीदतु,, इति ।।

९ अत्र आभ्याममात्या व्रीहितोक्मान्यारोपयन्ते ।।

अत्र = तदा, आभ्यां दम्पतीभ्यां षष्ठयर्थे चतुर्थी, अमात्याः = बान्धवाः सुवासिन्यः, "व्रतामात्यशब्दौ बन्धुवाचकौ ,, इति सायणाचार्याः ।। तोक्मानि = हरितानि अङ्कुराणि । आरोपयन्ते = शिरसि क्षिपेयुः ।।९।।

१० अथ वाचं यच्छतः आनक्षत्राणामुदयात् ।।

वाचं यच्छतः = मौनं भजतः ।। आङ् मर्यादायाम् ।। १० ।।

११ अथाहोरात्रयोः सन्धिमीक्षमाणामेनामनुमन्त्रयते– "ॐ नीललोहिते भवतः कृत्या सक्तिर्व्यज्यते । एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् ,, इति ।

सन्धि - सन्ध्यासमयं, ईक्षमाणां – प्रतीक्षमाणां । अनुमन्त्रयते – पश्यन् जपति ।। ११ ।।

१२ अथोदितेषु नक्षत्रेषु वाचं विसृज्य वत्समन्वारभ्योत्तिष्ठेते–"ॐ उदायुषा स्वायुषो दोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थादमृताꣳ अनु ,, इति ।।

वाचं विसृज्य मौनं परित्यज्य वत्सं = गोवत्सं ॥ १२ ॥

१३ अथोपनिष्क्रम्य ध्रुवमरुन्धतींच दर्शयति- "ॐ ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवमसि ध्रुवतः स्थितः । त्वं नक्षत्राणां मेथ्यसि समा पाहि पृतन्यतः ,, "ॐ सप्तर्षयः प्रथमां कृत्तिकाना मरुन्धतीं यध्द्रुवता॰ हनिन्युः । षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकमेधत्वष्टम्यरुन्धती ,, इति ॥

च शब्दात् सप्तर्षीन् ॥ १३ ॥

इति प्रथमप्रश्ने अष्टमः खण्डः ॥



## * नवमः खण्डः *

## ( १२ विवाहव्रतम् )

१ अथ विवाहस्याऽऽरुन्धत्युपस्थानात्कृत्वा व्रतमुपैति ॥ आज्याक्तपालाशसमिधोऽभ्यादधाति – "ॐ अग्ने व्रतपते [1]वैवाहं व्रतं चरिष्यामि तच्छकेयं तन्मेराध्यता॰ स्वाहा,, ॐ वायोव्रतपते÷ ,, ॐ आदित्य व्रतपते॰, ÷,, ॐ व्रतानां व्रतपते÷ ,, इति ॥

अरुन्धतीदर्शनादिकं विवाहाङ्गमेव । तदनन्तरं विवाहव्रतारम्भः ॥ इदं वधूप्रवेशानन्तरं पूर्वं वा कर्तुं शक्यम् ॥ विवाहहोमानन्तरमाचार्यैः वधूप्रवेशकथनात् विकल्पो ज्ञायते ॥ अग्ने व्रतपते व्रतंचरिष्यामि, - इत्यादिः संहितापाठः । आचार्यैः व्रतमित्यस्य विशेषणत्वेन वैवाहं ,, इति पदं अध्याहृत्य मन्त्रः पूरितः । किञ्च " वायो व्रतपते इत्यादिषु व्रतं चरिष्यामि,, इत्याद्यंशः अनुषज्य पूरितः । " वाक्यस्य परिपूर्तये शब्दान्तरमनुषज्यते, तथा प्रयोगोपपत्तयेऽनुषंगोन्यायः,, इति सायणभाष्यम् ॥ एवमुत्तरत्रापि ज्ञेयम् ॥

---

१ ज, ञ, उपयमनं

२ उभौ जायापती व्रतचारिणौ ब्रह्मचारिणौ भवतः । अधः शयाते ।। व्रतधर्मा वक्ष्यन्ते । ब्रह्मचर्यमष्टाङ्गमैथुनवर्जनम् ।।२।।

३ तयोः शय्यामन्तरेणोदुम्बरो दण्डो गन्धानुलिप्तः वाससा सूत्रेण वा परिवीतस्तिष्ठति, आपक्वहोमात् ।।

शय्यामन्तरेण = शय्ययोर्मध्ये । आपक्वहोमात् = चतुर्थी होमपर्यन्तम् ।।

४ त्रिरात्रं व्रतं चरतः ।। काम्येषु दिननियमो वक्ष्यते ।।४।।

५ चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य दण्डमुत्थापयति– " ॐ ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह । त्वया वयमिषमूर्जं वदन्तो रायस्पोषेण समिषामदेम ,, इति।।

पक्वहोमः उत्तरखण्डे एव वक्ष्यते । दण्डस्य प्रक्रान्तत्वात् तत्सम्बन्धि विचारः एव प्रस्तुतः ।।५।।

६ अथैनं वध्वै प्रयच्छति– ॐ प्रजयात्वा स॒ंसृजामि मासरेण सुरामिव ,, इति ।

७ तं वधूः प्रतिगृह्णाति– " ॐ प्रजावती भूयासं ,, इति ।।

८ अथैनं वराय प्रतियच्छति– ,, ॐ प्रजया त्वा स॒ंसृजामि मासरेण सुरामिव,, इति ।। तं वरः प्रतिगृह्णाति– " ॐ प्रजावान् पशुमान् भूयासम् ,, इति ।।

९ अथैनं स्थूणादेशे निदधाति, अन्तिके न प्रतिपद्यते ।।

स्थूणादेशे = स्तम्भोपरि । एनं = दण्डं । अन्तिके = समीपे । यथा सदण्डः अन्येन न लभ्येत तथा गोपायेत् ।।९।।

१० प्रसिद्धमुपसंवेशनम् ।। प्रसिद्धं = उत्तरखण्डे वक्ष्यमाणम्

( १३ पञ्चमेहनि स्थालीपाकः )

११ श्वोभूते दण्डमादाय पुण्याहं वाचयित्वाप्सु विसर्जयति।।

श्वोभूते = परेहनि । पञ्चमे दिने इत्यर्थः ।।११।।

१२ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति– ‹‹ ॐ अग्निर्मूर्धा – भुव इति द्वाभ्याम् ।।

दण्डविसर्जनप्रसंगेन तच्छेषभूतं स्थालीपाकहोमादिकं कथयति ।

१३ स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् ।।

शेषे वक्ष्यमाणं मनसि निधाय सिद्धमित्युक्तम् । एवमुत्तरत्रापि ।।

१४ स एष पार्वणो भवति । पर्वणि पर्वणि चायं स्थालीपाकः कार्यः ।।

स एष स्थालीपाकहोमः पार्वणसञ्ज्ञो भवति । यतः अन्वारम्भणानन्तरं पर्वणोः दर्शपूर्णमासयोरयमेव होमः कर्तव्यः ।।

१५ अथास्तमित आदित्येऽन्योन्यमलंकृत्योपरिशय्यां शयाते ।। उपरि शय्यां = शय्याया उपरि ।।

१६ अथ वधूमभिमन्त्रयते– ‹‹ ॐ सुमङ्गलीरियं वधूरिमा॰ समेत पश्यत । सौभाग्यमस्यै दत्वा याथास्तंविपरेतन,, इति

१७ अथैनां सर्वसुरभिगन्धया मालया युनक्ति- ‹‹ॐ सन्नाम्न : स॰हृदयानि । सन्नाभिः सन्तनु त्वचः । सन्त्वा कामस्य योक्त्रेण । युञ्जाम्यविमोचनाय,, इति ।।

अत्र शय्यासनादिकं यथा ब्रह्मचर्यविरोधो न भवेत् तयानुष्ठेयम् ।।

।। इति प्रथमप्रश्ने नवमः खण्डः ।।

## * दशमः खण्डः *

### ( १४ चतुर्थीपक्वहोमः )

१ आनयन्त्येतमग्निम् ।। प्रसङ्गाच्चतुर्थीहोममाह एतमग्निं = विवाहाग्निं । आनयन्ति = स्थण्डिलान्तरे स्थापयन्ति ।

२ अथ देवयजनोल्लेखनप्रभृति आप्रणीताभ्यः कृत्वा पक्वमोदनं पायसं वा याचयति ।। मात्रादीनिति शेषः ।।२।।

३ व्रीहीन् तण्डुलान्वा । तानभ्युक्ष्य अग्नावधिश्रयति ।।

व्रीहीन् तण्डुलान्वा याचयति। व्रीहीन् वितुषीकृत्य अग्नावधिश्रित्य पक्त्वा चरुं विदधीत ।। ३ ।।

४ आज्यं निर्वपति । अथाज्यमधिश्रयति ।।

अधिश्रयणं उत्पवनान्तकर्मोपलक्षकम् ।।

५ उभयं त्रिः पर्यग्निकृत्वा, स्रुवं दर्वीं मेक्षणं च सम्मार्ष्टि ।।

६ अथैनं चरुमभिघार्य उदञ्चमुद्वास्य प्रतिष्ठितमभि-घारयति ।।

उदञ्चं उत्तरतः उद्वास्य । आज्याद्दक्षिणतः प्रतिष्ठितम् ।।६।।

७ परिधानप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति- "ॐ यस्त्वा हृदा कीरिणा मन्यमान ÷ इति पुरोनुवाक्या मनूच्य "ॐ यस्मै त्वं सुकृते ÷ इति ।। याज्यया जुहोति ।।

पक्वात् = विधिवत् पक्वमुद्धृत्य । विधिश्च वक्ष्यते ।।

८ स एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः ।।

एवमेव = उक्तरीत्या तण्डुलनिर्वापादि । चरुकल्पः समानः ।।

९ अथाऽऽज्याहुतीरुपजुहोति-

"ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मघ्नी जारघ्नीमस्यैतां कृणोमि स्वाहा,, ।।

"ॐ वायो प्रायश्चित्ते त्वं देवानां ÷ ,,

"ॐ आदित्य प्रायश्चित्ते त्वं देवानां ÷ ,,

"ॐ प्रजापते प्रायश्चित्ते त्वं देवानां ÷ ,,

"प्रायश्चित्तेत्वमित्यादि उत्तरत्र त्रिष्वपि अनुषज्यते ।। अत्र " यत्रैका स्यात्तां द्विरावर्तयेत् यथा लाजेषु ,, इत्येकं सूत्रमधिकं क्वचित्दृश्यते । तस्यात्र प्रसक्तिरपि नास्ति । उत्तरत्र अयं विषयः विशदो वर्तते सप्रसङ्गः ।। अतोत्र न लिखितम् ।।

**१० पक्ववत्स्वेव स्विष्टवतीभ्यां स्विष्टकृद्धोमः अन्यत्र नाममन्त्रेण ।।**

पक्ववत्स्वेव=चरु होमवत्सु कर्मस्वेव स्विष्टवतीभ्यां = "हव्यवाहं स्विष्टमग्ने इति द्वाभ्यां एव याज्यापुरोनुवाक्याधर्मेण स्विष्टकृद्धोमः, नान्यत्र । एवकारार्थं स्वयमेवाह अन्यत्रेति = लाजहोमादिषु नाम मन्त्रेण "अग्नये स्विष्टकृते स्वाहा,, इति ।।आपूर्विकतन्त्रेषु कर्मसु "नच-स्विष्टकृदादीनि,, इति सूत्रेण, तदनुयायिन्या विश्वामित्रकारिकयाच "न हव्यवाहस्विष्टंच,, इति निषिद्धत्वात्, नाममन्त्रेणैव ।। "पक्ववत्स्वेव, स्विष्टवतीभ्यामेव,, इति एवकारस्य द्विरवधारणत्वात् उक्तार्थ सिद्धिः ।। पाठान्तरे ऽर्थान्वयाऽसम्भवात् स पाठो ऽसाधुरेव ।। स्विष्ट वत्संज्ञौ मन्त्रावाह-

"ॐ हव्यवाहमभिमातिषाह॰रक्षोहणं पृतनासु जिष्णुम्।। ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्नि॰ स्विष्टकृतमाहुवेमो॰ स्विष्टमग्ने अभितत्पृणाहि विश्वादेव पृतना अभिष्य । उरुन्नः पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरं न आयुः स्वाहा इति ।।

**११ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ।।**

---

१ ज. ज. पक्वादेवस्विष्टवतीभ्यां सौविष्टकृतंजुहोति, लाजैरितरत्र ।

## ( १५ वधूमूर्ध्नि सऽस्रावहोमः )

१२ आज्यशेषेण हिरण्यमन्तर्धाय वधूमूर्ध्नि सऽस्रावं जुहोति- "ॐ भूः स्वाहा, ॐ भुवः स्वाहा ॐ सुवः स्वाहा ॐ भूर्भुवः सुवः स्वाहा, ॐऽ-स्वाहा,, इति ॥

मूर्ध्नि हिरण्यान्तर्धानमुक्तं, यतः महाभारते आनुशासनिके पर्वणि "अग्ने रपत्यमेतद्वै सुवर्णमिति धारणा। अग्न्यभावेतु कुरुते वह्निस्थाने तु काञ्चनम्,, इति हिरण्यं अग्निप्रतिनिधीकृतम् ॥ होमस्तु अग्नावेवेति नियमः श्रौतः। अतस्तदानुगुण्याय मूर्ध्नि हिरण्यनिधानमुक्तमिति ज्ञेयम् ॥ विशेष वचने सति-तथैवानुष्ठेयम् ॥ क्वचित् प्रणवेन होमो न दृश्यते, परं बहुषु पुस्तकेषु वर्तत एव ॥ आचारोऽपि वर्तते ॥ १२ ॥

१३ अथैनां प्रदक्षिणमग्निं पर्याणयति- "ॐ अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्ताऽश्वश्रुवो देवराश्च,, इति ॥

## ( १६ उपसंवेशनम् )

१४ अथ श्रीमन्तमागारं सम्मृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं माल्यवन्तं साधिवासं दिक्षु सर्पिः सूत्रेन्धनप्रद्योतितं उदकुम्भादर्शोच्छिरसं प्रपाद्य, तस्मिन्नेनाऽ संवेश्य तदन्तिके उपविश्य जपति-"ॐ उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा। अन्यामिच्छ प्रफर्व्यंऽ सञ्जायां पत्या सृज,, ॐ उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीट्टे। अन्यामिच्छ पितृषदं व्यक्ताऽसते भागो जनुषा तस्य विद्धि, इति ॥

आगारं = गेहभागं अपवरकमित्यर्थः। तस्य श्रीमन्तमित्यादि विशेषणम् ॥ श्रीमन्तं = शोभायुतं। सम्मृष्टं उपलिप्तंच। दिक्षु = चतुर्षु। सर्पिषाक्तैः सूत्रात्मकैरिन्धनैः, प्रद्योतितं = प्रकृष्ट प्रकाशयुतं। उदकु-

मः आदर्शश्च तौ उत् शिरसि यत्र तम् ।। प्रपाद्य = वधूं प्रवेश्य । संवेश्य ।। शाययित्वा ।। १४ ।।

१५ अथैनामुपसंवेशयति – "प्रजापतिः स्त्रिया॑मित्य-नुवाकेन ।।

उपसंवेशयति = तस्याः समीपे शेते ।। १५ ।।

१६ अथास्या [1]स्तोकोतिं विवृणोति – "ॐ प्रजायैत्वा स॒ सृजामि,, इति ।। स्तोकोतिं =योनिम् ।। १६ ।।

१७ अथ सा यद्यश्रु कुर्यात्, तामनुमन्त्रयते – "ॐ जीवा॒ रुदन्ति विमयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इद॒ समेरिरे मयः पतिभ्यो जनयः परिष्वजे,, इति ।। नूतनत्वादश्रुकरणम् ।। १७ ।।

।। प्रथमप्रश्ने दशमः खण्डः ।।

## * एकादशः खण्डः *

( १७ ब्राह्मणादिपदानां अर्थनिर्वचनम् * )

१ ब्राह्मणेन ब्राह्मण्यामुत्पन्नः, प्रागुपनयनाज्जात इत्य-भिधीयते ।

एतानि स्पष्टार्थानि ।। उपनयनप्रसङ्गेनोक्तानि जातशब्दस्तज्जातीयपरः । "जन्मना जायते विप्रः,,– इतिस्मरणात् ।।

२ उपनीतमात्रो व्रतानुचारी वेदानां कञ्चिदधीत्य ब्राह्मणः।।

कञ्चित् = भागम् ।। कर्मोपयुक्तांशमात्रमिति यावत् ।।

३ एकां शाखामधीत्य श्रोत्रियः ।

---

१ क. ग. ठ. स्तोकं योनिं । स्तोकं = किञ्चिदिवेत्यर्थः ।।

४ अंगाध्यायी अनूचानः ।।

शाखाध्ययनेन सहेति शेषः ।।

५ कल्पाध्यायी ऋषिकल्पः ।।

पूर्वाभ्यां सह ।। कल्पोऽत्र धर्मशात्रम् जैमिनीयंच ।।

६ सूत्रप्रवचनाध्यायी भ्रूणः ।।

सूत्राणि बादरायणीयानि । प्रवचनं=अध्यापनं- पूर्वैः सह ।।

७ चतुर्वेदादृषिः । चतुर्वेदमधीत्य , पूर्वैः सह ।।

८ अत ऊर्ध्वं देवः ।।

पुराणेतिहासादिवेत्ता. ।।

( १८ काम्यविवाहव्रतविधानानि )

९ अथ यदिकामयेत श्रोत्रियं जनयेयमिति, आऽरुन्धत्युपस्थानात् कृत्वा व्रतमुपेयाताम् । त्रिरात्रं अक्षारलवणाशिनौ अधः शायिनौ ब्रह्मचारिणावासाते ।।

व्रतप्रसङ्गादाह ।। स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः ।।

१० अहतानां वाससां परिधानं, सायंप्रातश्चालङ्करणं, इषुप्रतोदयोश्च धारणं, उभौ कालौ अग्निपरिचर्या च ।।

उभौ कालौ, अग्निपरिचर्या = सायं प्रातश्चौपासनं, अत्यन्तसंयोगे द्वितीया ।।

११ चतुर्थ्यां पक्वहोमः उपसंवेशनं च ।।

१२ अथ यदि कामयेतानूचानं जनयेयमिति, द्वादशरात्रं एतद्व्रतं चरेत् ।।

१३ व्रतान्ते पक्वहोमः उपसंवेशनं च ।।

१४ अथ यदि कामयेत ऋषिकल्पं जनयेयमिति, मासमेतद्व्रतं चरेत् ।।

१५ व्रतान्ते पक्वहोमः उपसंवेशनं च ।।

१६ अथ यदि कामयेत भ्रूणं जनयेयमिति, चतुरो मासानेतद्व्रतं चरेत् ।।

१७ व्रतान्ते पक्वहोमः उपसंवेशनं च ।।

१८ अथ यदि कामयेत ऋषिं जनयेयमिति, षण्मासमेतद्व्रतं चरेत् ।।

१९ व्रतान्ते पक्वहोमः उपसंवेशनं च ।।

२० अथ यदि कामयेत देवं जनयेयमिति, संवत्सरमेतद्व्रतं चरेत् ।।

२१ व्रतान्ते पक्वहोमः उपसंवेशनं च ।।

एषु कामनाविशेषेषु व्रतचर्यां यथावत्कुर्यात्, न्यूनं वा अतिरिक्तं वा न कुर्यात् ।।

( १९ रजस्वलायाः तत्पत्युश्च नियमाः )

२२ अथैषा मलवद्वासाः स्यात्, नैनया सह संवदेत, न सहाऽऽसीत, नास्या अन्नमद्यात्, ब्रह्महत्याया ह्येषा वर्णं प्रतिमुच्याऽऽस्ते ।।

एषा = पत्नी । मलवद्वासाः = रजस्वला । एषा = रजस्वला ब्रह्महत्यायाः = इन्द्रकृतवृत्रासुरवधजन्यायाः वर्णं = गुणात्मकं रजः । प्रतिमुच्याऽऽस्ते = शरीरे धारयति । अतः नैनयेति पूर्वेणान्वयः ।।

२३ अथो खल्वाहुः अभ्यञ्जनं वाव स्त्रिया अन्नं, अभ्यञ्जनमेव न प्रतिग्राह्यं, काममन्यत् ।।

अभ्यञ्जनं = द्रवद्रव्यं, यत् स्पर्शे हस्तलिप्तं भवेत् तत् तैलादिकं । तत् न ग्राह्यम्,, केनापीति शेषः । अन्यत् = फलादिकं ।। कामं = सत्यां इच्छायाम् ।। ग्राह्यमित्यनुषङ्गः, अगत्या इति शेषः ।। अयं केषां चित्पक्षः ।:

**२४ नैनामुपेयात्, नारण्ये न पराचीम् ।।**

एनां=रजस्वलाम् ।। नारण्ये न पराचीमिति सार्वदिको निषेधः । अरण्ये= बहिरङ्गे ।। पराचीं = पराङ्मुखीं,, अनिच्छन्तीमित्यर्थः ।।

**२५ न स्नाति, नाभ्यङ्क्ते, न प्रतिलिखति, नाङ्क्ते, न दतो धावते, न नखान्निकृन्तते, न कृणत्ति, न रज्जुं सृजति, न पर्णेन पिबति, न खर्वेण पिबति- इति ।।**

नाभ्यंक्ते =तैलादिलेपनं न कुर्यात् । न प्रतिलिखति=न पादाङ्गुष्ठादिना भूमिं लिखति, न वा चित्रकर्म करोति । नाङ्क्ते=न नेत्राञ्जनं कुरुते । न कृणत्ति=तृणच्छेदनं न कुर्यात् । पर्णेन =पर्णमयपात्रेण, पालाशेनेत्यर्थः । खर्वेण =ओष्ठाभ्यां पात्रस्पर्शेन । अग्निदग्धः शरावः खर्वः पानकाले तत्र ओष्ठ स्पर्शं न कुर्यादित्यर्थो वा ।।

**२६ तस्यै खर्वास्तिस्रो रात्रीर्व्रतं चरेत् । अञ्जलिना वा पिबेत् । "अखर्वेण वा पात्रेण प्रजायै गोपीथाय,, इति ब्राह्मणम् ।।**

खर्वास्तिस्रः = त्र्यवराः, रात्रीः = अहोरात्रं यावत् ।

।। इति प्रथमप्रश्ने एकादशः खण्डः ।।

## * द्वादशः खण्डः *

## ( २० ऋतुसंवेशनम् )

१ चतुर्थ्यां स्नातायां निशायामलङ्कृत्यैनां शयनेऽभिमन्त्रयते- "ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।।
यथा पृथिव्यग्निगर्भा द्यौर्यथेन्द्रेण गर्भिणी ।
वायुर्यथा दिशां गर्भ एवं गर्भं दधातु ते ।।
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनावुभावाधत्तां पुष्करस्रजा ।।

हिरण्ययी अरणीयं निर्मन्थतो अश्विना ।
तन्ते गर्भ॰ हवामहे दशमे मासि सूतवे ॥
नेजमेष परापत सुपुत्रः पुनरापत ।
अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान्,, इति ॥

विष्णुर्योनिमित्यादयो मन्त्राः सौत्राः ॥१॥

(स्मृत्यन्तरे एतदभिमन्त्रणं योनिस्पर्शपूर्वकं विहितम्)

२ अथैनां परिष्वजति- "ॐ अमूहमस्मि । सात्वम् । द्यौरहम् । पृथिवी त्वम् । सामाऽहम् । ऋक्त्वम् । तावेहि सम्भवाव । सहरेतो दधावहै । पु॰से पुत्रायवेत्तवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय,, इति ॥

अयं मन्त्रः पाठभेदेन दृश्यते । परं तै०. ब्रा०. पाठोऽत्रादृतः ॥ २ ॥

३ आत्मानं प्रत्यभिमृशते- "ॐ अहं गर्भमदधामोषधी-ष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पितॄणामहं जनिभ्यो अपरीषु पुत्रान्,, इति ॥

आत्मानमिति- स्वहृदयं संस्पृश्य जपतीत्यर्थः ॥ ३ ॥

४ अथैनामुपैति- "ॐ तां पूषंच्छिवतमा मेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्या मुशन्तः प्रहराम शेपम्,, इति ॥ उपैति = संयुनक्ति ॥४॥

५ एवमेव चतुर्थीप्रभृति आषोडशीमुत्तरामुत्तरां युग्मामुपैति ।

चतुर्थीप्रभृतीति । चतुर्थी षष्ठी अष्टमी दशमी द्वादशी चतुर्दशी षोडशीति सप्तयुग्मा रात्रयः ॥ उत्तरामुत्तरां = पूर्वपूर्वापेक्षयोत्तरोत्तराः श्रेष्ठाः ॥ स्त्र्यपत्यकामस्य विषमा अपि रात्रयः अन्यत्र कथिताः । परन्तु तत्र एकादशी त्रयोदशी रात्री वर्ज्ये ॥ आस्वपि पार्वण्यः वर्ज्याः॥५॥

६ प्रजानिःश्रेयसं ऋतुगमनमित्याचार्याः ॥

प्रजानिःश्रेयसकरं मन्त्रवत् सर्वऋतुगमनं इति । आचार्या इति पदं अस्य विशेषप्रामाण्यसूचनाय ॥ ऋतुगमनं कुर्यादिवेत्यर्थः ॥ अतएव "ऋतावेव भार्यामिवोपेयादेवेति त्रिरवधारणं "ऋतौ भार्यामुपेयात्,, इति श्रुतेरर्थं वर्णयन्ति ॥ ६ ॥

७ सर्वाणि ऋतुगमनानि मन्त्रवन्ति भवन्तीति बोधायनः ॥

८ यच्चादौ यच्चर्ताविति शालीकिः ॥

शालीकिपक्षस्तु क्षेत्रसंस्कारपक्षमाश्रित्येति ज्ञेयम् ॥ अत्र विशेषो वक्ष्यते ॥ यच्चादौ यच्चर्तौ = आदिम ऋतावेवेत्यर्थः । अनेन द्वितीयादिऋतौ मन्त्रविकल्पः ॥ ७–८ ॥

॥ इति प्रथमप्रश्ने द्वादशः खण्डः ॥

## * त्रयोदशः खण्डः *

### ( २९ पञ्चमेऽहनि वपनं उदुम्बरपूजा च )

१ अथास्मै पञ्चमेऽहनि नापिताय पयोदनं दत्वा नापित कर्म कुर्वन्ति ॥

प्रकृतात् विवाहात् पञ्चमेऽहनि अस्मै = वराय । कुर्वन्ति = कारयन्ति बान्धवाः । पयोदनमिति समासश्छांन्दसः । पञ्चमेऽहनीति व्रतसमाप्ते रुपलक्षणम् ॥१॥ आभ्यामितिपाठे छत्रिन्यायेन व्यवस्था । अथवा क्वचिद्देशे वरः वधूं स्वाङ्के निधाय तस्याः नखनिकृन्तनं करोति । तदा स्फुटोऽर्थः । नख निकृन्तनमेव तस्या नापितकर्म ॥

२ ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यत्रैकमूलमुदुम्बरं पश्यति– तं प्रदक्षिणं परिसमूह्य, प्रदक्षिणं गन्धै रनुलिम्पन् जपति– "ॐ यथा त्वं वनस्पत ऊर्जाऽभ्युत्थितोऽसि वनस्पते शतवल्शो विरोहस्येवमहं पुत्रैश्च पशुभिश्च सहस्रवल्शा विवय॰रुहेम,, इति

एकमूलं = तरुणं, वृद्धस्य बहुमूलत्वात् ॥२॥

३ तस्य मूलं सुमनोभिः प्रच्छादयति– "ॐ यथा त्वं वनस्पते फलवानस्येवमहं पुत्रैश्च पशुभिश्च फलवन्तो भवानि,, इति

सुमनोभिः = पुष्पैः ॥३॥

४ अत्रैव त्रिवृदन्नेन बकानां बलिमुपहरति ॥

त्रिवृदन्नलक्षणं तु - "भक्ष्यं भोज्यं च पेयं चेत्येतत्समुदितं त्रिवृत्,, इति विश्वामित्रकारिकायामुक्तम् । बकानां चतुर्थ्यर्थे षष्ठी ॥४॥

५ मन्त्रं चोदाहरन्ति– "ॐ ऊर्जस्वान् पयस्वान् पयसा पिन्वमानास्मान् वनस्पते पयसाऽभ्याववृत्स्व,, इति ॥

६ अन्न॰स॰स्कृत्य ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा, जानुदघ्नमुदकमवतीर्य प्राचीनदशेनाहतेन वाससा मत्स्यान् गृह्णीतः । पिष्टमयानिति कुमारस्वामी ॥

अन्नं, तस्य दध्ना मिश्रीकरणं संस्करणं । तेन ब्राह्मणपूजनं । आशीर्वचनं= पुण्याहवाचनम् ॥ एवमुत्तरत्रापि ज्ञेयम् ॥ "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् सर्वकर्मसु पावनम्,, इत्यहतवासोलक्षणम् ॥ कलौ कुमारस्वामिमतमेव युक्तमिति मन्यंते आचार्याः ॥६॥

७ तान् प्रदर्श्य ब्रह्मचारिणं पृच्छतः– "ब्रह्मचारिन् किं पश्यसि,, इति ।

८ स पृष्टः प्रतिब्रूयात् "पुत्रांश्च पशूंश्च पश्यामि,, इति ॥

अनेन मत्स्यग्रहणं पुत्रपश्वादिसमृध्यै भवतीति बोध्यते ॥८॥

९ अथैनान् मत्स्यान् उदुम्बरमूले बकानां बलिमुपहरति- "ॐ दीर्घायुत्वाय वर्चसे,, इति । बकानां चतुर्थ्यर्थे षष्ठी ॥९॥

१० अत्रैव निर्माल्यानि परिभुक्तवासांसि प्रतिसरांश्च प्रतिमुच्य उदुम्बरशाखाया॰स॰सृजति ॥

११ अथावगाह्य अन्योन्यं पृष्ठे धावयित्वा ओदकान्तं प्रतियौति ॥

अन्योन्यं = दम्पती परस्परं । धावयित्वा = प्रक्षाळ्य । ओदकान्तं = आ उदकान्तं = तीरमित्यर्थः । प्रति यौति = तां हस्ते गृह्णन्- प्रत्यागच्छति ॥

ॐ प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः, इति ॥

१२ अन्योन्यमलङ्कृत्य रक्तानि वासाꣳसि परिधाय अहतानि वासाꣳसि वा ॥

रक्तानि वासांसि = रक्तवर्णदुकूलानि ॥ १२ ॥

१३ यानेन पद्भ्यां वा गृहमागत्य प्रक्षालितपाणिपादौ अप आचम्य वाग्यतौ शयनमारभेते । स्थालीपाकः प्रसिद्धः ॥

शयनं = आसनं । अत्र कर्तव्यः स्थालीपाकः, प्रसिद्धः = पूर्वमुक्तः ॥१३॥

१४ श्वोभूते वैश्वदेवेन प्रतिपद्येते ॥ श्वोभूते स्थालीपाकात् परेऽहनि वैश्वदेवेन द्वितीयार्थे तृतीया । प्रतिपद्येते = आरभेते ॥१४॥

१५ मासि श्राद्धेन चापरपक्षे ॥

विवाहात्परं प्रथमागते अपरपक्षे ॥ मासि श्राद्धं द्वितीयप्रश्ने वक्ष्यते । तच्च मङ्गलार्थम् ॥१५॥

॥ इति प्रथमप्रश्ने त्रयोदशः खण्डः ॥

## * चतुर्दशः खण्डः *

## ( २२ गर्भाधानम् )

१ अथ गर्भाधानं व्याख्यास्यामः । पूर्वपक्षे[१] पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

---

१ क. ग. ठ पूर्वपक्षस्य सप्तम्यामष्टम्यां दशम्यां द्वादश्यां रोहिण्यां श्रोणायां वा इत्यधिकम् ।

प्रसङ्गप्राप्तं सपरिकरं विवाहं समाप्य संस्कारकाण्डारम्भं कुरुते अथेति ॥

२ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति- "ॐ प्रवेधसे कवये÷,, इति ॥

३ अथ मेक्षणेन चतस्रोऽन्नाहुतीर्जुहोति- "ॐ प्रवेधसे÷, यस्त्वाहृदा÷, यस्मैत्व०सुकृते÷, त्वेसुपुत्र÷,, इति चतसृभिः ॥ मेक्षणेन गृहीत्वा इति शेषः ॥३॥

४ "यस्त्वा हृदा÷इति त्रिभिरिति शालीकिः ॥

शालीकिमतेन प्रजाक्षेत्रसंस्कारपक्षयोः तिस्र आहुतयः । स्वमतेन क्षेत्र- संस्कार एव चतस्र आहुतय इत्याचार्याभिप्रायः ॥४॥

५ प्रजासंस्कार एवेति बोधायनः ॥

तिस्र आहुतयः प्रजासंस्कारे एव युक्त इत्याचार्यमतम् ॥५॥

६ स्विष्टकृतमवदायान्तःपरिधि सादयित्वा आज्याहुतीरुपजुहोति- "ॐ ज्येष्ठाय स्वाहा । श्रेष्ठाय स्वाहा । प्रतिष्ठायै स्वाहा । प्रतिष्ठित्यै स्वाहा । सम्पत्यै स्वाहा । सम्पतये स्वाहा । ब्रह्मणे स्वाहा । आयतनवते स्वाहा । इत्यष्टभिः[२] ।

७ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

८ हविष्यमन्नमभिमन्त्रयते- "ॐ तत्सवितुर्वृणीमहे । वयं देवस्य भोजनम् । श्रेष्ठ०सर्वधातमम् । तुरं भगस्यधीमहि,, इति ॥

हविष्यं = हविर्योग्यं, पक्वशेषमित्यर्थः ॥८॥

९ अपरेणाग्निमुभौ जायापती प्राश्नीयाताम्- तत्सवितुर्वरेण्यं÷ इति ॥

---

२ ज. ञ. अत्र द्वादशाहुतयो दृश्यन्ते ।

१० प्राश्य, अप आचम्य, जठरमभिमृशति– "यत इन्द्र÷ स्वस्तिदा ÷ इति द्वाभ्याम् ॥

पुरुषस्य मन्त्रवदाचमनम् । स्त्रियास्तूष्णीम् ॥१०॥

११ यं कामं कामयते तं मनसा ध्यायेत् ॥ गर्भाधानं व्याख्यातम् ॥

यं कामं = काम्यमानं, इष्टं, ब्राह्मणश्रोत्रियाद्यन्यतमं पुत्रं । तं= तादृशम् ॥११॥

॥ इति प्रथमप्रश्ने चतुर्दशः खण्डः ॥

## * पञ्चदशः खण्डः *

### ( २३ पुंसवनम् )

१ विज्ञाते गर्भे तिष्ये पुंसवनम् ॥

तिष्ये इति अन्येषां पुंनक्षत्राणामुपलक्षणम् ॥१॥

२ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ।

३ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वा ज्जुहोति– "ॐ प्रजापते तन्वंमे ÷,, इति ॥

४ अथाऽऽज्याहुतीरुपजुहोति– "ॐ गर्भो अस्योष- धीनां ÷ इति तिसृभिरनुच्छन्दसम् ॥

अनुच्छन्दसं=प्रतिमन्त्रं उपजुहोतीत्यन्वयः । एवमग्रेऽपि ॥४॥

५ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

६ अथास्या आज्यशेषमास्ये प्रच्योतयति– "ॐ अस्मे- देवास ÷ इति चतसृभिरनुच्छन्दसम् ॥

॥ इति प्रथमप्रश्ने पञ्चदशः खण्डः ॥

## * षोडशः खण्डः *

### ( २४ सीमन्तोन्नयनम् )

१ प्रथमगर्भायाः चतुर्थे मासि सीमन्तोन्नयनम् ।।

प्रथमगर्भेत्यनेन अयं क्षेत्रसंस्कार इति ज्ञाप्यते ।। अनेन आचार्याणां एतं विना विष्णुबल्यन्ताः क्षेत्र- प्रजोभयसंस्कारा इति मतं ज्ञायते ।।१।।

२ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ।।

३ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वा ज्जुहोति- "ॐ धाता ददातुनः÷ इति पुरोऽनुवाक्या मनूच्य "धाता प्रजाया उत÷ इति याज्यया जुहोति ।।

४ अथाज्याहुतीरुपजुहोति- "ॐ धाता ददातु नो रयिप्राचीं ÷ इत्यान्तादनुवाकस्य द्वादशभिरनुच्छन्दसम् ।।

५ अथास्यास्त्रैण्या शलल्या [1] त्रिभिर्दर्भपुञ्जीलैः, उदुम्बरप्रसूनैः, यवप्रसूनैरिति केशान् विभजन् सीमन्तमुन्नयति- "ॐ राकामह०÷ यास्ते राके÷ इति द्वाभ्याम् ।।

अस्याः केशानिति सम्बन्धः ।। त्रैण्या त्रिशुक्लया । शलल्या=शल्यमृगरोम्णा ।। सीमन्तः = केशवेशः । केशविभाग इति यावत् । उन्नयति-भर्ता इति शेषः ।।५।।

६ अथास्यै यवप्रसूनान्याबध्नाति- "ॐ यवोऽसि यवयाऽस्मद्द्वेषो यवयारातीः,, इति ।।

७ अथैनौ वीणागाथिनौ प्रवृणीते [2] ।।

एनौ=प्रसिद्धौ ।। ७ ।।

८ अथैनौ स०शास्ति- "गायतं,, इति ।।

---

१ ज. त्रिभिर्दर्भैः ।। २ ज. प्रतिगृह्णीयाते । ठ. प्रतिगृह्णीते ।।

प्रवरणमिदम् ॥ ८ ॥

९ तामेतां गाथां गायतः- ‘‘ॐ सोम एव नो राजेत्याह ब्राह्मणीः प्रजा विवृत्तचक्रा आसीनास्तीरेणासौ तव,, इति यस्या नद्यास्तीरे संश्रिता वसन्ति, ‘‘असौ,, पद स्थाने तस्या नाम गृह्णाति ॥

( २५ विष्णुबलिः )

१० अष्टमे मासि विष्णव आहुतीर्जुहोति- ‘‘विष्णोर्नुकं ÷ इत्येतेन सूक्तेन ।

विष्णुसूक्तं सूक्तप्रश्ने आचार्या एव वक्ष्यन्ति ॥१०॥

११ विष्णवे बलिमुपहरति। वैष्णवो ह्येष मासो विज्ञायते।

गर्भे अष्टमो मासः वैष्णवः=विष्णुदेवताकः ॥ इति श्रुतिस्मृत्योः विज्ञायते इत्यर्थः ॥

॥ इति प्रथमप्रश्ने षोडशः खण्डः ॥

* सप्तदशः खण्डः *

१ यथैतद्भुते बलिहरणम् ॥

अयं खण्डः शेषसूत्रान्तर्गतत्वेन क्वचित्पठ्यते । परं बहुषु पुस्तकेषु अत्रैव वर्तते ॥ युक्तं चैतत् ॥१॥

२ विष्णवे बलिरष्टमे मासि पूर्वपक्षस्य सप्तम्यामष्टम्यां नवम्यां द्वादश्यां रोहिण्यां श्रोणायां वा ॥

३ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा,

४ अथ देवयजनोल्लेखनप्रभृत्याऽऽप्रणीताभ्यः कृत्वो-पोत्थायाग्रेणाग्निं दैवतमावाहयति- ‘‘ॐ भूः- पुरुषमावा हयामि, भुवः पुरुषं÷, सुवः पुरुषं÷, भूर्भुवः सुवः

पुरुषं÷ इत्यावाह्य स्वागतेनाभिनन्द्य ॥

५ चरुनिर्वापादि आग्निमुखात् कृत्वा दैवतं स्ना[१]पयति ॥ "आपोहिष्ठाः– इति तिसृभिः । हिरण्यवर्णा इति चतसृभिः । पवमानः सुवर्जन ÷इत्यनुवाकेन मार्जयित्वा ।

६ अथाद्भिः तर्पयति– "केशवं तर्पयामि, नारायणं० माधवं० गोविन्दं० विष्णुं० मधुसूदनं० त्रिविक्रमं० वामनं० श्रीधरं० हृषीकेशं० पद्मनाभं० दामोदरं तर्पयामि इति ।।

७ एतैरेव नामधेयैः गन्धपुष्पाक्षतधूपदीपैः– [२]"इदं विष्णु÷ इरावती÷ तद्विष्णोः परमं÷ तत्सवितुः÷ उद्दीप्यस्व÷ इति पञ्चभिरनुषज्य "अमुष्मै नमो, अमुष्मै नमः,, इत्यभ्यर्चयति ॥

गन्धादिपञ्चोपचारेषु क्रमेण इदं विष्णुरित्यादि पञ्च मन्त्रान् तत्तदन्ते केशवायनमः इत्यादि चतुर्थ्यन्तनामभिः अनुषञ्जितान् योजयेत् ॥७॥

८ गायत्र्या पक्वं हुत्वा– अथ विष्णव आज्याहुतीर्जुहोति– "विष्णोर्नुकं,÷ तदस्यप्रिय०- प्रतद्विष्णुः÷ परोमात्रया÷ विचक्रमे+ त्रिर्देवः+ इतिषड्भिरनुच्छन्दसम् ॥

अत्र पक्वदेवता सवितैव । न तु विष्णुः आज्याहुतिष्वेव विष्णु देवतात्वाभिधानात् ॥८॥

९ स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् ॥

१० अथ गुडपायसं सघृतमिश्रमन्नं निवेदयति ॥

---

१ क. ठ. अर्चयति ॥

२ च. जः ञ. इदं विष्णुरित्यादि अनुषज्येत्यन्तो भागो नास्ति ॥

११ अथान्नस्य बलिमुपहरति- "अमुष्मै स्वाहा अमुष्मै स्वाहा,, इति द्वादशनामभिर्यथालिङ्गम् ।।

१२ वैष्णवीभिर्ऋग्भिः ऋग्यजुःसामाथर्वभिः स्तुतिभिः स्तुन्वन्ति ।

१३ व्याहृतिभिः "पुरुषमुद्वासयामि,, इत्युद्वास्य पक्वशेषं पत्नीं प्राशयेत्- पुमानस्या जायते इति विज्ञायते ।।

१४ एवमेव द्वादश्यामुपवसेत् । नात्र पत्नीप्राशनम् ।।

एवमेव = पुत्रकामः उक्तविष्णवर्चनरूपमेव कर्म प्रतिद्वादशि उपोष्य कुर्यात् । तदा पक्वशेषं न पत्न्यै प्राशयेत् ।। अनेन प्राशनेन न हुतत्व हानिः । पक्वशेषप्राशनस्य काम्यत्वात् पञ्चोपचारप्रसङ्गेन स्मृतान् षोडशोपचारान् प्रक्रमते–आसनेत्यादिना ।।१४।।

( २६ षोडशोपचाराः )

१५ आसनावाहने पाद्यमर्घ्यमाचमनं तथा ।
स्नानं वस्त्रोपवीते च गन्धपुष्पे तथैव च ।।१।।
धूपो दीपश्च नैवेद्यं पानीयाचमनं तथा । ताम्बूलोद्वासने चेति ह्युपचारास्तु षोडश ।।२।।

१६ इति हुतो व्याख्यातः ।।

पानीयाचमनं एक एव ।।१५ ।।

।। इति प्रथमप्रश्ने सप्तदशः खण्डः ।।

।। इति प्रथमः प्रश्नः समाप्तः ।।

ॐ यथो एतत् । अथ विवाहं । आवेद्यार्घ्यं दद्यात् । अथ शुचौ समे देशे । अथाग्निमुखम् । अथास्या उपोत्थाय । अथ तथोपविश्य । अनुनयन्त्येतमग्निम् । अथ विवाहस्य । आनयन्त्येतमग्निं । ब्राह्मणेन ब्राह्मण्यां । चतुर्थ्यां स्नातायां । अथास्मै पञ्चमेहनि । अथगर्भाऽऽधानं । विज्ञाते गर्भे ।

प्रथमगर्भायाः । यथैतद्धु ते बलिहरणम् ॥ ॐ ॥

ॐ यथैतद्धु ते बलिहरणं । प्रथमगर्भायाः । विज्ञाते गर्भे । अथ गर्भाऽऽधानम् । अथास्मै पञ्चमेऽहनि । चतुर्थ्यां स्नातायां । ब्राह्मणेन ब्राह्मण्यां । आनयन्त्येतमग्निम् । अथ विवाहस्य । अनुनयन्त्येतमग्निं । अथ तथोपविश्य । अथास्या उपोत्थाय । अथाग्निमुखम् । अथ शुचौ समे देशे । आवेद्यार्घ्यं दद्यात् । अथ विवाहं । यथो एतत् ॥ ॐ ॥

अत्रायं सप्तदशखण्डानां अनुलोम–विलोमक्रमेण खंडानां आदिमसूत्रभागः पठ्यते । क्वचित् पुस्तके अनुलोमक्रममात्रं दृश्यते । प्राचीनैः सूत्राणां कण्ठपाठानुकूलार्थं अयं क्रमः नियोजित इव भाति । वेदेऽपि "इषे त्रिचत्वारिंशत्,, । "सहस्रवल्शा अष्टाचत्वारिंशत्,, "शश्वदासत सिषासता मासत हविः पतिः कनीयान् तस्माद्विश्वसृजोऽष्टौ च,, इत्येवमादयः दृश्यन्ते ॥ मुद्रणव्यवस्थाभावकालेऽस्य उपयोगोऽभूदेव । परन्तु प्रकृते नातीवोपयोगः ॥ अतः उत्तरप्रश्नेषु नायं क्रमः मुद्रितः ॥

अपि चास्मिन् प्रथमे प्रश्ने क्वचित्पुस्तके चतुर्दशैव खण्डा विभक्ताः । सूत्राणि तु एतावन्त्येव एतान्येव च ॥ केवलं खण्डविभागभेद एव । नैकपुस्तकपाठानुरोधेन सप्तदश खण्डा विभक्ता अस्माभिः ॥ त्र पुस्तकमात्रे खण्डविभागमनादृत्य अध्यायविभाग आदृतः । स चाध्येतृपरम्पराऽननुगुण इति त्यक्तः । सूत्राणां विभज्याङ्कदानेऽपि क्वचित् भेदो दृश्यते । तत्रापि अनेकपुस्तकान्यादृतानि ॥ इति शम् ॥

इति बौधायनगृह्यसूत्रे प्रथमः प्रश्नः समाप्तः ॥

★

## अथ द्वितीयः प्रश्नः

### * प्रथमः खण्डः *

### ( १ जातकर्म )

अथ प्रहुतः="प्राङ्नाभिकर्तनात्पुंसो जातकर्मक्रिया बुधैः,, । जातं कुमारमभिमन्त्रयते– "अङ्गाद्‌गात्संभूतः पृथिव्यै०÷ इत्येतेनानुवाकेन ॥

हुतः समाप्तः । प्रहुत आरभ्यते । तत्रादौ जातकर्म । शिशोर्नाभिच्छेदनात्पूर्वमेव तत् पिता कुर्यात् । कुमारमिति कुमार्या अप्युपलक्षणम् । परन्तु अभिमन्त्रणादि सर्वं अमन्त्रकमेव कुमार्याः । स्त्रीणां जातकर्मादिसंस्काराणां अमन्त्रकत्वं वक्ष्यन्ति ॥ विवाहस्तु समन्त्रक एव ॥ अभिमन्त्रणं स्पृष्ट्वा जपः ॥१॥

२ अथैनं स्नपयति– "ॐ क्षेत्रियैत्वा+इतिषड्‌भिरनुच्छन्दसम् ॥

३ अथैनꣳस्वोपस्थ आदधाति- "ॐ अङ्गादङ्गात्सम्भवसी,,-ति ॥

स्वोपस्थे= स्वाङ्के ॥

४ अथैनं मूर्ध्न्यभिजिघ्रति– "ॐ अश्माभव परशुर्भवे,, ति ॥ इत्यसौ पदस्थाने नक्षत्र[1] नामगृह्णीयात् सम्बुध्यन्तम् ॥

कुमारस्य नक्षत्रनाम । अभिजिद्राम्याश्विन,, इत्येवमादि ॥४॥

५ अथास्य दक्षिणकर्णे जपति– "ॐ अग्निरायुष्मानिति पञ्चभिः पर्यायैः । "ॐ आयुष्टे विश्वतो दधत्÷इत्युत्तरकर्णे ॥

६ अथैनं दधिमधुघृतमिति समुदायुत्य हिरण्येन कुमारं

---

१ क. ज. ञ. ठ. नक्षत्रनामधेयेन ॥

प्राशयति- "ॐ प्राणो रक्षति÷ इत्यनुवाकेन प्रत्यृचम् ।।

७ अतिशिष्टं [1]गोष्पदे निनयति– "भूर्भुवः सुवरि,, ति ।।

अतिशिष्टमिति प्रतिपत्तिविधिः । अतिशिष्टं=अवशिष्टं । गोष्पदे= गोष्ठे ।।

८ अथैनं मातुरुत्सङ्ग [2] आदधाति– "सीदत्वं मातुरस्याः÷ इति चतसृभिः ।।

उपस्थे–इतिपाठेऽपि उत्सङ्गे-इत्येवार्थः ।।

९ स्तनमभिमन्त्रयते– "ॐ यस्ते स्तनः शशयो÷ इति ।।

१० धयन्तमनुमन्त्रयते÷"ॐ द्यौस्ते पृष्ठ॰रक्षतु+ इति ।।

अभिमन्त्रयते=दृष्ट्वा जपति ।। अनुमन्त्रयते इत्यस्यापि स एवार्थः ।। धयन्तं=स्तनं पिबन्तम् ।।९ - १०।।

११ अथास्य उदकुम्भं उच्छिरसि निदधाति– "ॐ आपः सुप्तेषु जाग्रत रक्षा॰सि निरितो नुदध्वं,, इति ।।

उच्छिरसि = शिरस उपरि भागे ।।

१२ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति– "ॐ हरि॰हरन्तं÷ इतिपुरोनुवाक्यामनूच्य "ॐ माछिदो मृत्यो÷इति याज्यया जुहोति ।।

१३ अथाज्याहुतीरुपजुहोति– "ॐ सद्यश्चकमानाये,, ति आन्तादनुवाकस्य प्रत्यृचम् ।।

१४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ।।

१५ अथ अनोयुगं रथयुगं वा स्नाप्याच्छाद्यालङ्कृत्य अग्रेणाग्निमुध्दृत्य, तस्याग्रेणाश्वत्थपर्णेषु हुतशेषं निदधाति– "ॐ नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः,, इति ।।

---

१ ज. ठ. गोपदे ।। २ ज. ञ. ठ. मातुरुपस्थे ।।

अनोयुगं- अनडुद्ग्रीवायां स्थाप्यो दारुविशेषः ।। रथयुगं अश्वग्रीवायां स्थाप्यः ।। अग्रेणाग्निं = जातकर्महोमाग्नेः पुरतः । उद्धृत्य = संस्थाप्य ।। हुतशेषनिधानं होमेन सह प्रहुतलक्षणम् । एवमग्रेऽपि ।।

१६ दशम्यामनोयुगमुत्थापयति ।।

दशम्यां =सूतिनिवृत्तेः पूर्वदिने ।।

।। इति द्वितीयप्रश्ने प्रथमः खण्डः ।।

*** द्वितीयः खण्डः ***

**( २ फलीकरणहोमः )**

**१ अथास्तमित आदित्ये गौरसर्षपान् फलीकरणमिश्रान् अञ्जलिना जुहोति- "ॐ कृणुष्वपाज :÷इत्येतेनानुवाकेन । प्रत्यृचम् ।।**

अत्र आचार्या बालरक्षाप्रसङ्गेन उदकुम्भोच्छिरोनिधापनेन स्मृतं फलीकरणहोमं संस्कारानन्तर्भूतमपि विदधते । बालरक्षार्थेषु फलीकरणहोमस्य प्राशस्त्यं च मन्यन्ते ।। "गृहे क्रियमाणेषु तण्डुलेषु अपनेया मालिन्यांशाः फलीकरणाः,, इति सायणभाष्यम् । धान्यानां वितुषीकरणं फलीकरणं, लक्षणया वितुषीकृतधान्यानि कथ्यन्ते इति साम्प्रदायिकाः ।।१।।

**२ अथौदनं तिलसक्तुभिः घृतेनेति समुदायुत्य गोष्ठेऽश्वत्थपर्णेषु हुतशेषं निदधाति- "ॐ अघोराय मघोराय नेजमेषाय नमो नमः,, इति ।।**

घृतेनेति । इति शब्देन प्रकारवाचिना, "हुतशेष,, शब्देन च फलीकरण मिश्रगौरसर्षपानपि ओदनादिषु सम्मिश्रय हुतशेषं निदधाति इति ज्ञेयम् ।। न तेन प्रहुतत्वमस्य शङ्कनीयम् ।। पक्वाहोमाभावात् ।।२।।

**३ अथातिशिष्टं सर्वा दिशः संप्रकिरन्ति- "आवेशनीव्यश्रु-**

मुखी कुतूहली एकस्तनी जृम्भिणी स्तम्भिनी मोहिनी च । कृष्णा विशाखा विमला ब्रह्मरात्री भ्रातृव्यसङ्घेषु पतन्त्यमोघाः, ताभ्यो मातृभ्यो वै नमो नमः॥,, इति ॥

४ स एवमेव फलीकरणहोमप्रभृति सायं प्रातर्दशरात्रं करोति ॥

सः = कर्ता । एवमेव = सम्प्रकिरणमेव, तावन्मात्रं फलीकरणहोम प्रभृति=प्रथमदिने,सायं प्रभृति सायं प्रातश्च दशदिनपर्यन्तं कुर्यात् ॥४॥

५ नानुत्थितायां सूतिकायां भोज्यान्नता ॥ दशम्या–मुत्थानम् ॥

सूतिकायाः दशदिनपर्यन्तं अन्नभोजनं नास्तीति शिष्टिः ॥ तस्याः सूतकनिवृत्तिपर्यन्तं तत्स्पृष्टान्नमन्येन न भोक्तव्यमित्याचारः लक्षणया तदर्थसिद्धिः ॥५॥

॥ द्वितीयप्रश्ने द्वितीयः खण्डः ॥

## * तृतीयः खण्डः *

### ( ३ नामकरणम् )

१ ए[1]कादश्यां द्वादश्यां वा मातापितरौ स्नात्वा शुच्यगारं कृत्वा पुत्रस्य नामधेयानि निदधीयाताम् ॥

शुचि=पञ्चगव्यादिना ॥१॥

२ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

३ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा गायत्र्या पक्वं हुत्वा प्राजापत्येन सूक्तेन आज्याहुतीरुपजुहोति । ‘‘प्रजापते नत्वत्,, इति षड्भिरनुच्छन्दसम् ॥

४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

---

१ ज. ञ. ठ. दशम्यां ॥

५ पुनः ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा नामास्मै धत्तः– कुलदेवतानामधेयेन ''अमुष्या भक्त,, इति ।।

अत्रेदं बोध्यं- प्रथमसूत्रे ''मातापितरौ,, इत्युक्तं, अत्र ''धत्तः,, इत्युक्तं च । अनेन नामकरणे मातापितरावुभावप्यधिकृतौ । अन्यत्र मातुरुपसर्जनता इति ।। कुलदेवता नाम्ना अमुष्या इति = विष्णुभक्तः । गणपतिभक्तः इति ।।

६ अथ मासनाम्ना– ''कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः । उपेन्द्रो यज्ञपुरूषो वासुदेवस्तथा हरिः । योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात्,, मध्वादिगणनया । ''असौ,, इति ।।

मध्वादि=चैत्रादि । यस्मिन् मासे उत्पन्नः, तन्मासनाम चैत्रादिक्रमेणकृष्णादिनाम ऊहित्वा ''त्वं नक्षत्रनाम्ना कृष्णोऽसि इति वदेत् ।।६।।

७ स्त्रीणान्तु सहादिगणनया– ''लक्ष्मीः श्रीः कमला भद्रा सीता सत्या च रुक्मिणी । माधवी चैत्रिका भूमिः तुलसी जाह्नवी तथा,, इति ।। सहादीति, सलोपश्छान्दसः सहादिगणनया=मार्गशीर्षादि गणनेन ।। ''त्वं लक्ष्मीरसि,, इति ।।

८ अथ नक्षत्रनामधेयेन । यथा–

''रौहिणश्चापभरणो मार्गशीर्षोऽथ कार्तिकः ।
माघ आश्वयुजश्चैत्रो ज्यैष्ठः प्रौष्ठपदस्तथा ।।१।।
श्रावणः शातभिषजो रैवतो द्वादशस्वपि ।
आदिवृद्धिरकारान्तः सम्बुद्धौ रौहिणेति च ।।२।।
तिष्यः फल्गुन आश्लेषो विशाखे हस्त आर्द्रकः ।
श्रविष्ठो मूलकाषाढौ अनूराधोप्यवृद्धयः ।।३।।
सम्बुद्धौ तद्वदेव स्युः अथ स्वातिः पुनर्वसुः ।
एतद्वयं प्रकृतिवत् ज्ञेयान्नामविधौ सुधीः ।।४।।

अथेत्यादि । प्रौष्ठपदशब्देन पूर्वाप्रोष्ठपदं उत्तराप्रोष्ठपदं चैकीकृत्य द्वादशेत्युक्तम् ।। त्रयोदशनक्षत्रेषु अयं नियम इत्यर्थः ।। नाक्षत्र नामकरणे एतानि आदिवृद्धिं सम्बुद्धौ अकारान्तत्वं च भजन्त इत्यर्थः ।। एवं फाल्गुनपदेन पूर्वाफल्गुनीं उत्तराफल्गुनींच, आषाढपदेन पूर्वाषाढं उत्तराषाढं चैकीकृत्योक्तिः ।। तथा चैते द्वादश अवृद्धयः=आदिवृद्धि रहिताः । तद्वदेव=सम्बुद्धौ पूर्ववदकारान्तत्वमेव ।। स्वातिपुनर्वसू एतद्द्वयं प्रकृतिवत्=आदिवृद्धि रहितौ इकारोकारान्तौ क्रमेण ।। एतासां कारिकाणामर्थं उत्तरसूत्रेण स्वयमेव वदन्ति- रोहिणीति ।।८।।

**९ रोहिणी भरणी मृगशीर्षं कृत्तिका मघा अश्विनी चित्रा ज्येष्ठा पूर्वाप्रौष्ठपदा उत्तराप्रौष्ठपदा श्रवण शतभिषक् रेवतीषु तारासु प्रथमाक्षरवृद्धिः । संबुद्धौ अकारांतत्वश्च ।। तिष्य पूर्वाफल्गुनी उत्तराफल्गुनी आश्लेषा विशाखा हस्त आर्द्रा धनिष्ठा मूल पूर्वाषाढा उत्तराषाढा अनूराधासु तारासु प्रकृतिवत् ।।**

आदिवृद्धिर्नेत्येवार्थः ।। सम्बुद्धौ तु अकारान्तत्वं अस्ति ।।

**स्वाति पुनर्वस्वोः प्रकृतिवत् ।।**

आदिवृद्धिरपि न, सम्बुद्धौ अकारान्तत्वमपि नेत्यर्थः ।।९।।

**१० एवं आपभरणाय अपभरणायेति वा । आग्नेये कार्तिकाय कृत्तिकायेति वा ।।**

चतुर्थी विभक्तौ तु भरणी - कृत्तिकयोः आदिवृद्धिं विकल्पयति ।। नामधेयं चतुर्थ्यन्तमुक्त्वा "स्वस्ति भवन्तो ब्रुवन्तु,, इति शेषसूत्रे नाम करणप्रयोगे वक्ष्यते । तदर्थं अभिधानम् ।।१०।।

**११ स्त्रीविषये आबन्तता, स्वातिपुनर्वस्वोः पुंवत् ।।**

स्त्रीविषये पञ्चविंशतिनक्षत्राणामपि आबन्तता, न तु अकारान्तता ।। आदिवृद्धिस्तु स्यादेव ।। स्वातिपुनर्वस्वोः पुंवत् = पुरुषे यथोक्तं

तथा = इकारान्तोकारान्तत्वमित्यर्थः ।।११।।

**१२ अथ व्यावहारिकनामधेयेन- "अयमसाविति । द्व्यक्षरं चतुरक्षरं षडक्षरमष्टाक्षरं वा ।। घोषवदाद्यन्त-रन्तस्थम् ।। द्वीर्घाऽभिनिष्ठानान्तं वा ।। यस्मिꣳस्विदुप-सर्गः स्यात् ।। तद्धि प्रतिष्ठितमिति विज्ञायते ।।**

व्यावहारिकनामधेयेन = व्यवहारोपयुक्तेन नाम्ना । अयमसावित्ति = त्वं रामोऽसि, भीमसेनोऽसि इत्येवम् ।। द्व्यक्षरमित्यादिषु नाम-पदानुषङ्गः । घोषवत् = घोषप्रयत्नवत् । वर्गाणां तृतीयचतुर्थपञ्च-माक्षराणि हयवरलाश्च घोषप्रयत्नवन्तः । तेषु अन्यतमं अक्षरं आदौ यस्य तत् - घोषवदादि नाम्नो विशेषणम् ।। एवमुत्तरत्रापि ।। अन्तः = मध्ये अन्तस्थं = यरलवानामन्यतमं अक्षरं येषु तत् = अन्तरन्तस्थम् ।। दीर्घः अभिनिष्ठानः = विसर्गः अन्ते यस्य तत् = दीर्घाभिनिष्ठानान्तम् ।। दीर्घान्तं विसर्गान्तं वा नामेत्यर्थः । अथवा यस्मिन् स्वित् = वा उपसर्गः = प्रादिषु द्वाविंशतिषु अन्यतमः स्यात् यथा प्रभाकर विभाकर इत्येकम् आपस्तम्बादिषु काम्यनाम्नि रेफलकारान्तत्वनिषेधः कृतः । एतादृशं नामलोके प्रतिष्ठितं इति श्रुतिषु विज्ञायते ।।१२।।

**१३ देवताऽणूकं वा, ऋष्यणूकं वा, यथैवैषां पूर्वपुरुषा-णां नामानि स्युः ।।**

पूर्वोक्तव्यावहारिकनाम्नां विकल्पमाह--देवतेति ।। देवतायाः अणूकं = नाम वा, ऋष्यणूकं = स्वकुलमूलपुरुषाणां ऋषीणां ऋषिकल्पानां वा नाम, यथैव एषां पूर्वपुरुषाणां पितामहादीनां नाम यथाऽवर्तत तथा वा तथैव वा, नामानि भवेयुः ।।१३।।

**१४ त्रयमस्य नामधेयं गुह्यं, अन्यदभिवादनीयम् ।। ओप नयनकालात् मातापितरौ संविदितौ भवतः ।।**

त्रयं = नामधेयानां आद्यानां त्रयं कुलदेवतानाम मासनाम नाक्षत्रनामा-नि ।। गुह्यं = गुह्यानि । आ उपनयनकालात् = तत्पर्यन्तं मातापितरौ

मात्रं संविदितौ = ज्ञातवन्तौ भवतः ॥ नान्ये ॥ अन्यत्=चतुर्थं=व्यावहारिकं नाम अभिवादनीयं=गुरुवृद्धादीनभिवादयितुं योग्यं, अत एव न गुह्यम् ॥१४॥

**१५ विज्ञायते च "तस्माद्द्विनामा ब्राह्मणोऽर्धुकः,, इति**

इति श्रुत्या विज्ञायते इत्यन्वयः ॥ द्विनामा = गुप्तप्रकटभेदेन द्वे नामनी यस्य सः ब्राह्मणः, अर्धुकः=ऋद्धिमान् भवति ॥१५॥

**१६ सोमयाजिनस्तृतीयं नाम कुर्वीत– इति विज्ञायते ॥**

तृतीयं पूर्वोक्ताभ्यामन्यत् सुब्रह्मण्याऽऽह्वानोपयुक्तं-इतिश्रुतौ विज्ञायते। सुब्रह्मण्याऽऽह्वानं श्रौतं कर्म ॥ तस्य तदर्थं व्यवहारनामान्ते "यज्वा,, इति संयोज्य नाम कुर्यात् ॥

**१७ अयुगक्षरं कुमार्यै "स्वस्ति-श्री सौम्या,, इति दीर्घवर्णान्तम् ॥**

कन्याया नाम निरूपयति ॥ स्पष्टोऽर्थः ॥ अयुगक्षरं विषमाक्षरं ॥ श्रीसौम्या, सुशीला, वत्सला, इत्यादि ।

**१८ अत्राप्युदाहरन्ति- शर्मान्तं ब्राह्मणस्य, वर्मान्तं क्षत्रियस्य, गुप्तान्तं वैश्यस्य, भृत्य - दासान्तं शूद्रस्य, दासान्तमेव वा ॥** स्पष्टम् ॥१८॥

**१९ अथ प्रवाससमये ब्राह्मणं न विन्देत, औपासने ज्योतिष्मत्या पुत्रस्य नाम गृह्णाति, उपतिष्ठते वा ॥**

प्रसङ्गात् नामोपयोगमन्यत्र कथयति - अथेति ॥ प्रवासकाले प्राप्तेधारणाग्निपक्षे औपासनकर्तुः इति शेषः । औपासनार्थं ब्राह्मणं न विन्देत, तदा - इति अध्याहारः । ज्योतिष्मत्या = "उद्वयन्तमसस्परि-" इतिमन्त्रेण तदन्ते प्रथमातं पुत्रस्य नाम संयोज्य व्यावहारिकमित्यनुषङ्गः । गृह्णाति उपतिष्ठते वा, वा शब्दश्चार्थे ॥ गृह्णन् उपतिष्ठते इति यावत् ॥१९॥

**॥ इति द्वितीयप्रश्ने तृतीयः खण्डः ॥**

## * चतुर्थः खण्डः *

### ( ४ उपनिष्क्रमणम् )

१ चतुर्थे मास्युपनिष्क्रमणम् ॥

उपनिष्क्रमणं-प्रथमं शिशोः गेहात् समीपे देवालयादिदर्शनाय निष्क्रमणं बहिरिति शेषः ॥१॥

२ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

३ अथ देवयजनोल्लेखनप्रभृति आग्निमुखात् कृत्वा, गायत्र्या पक्वं हुत्वा स्वस्त्यात्रेयं जुहोति- ॥

स्वस्त्यात्रेयं = तन्नामकं " स्वस्तिनोमिमीतां ÷ इत्याद्यष्टर्चंसूक्तम् ॥

४ स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् ॥

५ अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृदन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा देवताः प्रदक्षिणी कृत्य नमस्कृत्य स्वान् गृहानानयति ॥

अत्र उपनिष्क्रमणानन्तरं ब्राह्मणानित्यादि पुण्याहवाचनं उक्तम् । तत्र चित्रियाणि प्रीयन्तामिति वाचनं ज्ञेयम् । प्रदक्षिणीकृत्य-नमस्कृत्येत्युभयत्र अन्तर्णिजर्थो ज्ञेयः ॥ अत्रास्य प्रहुतत्वेन व्याहृत्या हुतशेषनिधानं कर्तव्यम् एवं यत्र यत्रानुक्तिः । तत्रैवमेव ज्ञेयम् ॥ ५ ॥

॥ इति द्वतीयप्रश्ने चतुर्थः खण्डः ॥

## * पञ्चमः खण्डः *

### ( ५ अन्नप्राशनम् )

१ षष्ठे मास्यन्नप्राशनम् ॥

२ ब्राह्मणानन्नेन परिविष्य, पुण्याहं स्वस्तिऋद्धिमिति वाचयित्वा।

३ अथ देवयजनोल्लेखन प्रभृत्याग्निमुखात्कृत्वा गायत्र्या पक्वं

हुत्वा अन्नसूक्तेनाऽऽज्याहुतीरुपजुहोति-" अहमस्मि प्रथमजा ऋतस्ये,, त्यष्टभिरनुच्छन्दसम् ।।

४ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ।।

५ अथौदनं दध्ना मधुना घृतेनाद्भिरिति समुदायुत्य हिरण्येन कुमारं प्राशयति- " या जाता ओषधयः,, इति षड्भिरनुच्छन्दसम् ।।

६ "भूर्भुवस्सुवरपां चौ षधीनां[1] रसमन्नं प्राशयामि शिवास्ता आप ओषधयः सन्त्वनमीवास्मा आप ओषधयः सन्तु[2],, इति सर्वास्वनुषजति ।।

सर्वासु = षट्स्वपि ऋक्षु अन्ते संयोज्य पठेत् ।। अत्रापि हुतशेषनिधानं पूर्ववत् ।। प्राशनन्तु न पक्वात् ।। अतो न प्रहुतत्वहानिः ।।

।। इति द्वितीयप्रश्ने पञ्चमः खण्डः ।।

## * षष्ठः खण्डः *

### [1] ( ६ कर्णवेधः )

१ [3]सप्तमेऽष्टमे वा मासि कर्णवेधः ।।

( बौधायननामेवायं विशेषः संस्कारः )

१ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्तिऋद्धिमिति वाचयित्वा

२ देवयजनोल्लेखनप्रभृति आग्निमुखात् कृत्वा पक्वाज्जुहोति -" ॐ श्रोत्रेणभद्रमुत ÷ इति पुरोनुवाक्यामनूच्य "ॐ येन प्राच्याउत ÷ इति याज्यया जुहोति ।।

४ अथाज्याहुतीरुपजुहोति - "ॐ० प्राणो रक्षति विश्वमेजत् ÷ इति एतेनानुवाकेन प्रत्यृचम् ।।

ऋग्भिर्दशभिर्जुहुयादित्यर्थः ।।४।।

---

१ क. ज. ञ. त्वौषधीनां । २ ञ. सन्त्वसौ ।। ३ च. ज. ञ. अयं खण्डः शेषान्तर्गतः ।।

५ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

६ अथाग्रेणाग्निं वेणुपर्णेषु हुतशेषं निदधाति- "ॐ समुद्राय वयुनाय सिन्धूनां पतये नमः। नदीनाᳪ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहामर्त्यᳪ हविः" इति ॥

७ आशिषो वाचयित्वा लोहितसूच्या वा वेणुकंटकेन वा दक्षिण कर्णमातृणत्ति -"ॐ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह बृहत्युष्णिहाककुत्सूचीभिः शिम्यन्तु त्वा" इति । "ॐ द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा सच्छन्दा या च विच्छन्दा सूचीभिः शिम्यन्तु त्वा" इत्युत्तरकर्णम् ॥

लोहितसूच्या = ताम्रसुवर्णयोरन्यतरशलाकया। वेणुकण्टकेन वंश सूच्यग्रेण, आतृणत्ति विध्यति ॥७॥

८ अथ लोहितसूत्रेण शणसूत्रेण वा कर्णौ बध्नाति- "वरुणस्य स्कम्भनमसी", ति ॥

लोहितसूत्रेण = रक्तकार्पास सूत्रेण यथा वेदना न भवेत् तथाबध्नाति ॥

९ श्वोभूते विसर्जयति- ॐ वरुणस्य स्कम्भ सर्जनमसि" इति

१० सूत्रेण वा वेणुकाण्डेन वा वर्धयति ॥

वर्धयति = रन्ध्रं बृहत्कुर्यात्, यथा आभरणधारणार्थं योग्यं स्यात् ॥

॥ इति द्वितीयप्रश्ने षष्ठः खण्डः ॥

## ❁ सप्तमः खण्डः ❁

### [१] ( ७ चूडाकर्म )

१ संवत्सरे चूडाकर्म। त्रिषु वा वत्सरेषु ॥

संवत्सरे प्रथमे। त्रिषु वा = तृतीये वा ॥ प्रथमः प्रधानकालः ॥ केचित् द्वितीये वत्सरेऽपि कुर्वन्ति ॥ तृतीयादूर्ध्वं उपनीत्या सह ॥

---

१ क. ठ. चौलकर्म ॥

२ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्तिऋद्धिमितिवाचयित्वा।

३ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति "ॐ ये केशिनः प्रथमाः ÷ इति पुरोऽनुवाक्यामनूच्य, "नर्ते ब्रह्मणस्तपसः ÷इति याज्यया जुहोति ॥

४ अथाज्याहुतीरुपजुहोति - "ॐ आरोह प्रोष्ठं विषहस्व ÷ इति आन्तादनुवाकस्य प्रत्यृचम् ॥

५ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

६ अग्रेणाग्निं उदुम्बरपर्णेषु हुतशेषं निदधाति - "ॐ नमो हिरण्यबाहवे सेनान्ये दिशांच पतये नमः,, "इति ॥

७ अथापरेणाग्निं उभयीरपः सन्निषिञ्चति ॥

८ उष्णासु शीता आनयति- "ॐ उष्णेन वायवुदकेनेह्यदितिः केशान् [1]वपति,, इति ॥

"उभयीरपः ,, इति पूर्वसूत्रस्थशब्दमेव विवृणोति-"उष्णासु शीता,, इति आनयति-मिश्रयतीत्यर्थः ॥ ८ ॥

९ ताभिरस्य शिर उनत्ति-" ॐ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे,, इति॥ उनत्ति=आर्द्रीकरोति ॥९॥

१० ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति-"ॐ ओषधे त्रायस्वैनम्,, इति ॥

बर्हिः=दर्भान् ॥ अनूच्छ्रयति = केशाननु शिरसि निदधाति ॥१०॥

११ क्षुरमभिमन्त्रयते-"ॐ क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा माहिꣳसीः,, इति ॥

१२ तमादित्यं दर्शयति-" ॐ ज्योक्च सूर्यं दृशे,, इति ॥

तं=क्षुरम् ॥ आदित्यं=अप्रधानं कर्म । 'आदित्यायेत्यर्थः ॥ १२ ॥

---

१ ज. ग्र. वपतु ॥

१३ अथैनं तिर्यञ्चं निदधाति-,,ॐस्वधिते मैनꣳ हिꣳसीः,, इति।
एनं=क्षुरम्। तिर्यञ्चं=तिर्यङ्मुखं ॥१३॥

१४ अथास्य केशान् वपति-,,ॐ येनावपत्सविता क्षुरेण,, इति।

१५ प्रवपतो अनुमन्त्रयते-,,ॐ माते केशाननुगाद्वर्च एतत्।
इत्येतया ऋचा ॥

प्रवपतः- प्रोप्यमानान्- नापितेनोप्तान् केशानित्यर्थः। अनुमन्त्रयते- दृष्ट्वा जपतीत्यर्थः ॥ १५ ॥

१६ अथैनान् समुच्चित्य दर्भस्तम्बे निदधाति- ,,ॐ तेभ्यो निधानं बहुधा व्यैच्छन्÷ इति ऋचा ॥
दर्भस्तम्बे–दर्भसमूहे ॥ १६ ॥

१७ अथैनमुष्णोदकेनाऽऽप्लावयति–,,ॐ बलं ते बाहुवोः÷ इत्येतया ऋचा ॥
एनं-कुमारम्॥ उष्णोदकं मङ्गलकरम्॥ १७॥

१८ अथैकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्यात् ॥

१९ यथर्षिशिखा निदधातीत्येके ॥

कुलधर्म इत्यस्यैव विवरणम्। स्वगोत्रे यावन्तः प्रवरऋषयः तावतीः शिखा निदध्यात् ॥१९॥

२० विज्ञायते च-,,शतानां सप्त त्रिगुणं अष्टोत्तरमथापि वा ॥
केशानामपि संख्यानां शिखैका परिकीर्तिता,, इति ॥

विज्ञायते, श्रुतिषु इति शेषः ॥ अष्टोत्तरशताधिकद्विसहस्रकेशाः एक शिखायाः प्रमाणम् ॥२०॥

२१ अथैनꣳ संस्नाप्याऽऽच्छाद्यालङ्कृत्य त्रिवृदन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयति॥ इति प्रहुतो व्याख्यातः ॥

आच्छाद्य = वस्त्राद्यैरलङ्कृत्य। पुण्याहं वाचयेत् ॥२१॥

॥ इति द्वितीयप्रश्ने सप्तमः खण्डः ॥

*** अष्टमः खण्डः ***

**( ८ पुत्रदुहित्रोः संस्कारसाम्यादिविचारः, अग्निकार्यं, औपासनपदार्थः )**

**१ अथाहुतः**

प्रहुतं समाप्य आहुतमारभन्ते-अथेत्यादिना-

**अत्राप्युदाहरन्ति— पुत्रायच दुहित्रे च समानी ब्राह्मणी क्रिया। मन्त्रवद्गर्भ आजन्म जन्माद्या आवृताः स्त्रियाः ॥१॥**

आहुते उपनयनमारप्स्यमाणाः तदुपयोगितया कांश्चिद्विशेषान् प्रदर्शयन्ति- अत्रापीत्यादिना- ब्राह्मणीक्रिया = संस्कारात्मिका उभयोः समाना। तत्र दुहित्रे विशेषमाह-मन्त्रवदिति। गर्भे आजन्म =गर्भे स्त्री वा पुमान्वेति ज्ञानाभावेन प्रसवपर्यन्तं गर्भाधान पुंसवनसीमन्तविष्णुबल्यन्ताः संस्काराः मन्त्रवत् = समन्त्रका एव। जन्माद्याः = जातकर्मादिक्रियाः आवृताः केवलं आवर्तनीयाः न तु तासु मन्त्रवत्प्रयोगाः ॥ पुनः ब्राह्मणीक्रिया = उपनयनं. इत्यावृत्य समानी पुत्रवत् दुहितुरपि मन्त्रवत्.कार्या इत्यर्थः सम्पद्यते॥ स्त्रीणामुपनयनं पाणिग्रहः-इति अनुपदं वक्ष्यते ॥

**" सर्वेषु व्याहृतीर्विद्यात् अनाम्नातेषु कर्मसु।
होतव्या ब्रह्मभूयाय नाक्रियो ब्राह्मणो भवेत् ॥२॥,,**

सर्वेषु अनाम्नातेषु = अनादिष्ट मन्त्रेषु कर्मसु व्याहृतीश्चतस्रः, होतव्याः ॥ अनेन मन्त्ररहितेषु स्त्रीसंस्कारेषु जातकर्मादि चौलान्तेषु व्याहृतिभिर्होमः कार्यः इति सिध्यति। तेन साऽपि ब्रह्म भूयाय = ब्राह्मणत्वाय,योग्या भवतीतिशेषः॥ नाक्रिय-इति, अग्नि

क्रिययोरभावे, ब्राह्मण एव न भवेत् । उपलक्षणया अग्निग्रहणं, तस्याभावे क्रियाऽसम्भवात् ॥२॥

**" अनग्निरक्रियः शूद्रः यस्माज्जातोऽग्निना द्विजः ।**

**नामधेयादिहोतव्यं आकार्यादरणीगतम् ॥३॥**

तदेवाह:--अनग्निरिति ॥ यस्मात् द्विजः अग्निना सहैव जातः ॥ अतः तत्र संस्कारादि कार्यमेव ॥ नामधेयादि–इत्युपलक्षणं-सकलसंस्काराणाम् ॥ अतः तत्त्यागोऽनुचितः ॥ आकार्यादिति-आकार्यात् =संस्काररूपकार्यप्रात्यवधि, अरणीगतं–अरण्यां समारोपितं; औपासनाग्नि कार्यकाले मथित्वोत्पाद्य तत्राग्नौ संस्कारः कार्यः ॥३॥

**" मथित्वा वाऽथ शकलान् समिद्धे मन्त्रवत्तथा ।**

**उपनीयाथवाजस्रं स्वयं चारणिजाग्निना ॥४॥**

होतव्यमित्यनुवर्तते ॥ मथित्वा-अरणिं, वा=अथवा शकलान् =समारोपिताग्निसमिधः, समिद्धे=प्रज्वलितेऽग्नौ मन्त्रवत् तथा =होतव्यम् । अथवाअजस्रं=सदातनं उपनीय=सन्धार्य होतव्यं, च स्वयं=कर्ता स्वाधिकृतकर्मसु-अरणिजाग्निना प्रचरेत इतिशेषः ॥ पुनररणिजेत्युक्तिः तदग्नौ विशेषाऽऽस्थां सूचयति ॥४॥

**"सायं प्रातर्विधानेन समिधस्तत्र हूयते ।**

**गुरुशुश्रूषणरतः समारोप्यात्मनि स्वयम् ॥५॥**

इदानीं उपनीतस्य वटोः धर्मः कथ्यते–सायमिति ॥

स्वयं=उपनीतः सन् आत्मनि समारोप्य, अग्निमित्यार्थिकम् गुरुशुश्रूषणरतः = सेवया गुरुं सन्तोषयन्, तत्राग्नौ लौकिके समारोपिते सायं प्रातः–उभयस्मिन्नपि काले समिधः चतस्रः हूयते = जुहुयात् ॥ हूयते इत्यार्षं एकवचनम् ॥

**"याते अग्नेति मन्त्रेणोपावरोहेति (मन्त्रतः) लौकिके ।**

**हुत्वा व्रतानुचारी स्यात् समावृत्तो गुरोर्मुखात् ॥६॥**

लौकिकाग्नौ· याते अग्ने यज्ञियातनूः÷इति मन्त्रेणात्मनि समारोपितं उपावरोह जातवेदः ÷ इति मन्त्रेणानीय पूर्ववत् हुत्वा व्रतानु-

चारी = वेदव्रतं अनुचरन् व्रतान्ते विद्यान्ते वा गुरोर्मुखात् = गुरोः सकाशात् समावृत्तः प्रतिनिवृत्तः, समावर्तनं कर्म कृत्वेति अर्थसिद्धं, विवाहं कृत्वेति उत्तरेणान्वयः ॥६॥

**"विवाहं विधिवत्कृत्वा गृहस्थाश्रममा[1]विशेत् ॥**
**वैवाहिको विधिः स्त्रीणां औपनायनिकः स्मृतः ॥**
**तावुभौ चारिणौ[2]तस्मात् औपासनमिति स्मृतम्[3] ॥७॥**

विवाहं विधिवत् = ब्राह्मादि विधानेन, कृत्वा गृहस्थाश्रमं = द्वितीयं आविशेत् ॥ विवाहप्रसङ्गात् स्त्रीणामुपनयनं प्रस्तुवन्ति - स्त्रीणां विवाह एवौपनायनिकः उपनयनं इति स्मृतः ॥ एवंच तासां एक एव संस्कारः उभयरूपत्वेन गणनीयः वस्तुतस्तु–पाणिग्रहो विधिरुपनयनं, विवाह होमस्तु विवाह संस्कारः, इति ज्ञेयम् ॥ तावुभौ = दम्पती उप=साकं चारिणौ=परिचर्यां कुर्वाणौ अग्नेरुप=समीपे आसाते, इत्यतः तत्कर्म औपासनमिति स्मृतं = कथ्यते । श्रुतिरिति पाठेतु एवमर्थं वतीश्रुतिरस्तीत्यर्थः ॥ ७ ॥

**२ (९ उपनयनं तत्कालविधानादि) गर्भाष्टमेषु ब्राह्मण मुपनयीत । गर्भैकादशेषु राजन्यं । गर्भद्वादशेषु वैश्यम् ॥**

प्रसङ्गागतं समाप्योपनयनं विवक्षन्तः उपनयनकालानाहुः क्रमेण– गर्भेति गर्भादष्टमे वर्षे इत्यर्थः । बहुवचनमविवक्षितं । अथवा पञ्चमादिषु चतुर्षु इत्यर्थकम् ॥ २ ॥

**३ आषोडशाद्ब्राह्मणस्य नात्ययः । एवमेवेतरयोः द्वाविंशतिः चतुर्विंशतिश्च ॥**

क्रमेणोपनयनान्तिममवधिं निर्दिशन्ति । नात्ययः = कालः नातीतो भवति ॥३॥

**४ अथ काम्यानि भवंति –**

**सप्तमे ब्रह्मवर्चसकामं, अष्टमे आयुष्कामं, नवमे तेजस्कामं**

---

१ ग. ड. च. आवसेत् । २ क. ग. ठ. साकं । ३ घ. ङ. छ. श्रुतिः ।

**दशमेऽन्नाद्यकामं, एकादशे इन्द्रियकामं, द्वादशे पशुकामं, त्रयोदशे मेधाकामं, चतुर्दशे पुष्टिकामं, पञ्चदशेऽभ्रातृव्यकामं, षोडशे सर्वकामम् ॥**

ब्रह्मवर्चसं = शमदमादिसम्पत् । तेजस् = मुखाद्यवयवसौन्दर्यम् । इन्द्रियं = इन्द्रियसौष्ठवम् । मेधा = वेदादिधारणशक्तिः । पुष्टिः = शारीरं बलं । अभ्रातृव्यं=शत्रुराहित्यं ॥ एते कामाः राजन्यवैश्ययोरपि यथायथं योजनीयाः ॥४॥

**५ वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम् ॥ वर्षासु रथकारं, सर्वानेव वा वसन्ते ॥**

उपनयनकर्मणः कालो निर्दिश्यते ॥ अत्र राजन्यवैश्ययो. उपनयनविधानं कालांतरविषयः । इदानीं तयोरभावात् ॥ पुराणेषु "नन्दान्तं क्षत्रियकुलं,, इत्यादिषु तथोक्तत्वात् । प्रायश्चित्तेन्दुशेखरेऽपि नागोजिभट्टेन शुद्धिप्रकरणे " क्षत्रियवैश्ययोरेतत्कालेऽभावात्तच्छुद्धिः न विचार्यते,, इति स्पष्टमुक्तम् ॥ एवमेव बहुत्र वर्तते । आचार्यास्तु अश्वालम्भं गवालम्भमपि सूत्रयन्तः स्वसूत्रग्रन्थस्य चतुर्युग व्याप्ति मन्यन्ते ॥५॥

**६ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा, कुमारं [१]ब्राह्मणैः सुवासिनीभिश्च सह भोजयित्वा तस्य चौलवत् तूष्णीं केशानोप्य स्नातं शुचिवाससं बद्ध-शिखं यज्ञोपवीतं प्रतिमुञ्चन् वाचयति–"ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः,, इति ॥**

ब्राह्मणानित्यादि उपनयनाङ्ग पुण्याहवाचनम् । सुवासिनीभिरिति, मातृसदृशाभिः सहभोजनं कारयित्वेत्यर्थः ॥

उपनयनानन्तरं स्त्रीभिः सह भोजनस्य निषेधः ॥ प्रतिमुञ्चन्=धारयन् । वाचयति=मन्त्रं कुमारं इति कर्मद्वयम् ॥६॥

---

१ ख. ग. ञ. ब्रह्मचारिभिः । क. ठ कुमारं भोजयित्वा इत्येव

७ यज्ञोपवीतिनं अप आचमय्याथ देवयजनमुदानयति ॥

आचमय्य,द्विरिति शेषः॥ तथा, शास्त्रं आदावप्याचमनं शास्ति ॥ देवयजनं=उपनयनहोमदेशं प्रति, उदानयति=हस्ते गृहीत्वाऽऽनयति ।७।

८ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा–पालाशी७समिधमाज्येनांक्त्वा अभ्याधापयन् वाचयति–"ॐ आयुर्दा देवजरसं÷ इति ॥

मन्त्रं वाचयन् कुमारेण पालाशीं समिधं अग्नौ प्रक्षेपयति ॥८॥

९ अथैनमुत्थाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमा–स्थापयति–" आतिष्ठेमं ÷ इति ॥

उत्तरेणाग्निं=अग्नेरुत्तरतः स्थितमश्मानं दक्षिणेन पदा, कुमारस्येति शेषः आस्थापयति आस्थापयन् इमं मन्त्रं पाठयति ॥९॥

१० अथैनं ति[१]ष्यो वासः सद्यःकृत्तं उदक्परिधापयन् वाचयति– "ॐ या अकृन्तन् ÷ इति ॥

तिष्यः=आचार्यः। तिष्ये इति पाठेतु-तिष्ये=पुष्यनक्षत्रे सद्यःकृत्तं=नूतनं वासः इत्यन्वयः ॥ उदक्=उत्तरदशं ॥१०॥

११ परिहितमनुमन्त्रयते,, ॐ परिधत्तधत्त÷,, इति ॥ "परीदं वासो अदिधाः ÷ इति च ॥

परिहितं = परिधापितं- वास इत्यनेनान्वयः ॥११॥

१२ अथैनं मौञ्जीं मेखलां त्रिवृतां त्रिःप्रदक्षिणं परिव्ययन् वाचयति - "ॐ इयं दुरुक्तात्परिबाधमाना÷ इति॥

मौञ्जीं मेखलां=मुञ्जासूत्रमयीं मेखलापदवाच्यां कटौ धार्याम् ॥ कार्पासमयीं मेखलां उपवीतवद्धार्यां चेति शेषपूरणेन व्याख्येयम् ॥ यतस्तदुभयोरपि अयमेव मन्त्रः ॥ १२॥

---

१ ज. तिष्ये। ञ. तिष्ये वासः सद्यः कृत्तोतं।

**१३ मौञ्जीं ब्राह्मणस्य, ज्यामौर्वीं राजन्यस्य, आविकसूत्रीं वैश्यस्य, सर्वेषामेव वा मौञ्जीम् ॥**

वर्णभेदेन मुञ्जादि भेदः । ज्यामौर्वीं =धनुर्गुणमयीम् । मुर्वाख्यतृणमयीमिति यावत् ॥ आविकसूत्रीं = ऊर्णामयीं ॥ सर्वेषामेव वेति विकल्पः ॥१३॥

**१४ परिवीतां अनुमन्त्रयते– "ॐ ऋतस्य गोप्त्री तपसः ÷ इति ॥**

परिवीतां = धृताम् ॥१४॥

**१५ ग्रन्थिं करोति–"प्राणानां ग्रन्थिरसि समाविस्रसः,, इति नाभिदेशे ॥**

मेखला – मौञ्ज्योरुभयोरपि नाभिदेशे ग्रन्थिं कुर्यात् ॥ मेखला –उत्तरीयम् ॥

**१६ अथास्मा अजिनं उपवीतवत् प्रतिमुञ्चन् वाचयति –" ॐ मित्रस्य चक्षुर्धरुणं ÷ इति ॥**

उपवीतवत् – उपवीतानीव–सव्यं, ॥

**१७ कृष्णाजिनं ब्राह्मणस्य, रौरवं राजन्यस्य, बस्ताजिनं वैश्यस्य, सर्वेषां वा कृष्णाजिनम् ।**

कृष्णाजिनं= कृष्णमृगचर्म । रौरवं – रुरुमृगचर्म । बस्ताजिनं =, अजचर्म । सर्वेषामिति विकल्पः ।

**१८ चतुरङ्गुलं ब्राह्मणस्य, त्र्यङ्गुलं राजन्यस्य, द्व्यङ्गुलं वैश्यस्य ॥**

अजिनप्रमाणमाह ॥ चतुरङ्गुलं इति ॥१८॥

**१९ अथास्मै दण्डं प्रयच्छति- पालाशं बैल्वं वा ब्राह्मणस्य, नैयग्रोधं स्कन्धजमवाग्रं रौहितकं वा राजन्यस्य, बादरमौदुम्बरं वा वैश्यस्य ॥ सर्वेषां वा वार्क्षम् ॥**

स्कन्धजं – स्कन्धदेशोत्पन्नं, अवाग्रं – अधोमुखं, इदं नैयग्रोधस्य,

विशेषणद्वयम् । न्यग्रोधे अधः प्रसृतं प्रसिद्धं । वार्क्षं= याज्ञियवृक्ष मयं । पालाशमिति पाठे स्पष्टोऽर्थः ॥ एतद्दण्डस्य प्रमाणं व्यास स्मृतौ-"शिरो ललाट नासाग्रप्रमाणा वर्णतः क्रमात् । याज्ञिकस्य च वृक्षस्य दण्डा अर्हन्ति धर्मतः,, इत्युक्तं ॥ रौहितकं= कण्टकि पालाशम् ॥ बादरं=बदरवृक्षमयम् ॥

" सोमोऽसि सोमपं मा कुरु,, इति पालाशम् ॥

" ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा,, इति बैल्वम् ॥

" ओजोस्योजो मयि धेहि,, इति नैयग्रोधम् ॥

" बलमसि बलं मयि धेहि,, इति रौहितकम् ॥

" पुष्टिरसि पुष्टिं मयि धेहि ,, इति बादरम् ॥

" ऊर्गस्यूर्जं मयि धेहि ,, इत्यौदुम्बरम् ॥

" अहं वृक्षस्य रेविवा ÷ वेदानुवचनं ,, इति वार्क्षम् ॥

अत्र दण्डानां प्रदाने पृथङ्मन्त्राः उक्ताः । पालाशमित्यादीनां द्वितीयान्तानां दण्डं प्रयच्छतीत्यनुकृष्य योजनं बोध्यम् ॥ १९ ॥

२० " को नामाऽसि,, ? " असौ नामाऽस्मि,, इति शाट्यायनकम् ॥

अत्र प्रश्नोत्तरे घटिते । तत्र "असौ,, पदस्थाने व्यावहारिकं नाम स्वं कुमारो ब्रूयात् । इदं शाट्यायनमहर्षिप्रोक्तत्वेनाचार्यैः उद्धृतं कर्म ॥२०॥

२१ अथैनं दक्षिणहस्ते गृह्णाति- " ॐ यस्मिन्भूतं च भव्यं च सर्वे लोकाः समाहिताः । तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णामि असौ,, इति ॥

अत्रापि असौ पदस्थाने वटोः व्यावहारिकं नाम सम्बुध्यन्तं ऊह्यम् । गृह्णाति-आचार्यः ॥

२२ अथैनं देवताभ्यः परिददाति- " ॐ देवेभ्यस्त्वा परिददामि विश्वदेवेभ्यस्त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः

**परिददामि सर्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददाम्यसौ,, इति असौ पदस्थाने व्यावहारिकं नामोहति सम्बुध्यन्तम् ॥**

परिददाति = रक्षार्थं वशं करोति ॥ व्यावहारिकं वटोर्नाम ॥ ऊहति = संयोज्य पठति ॥

॥ इति द्वितीयप्रश्नेऽष्ठमः खण्डः ॥

## * नवमः खण्डः *

### ( १० उपनयः, होमश्च )

**१ अथैनं उपनयति –"ॐ देवस्यत्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयेऽसौ,, इति ॥**

उपनयति = समीपे नयति । ब्रह्मसमीपं नयति । ब्रह्मपदस्य वेदः तत्वं तपः – आदयो ह्यर्थाः सन्ति । वेदमात्रं अत्र विवक्षेत् ॥ अत्रापि असौ पदस्थाने कुमारस्य व्यावहारिकं नाम सम्बुध्यन्तं गृह्णीयात् ॥१॥

**२ अथ कुमारः पक्वाज्जुहोति –"ॐ यश्छन्दसामृषभो ÷ इति ॥**

**३ अथाज्याहुतीरुपजुहोति –"ॐ क्षेत्रियैत्वा निरृत्यैत्वा÷ इति षड्भिरनुच्छन्दसम् ॥**

**४ एवमेव ब्रह्मसूक्तेन जुहोति – ब्रह्मजज्ञानमिति षड्भिः ॥**

**५ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥**

**६ अथाग्रेणाग्नि पालाशपर्णेषु हुतशेषं निदधाति "ॐनमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे,, इति ॥**

### ( ११ उपनयनव्रतं सावित्र्युपदेशश्च )

**७ अथ सावित्रं व्रतम् ॥**

सवितृपदेन गायत्र्युपलक्ष्यते । सावित्रं = गायत्र्युपदेशांगभूतं व्रतमिति यावत्।।७।।

८ अथ पालाशीश्चतस्रः समिधः आर्द्राः सपलाशाः सप्रारोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति –ॐ अग्ने व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताऽस्वाहा,, "वायो व्रतपते०,, "आदित्यव्रतपते०,, "व्रतानां व्रतपते०,, इति ।।

विवाहव्रतव्याख्यायामुक्तमत्रानुसन्धेयम् ।।८।।

९ अथापरेणाग्निं उदगग्रं कूर्चं निधाय तस्मिन् प्राङ्मुख आचार्य उपविशति – "राष्ट्रभृदस्याचार्याऽऽसन्दी मात्वद्योषम् ,,इति ।।

आचार्यः =उपदेशकः पित्रादिः ।।

१० तस्याग्रे कुमारो दर्भेषु प्रत्यङ्मुख उपविश्य गुरोः पादावन्वारभ्याह -"सावित्रीं भो अनुब्रूहि,, इति ।।

पादान्वारम्भणप्रकारः धर्मसूत्रे कथितः । "दक्षिणं दक्षिणेन सव्यं सव्येन चोपसङ्गृह्णीयात् दीर्घमायुः स्वर्गं चेच्छन् । " असावहं भोः - इति श्रोत्रे संस्पृश्य मनःसमाधानार्थम्,, इति ।। श्रोत्रस्पर्शन प्रकारोपि मनुना दर्शितः "हस्ताभ्यां स्वस्तिकं कृत्वा श्रोत्रे चोपस्पृशेत् ततः । व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ,, इति ।। व्यत्यस्त पाणिना श्रोत्रयोरुपस्पर्शनं स्वस्तिकम् ।। गुरुपादोपसग्रहणमपि दक्षिणेन दक्षिणं पादं वामेन वाममिति ।।

११ तस्मा अन्वाह- "ॐ ,, इति।।

अन्वाह= अनुमन्यते ।।

"तत्सवितुर्वरेण्यं,, ÷ इत्येतां गायत्रीं पच्छोऽर्धर्चशः ततः समस्तां, व्याहृतीर्विहृताः पादादिषु अर्धर्चयोः उत्तमां कृत्स्नायां अनुब्रूयात् ।।

पच्छोऽर्धर्चशः – पादे अर्धर्चे च विभज्य । समस्तां =पूर्णां, उपदिशेत् इति, त्रिवारमिति चाध्याहार्यम् ।। एवं त्रेधाविभागे व्याहृतीः भूर्भुवः सुवः,, इत्येताः विहृताः विभक्ताः क्रमेण पादादिषु, योज्याः, गायत्र्याः इति अर्थलब्धं । अनुब्रूयात् = आदौ योजयेत् एवं पुनः विभक्ताः आद्ये अर्धर्चयोः उत्तमां समस्तायां च योजयेत् ।। अत्रैवं सिध्यति– ॐ भूः तत्सवितुर्वरेण्यं, भुवः भर्गो देवस्य धीमहि, सुवः धियो यो नः प्रचोदयात् ।।१।। ॐ भूः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, । भुवः धियो यो नः प्रचोदयात् ।२। ॐ सुवः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो यो नः प्रचोदयात् ,, इति ।।३।। ।।११।।

( १२ पक्वशेषप्राशनं ब्रह्मचर्यधर्मोपदेशश्च )

**१२ अथ कुमारः पक्वादुपादाय प्राश्नाति–"ॐ शरीरं मे विचर्षणं ÷ इति ।।**

।। पञ्चवाक्यैरयं मन्त्रः ।।

**१३ तदुहैके प्राक्सावित्र्याः प्राश्नन्ति, " ब्रह्म वा अन्नं,, इति वदन्तः ।**

अन्नस्य ब्रह्मरूपत्वात् सावित्र्युपदेशात् पूर्वं पक्वशेषप्राशनमिति एकेषां पक्षः ।। १३ ।।

**१४ तदु तथा न कुर्यात् । नानुक्तायां सावित्र्यां प्राश्नीयात् – इति ।।**

तदु = तन्नयुक्तं । तथा न कुर्यात् । उपदेशात्पूर्वं न प्राश्नीयात् ।। सावित्र्या ब्रह्मवाचकत्वेन ब्रह्मप्राप्त्युपायत्वात् । ततः परं ब्रह्मरूपमन्नं अमृतभावनया प्राश्नीयादिति आचार्यमतम् ।।१४।।

**१५ अनुक्तायां सावित्र्यां न प्राश्नीयादिति शाट्यायनकम् ।।**

स्वमतमुपोद्बलयितुं शाट्यायनमतमुपन्यस्तम् ।।

**१६ अथाप उपस्पृश्य माध्याह्नसन्ध्यामुपास्य ज्योतिष्मत्या**

-ऽऽदित्यमुपतिष्ठते—"उद्वयन्तमसस्परि ÷,, इति ॥

अपउपस्पृश्य =आचम्य ॥ उद्वयन्तमस इति मन्त्रस्य ज्योतिष्मतीति संज्ञा ॥ १३ ॥

१७ अथैन७ स७शास्ति—

आज्ञापयति गुरुरिति शेषः ॥

"ब्रह्मचार्यसि,, अपोशान,, "कर्म कुरु,, मा दिवा सुषुप्थाः,, "समिध आधेहि,, "भैक्षाचर्यं चर,, "सदाऽरण्यात् समिध आहर,, "उदकुम्भं चाहर,, "आचार्याधीनो वेदमधीष्व,, इति

ब्रह्मचार्यसि = इतः परं ब्रह्मचर्यधर्मपालनं नियमेन कर्तव्यम् ॥ अपोऽशान=मूत्रपुरीषानन्तरमपि च भोजनस्यादावन्ते चाचमनं कुरु ॥ अन्नस्यानग्नतायै ॥ कर्म= सायंप्रातः सन्ध्याग्निकार्यादि; कुरु ॥ समिधः व्याहृतिभिश्चतस्रः सायंप्रातः आधेहि ॥ भैक्षेति—भिक्षान्न भोजनेन विद्याऽभिवृद्धिर्भवति, अतोऽनुदिनं कर्तव्यम् ॥ सदेति — अग्निकार्यार्थमपेक्षिताः समिधो नित्यमाहर ॥ उदकुम्भं गुरुसेवार्थं माहर ॥ गुरुसेवा ब्रह्मचर्ये मुख्या ॥ आचार्याधीनः = तदाज्ञानुवर्ती ॥१७॥

१८ स एवमेवैतत्सर्वं करोति ॥

( १३ भिक्षानियमः श्रद्धामेधापूजादि )

१९ अथास्मै अरिक्तं पात्रं प्रयच्छन्नाह "मातरमेवाग्रे भिक्षस्व,, इति ॥

अरिक्तं पूर्ण । अग्रे इत्यनेन अन्यास्वपि भिक्षां नियमयति ॥१९॥

२० स मातरमेवाग्रे भिक्षते । ततोऽन्याः ॥

"भवति भिक्षां देहि,, इति ब्राह्मणो भिक्षेत ।

"भिक्षां भवति देहि,, इति राजन्यः ।

"देहि भिक्षां भवति,, इति वैश्यः ।

अयं सप्ताक्षरो याचनमन्त्रः ॥ भवत्यादिः ब्राह्मणस्य । भवति मध्यो राजन्यस्य । भवत्यन्तो वैश्यस्येति रहस्यम् ॥२०॥

**२१ तत्समाहृत्य आचार्याय प्रयच्छन्नाह-" भैक्षमिद,, मिति ॥ तत् " सुभैक्षमि,,तीतरः प्रतिगृह्णाति ॥**

तत् शिष्येण साकमाचार्य उपयुनक्ति इत्यर्थसिद्धम् ॥२१॥

**२२ उत्तरेणाग्नि द्वे स्त्रीप्रतिकृती कृत्वा, गन्धैर्माल्येन-चालकृङ्त्य त्रिवृतान्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा "श्रद्धामेधे प्रीयेताम्,, इति ॥**

कृत्वा-इति आवाह्येति शेषः ॥ त्रिवृतेति इदं श्रद्धामेधापूजाङ्ग पुण्याहवाचनम् ॥ २२ ॥

**( १४ सन्ध्यादिनियमाः )**

**२३ प्रसिद्धं सन्ध्योपासनम् ॥**

धर्मसूत्रे ( २. ४. ७. ) वक्ष्यमाणं सिद्धवत्कृत्य प्रसिद्धमित्युक्तम् ॥

**त्र्यहमेतमग्निं धारयन्ति । क्षारलवणवर्जं, अधः शय्या, ब्रह्मचर्यं च ॥**

क्षारेति-- तादृशं भोजनम् । त्र्यहमग्निधारणादिव्रतं नित्यम् ॥२३॥

**२४ " ईशानाय नमो गो- पितृ- मातृ- देवेभ्यः ,, इति अभिवादनं ।**

नित्यं सायं प्रातः इत्यध्याहारः ॥

**२५ अथ गुरूनभिवादयते ॥**

**२६ मातरं पितरं भ्रातरं मातुलं आचार्यमन्यांश्च त्रिवर्षपूर्वान् ॥**

**२७ एतस्मिन्नेवाग्नौ व्याहृतिभिः सायं प्रातः समिधोऽभ्यादधाति ॥**

**२८ एवमन्यस्मिन्नपि सदा ॥**

एवं प्रथमदिने इव अन्यस्मिन्नहन्यपि कार्यम् । तथा सदा कार्यम्, यावत् स्नातकत्वप्राप्तिरिति शेषः ॥

( १५ अग्निकार्यम् )

२९ अथैनं प्रदक्षिणमग्निं परिसमूहति–"ॐ जुषस्वनः÷इति ॥

पूर्वसूचितमग्निकार्यं विवृण्वन्ति ॥ समूहति=अन्तर्भावितणिच् ॥२९॥

३० अथैनं प्रदक्षिणमग्निं परिषिञ्चति-" अदितेऽनुमन्य स्वेत्यादिभिः ॥

३१ तस्मिन् व्याहृतिभिः सायं प्रातः समिधोऽभ्यादधाति "ॐ भूः स्वाहा । भुवः स्वाहा । सुवः स्वाहा । भूर्भुवस्सुवः स्वाहा,, इति

होमे चतस्रो व्याहृतयः । अन्यत्र तिस्रः " तिस्रोव्याहृतयो ज्ञेयाश्चतस्रो होमकर्मणि ,, इति विश्वामित्रकारिका ॥६९॥

३२ तथैव परिषिञ्चति –" अन्वमंस्थाः, प्रासावीः,, इति मन्त्रान्तान् सन्नमयति ॥

अर्थ उक्तपूर्वः ॥३२॥

३३ अथैनमुपतिष्ठते –" यत्ते अग्ने तेजः ÷ इति त्रिभिः "मयि मेधां मयि +,, इति त्रिभिश्च । "षोढा विहितो वै पुरुषः ,, इत्येतस्माद् ब्राह्मणात् ॥

तेज आदिभिः षड्भिः धर्मैः अग्निष्ठैः पुरुषः विहितः = युक्तो-भवतीति ब्राह्मणार्थः ॥३३॥

॥ इति द्वितीयप्रश्ने नवमः खण्डः ॥

* दशमः खण्डः *

( १६ उपनयनचतुर्थीकर्म व्रतविसर्जनं सुश्रवःपूजाच )

१ तिसृषु व्युष्टासु एतमग्निमादाय तां दिशं यान्ति यत्रास्य पलाशः स्पष्टो भवति ॥

व्युष्टासु = गतासु. रात्रिषु । तां दिशं = तत्समीपं । अस्य = कुमारस्य पलाशः = प्रसिद्धो वृक्षः, स्पष्टः = शाखोपशाखादिना विस्तृतः ॥१॥

२ तं प्रदक्षिणं परिसमूहति– "सुश्रवः सुश्रवसं मा कुरु ÷ इति ॥

३ तस्याग्रेणोत्तरेण वाऽग्निमुपसमाधाय सम्परिस्तीर्य, अथाव्रत्यप्रायश्चित्ते जुहोति = "ॐ यन्म आत्मनः, "पुनरग्निश्चक्षुः ÷ इति द्वाभ्याम् ॥

अव्रत्यं = व्रतमध्ये कस्यापि धर्मस्य विच्छित्तिः । तद्दोषापनयनाय प्रायश्चित्तम् ॥ सर्वत्र अव्रत्यप्रायश्चित्ते मिन्दाहुती एव ॥

४ अथ पालाशीः समिधः, आर्द्राः, सपलाशाः सप्रारोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति – "अग्ने व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधिस्वाहा, वायो व्रतपते, आदित्य व्रतपते व्रतानां व्रतपते–इति । याज्ञिकानां वृक्षाणामन्यतमस्य वा ॥

समिधइत्यनुवर्तते ॥४॥

५ तथैव सुश्रवसमभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा सुश्रवाः प्रीयंतामिति ॥

त्रिवृतेति – सुश्रवःपूजाङ्गं पुण्याहवाचनम् ॥ ५ ॥

६ दण्डमजिनं मेखलां वासश्चातिसृजति ॥

तत्रैवेत्यध्याहारः । अतिसृजति = विसृजति ॥ ६॥

७ अथान्यान्यादाय, अथाचार्यः तदुत्सृष्टं वास आदत्ते "ॐ यस्यते प्रथमवास्य७ हरामस्तन्त्वा विश्वे अनु– मदन्तु देवाः । तन्त्वा भ्रातरः सुहृदो वर्धमानमनु- जायन्तां बहवः सुजातम् ,, इति ॥

आदायेति, धारयतीति शेषः । उत्सृष्टवस्त्रस्य आचार्येणादाने किमौचित्यं ? प्रथमं तावत् – तस्य वस्त्रस्यानतिपुराणत्वात् उपयोगार्हत्वाच्च, उपयोगार्हं वस्तु बहिः त्यक्तुमनुचितत्वाच्च, तथा उत्सृष्टा पुनर्ग्रहणस्य अनौचित्याच्च, अन्येषां तत्रासन्निधानाच्च, आचार्येणैव आदानं, युक्तम्, वटुगृहे तदुपयोगश्च सर्वतोननुचित एव ॥ प्रतिपत्तिविधिबोधकंच तत् । सूत्रान्तरैकवाक्यत्वेन, युक्तमेवेति कल्प्यते ॥७॥

**८ अथ अधोनाभि, उपरि जानु आच्छाद्य , दण्डमजिनं मेखलां वासश्च धारयन्, श्राद्धसूतकसंङ्गममैथुन मधुमांसानि च वर्जयन्, भैक्षाऽऽहारः अधःशायी च आचार्यस्य गृहानेति ,, इति ॥ "विज्ञायते आचार्यो वै ब्रह्मेति ॥**

अधोनाभि=नाभेरधः । उपरि जानु= जानूपरि । आच्छाद्य =वस्त्रं धृत्वा, वासः =उत्तरीयं । मैथुनं = अष्टाङ्गम् ॥ " स्मरणं–कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्तिमनीषिणः । विपरीतं ब्रह्मचर्यं एतदेवाष्टलक्षणम् ,, इति ॥ आचार्यस्य गृहानेति वेदाध्ययनाय ॥ ॥उपनयनं =आचार्यसमीपप्रापणमित्यप्यर्थः ॥ आचार्योब्रह्मेति भावयन् तत्कुले वसेत् ॥८॥

**॥ इति द्वितीयप्रश्ने दशमः खण्डः ॥**

*** एकादशः खण्डः ***

**( १७ समावर्तनसामग्री तत्कालश्च )**

**१ वेदमधीत्य स्नास्यन्नुपकल्पयते– एरकांचोपबर्हणं च नापितं क्षुरंच दारूणिचोपस्तरणीयं च वृकलांश्च दन्त धावनं उष्णाश्चापः शीताश्च सर्वसुरभिपिष्टमञ्जनं च स्रजं चादर्शं चाहतं च वासः प्रावारं वसनान्तरं च**

**बादरमणिं सुवर्णोपधानं सूत्रंच प्रवर्तौ च दण्डंचोपानहौ च छत्रं चानडुहं चर्म सर्वलोहितमित्येते सम्भारा उपक्लृप्ता भवन्ति। तानि संसादयेत् ॥**

स्नास्यन् = समावर्तनं करिष्यन्। गुरुमतेन गुरुगेहात् प्रतिनिवर्तनं समावर्तनं, प्रकृते तदुपलक्षितं कर्म ॥

उपकल्पयते इत्यस्य एरकामित्यादिद्वितीयान्तेनान्वयः ॥

एरका = शय्याविशेषः। उपबर्हणं नाम शय्योपरिशिरः प्रदेशयोग्यः कार्पासादि पूरितो वस्त्रबन्धः। दारूणि= इन्धनानि समिधश्च। उपस्तरणीयं= शय्योपरि प्रसारणीयं वस्त्रं। वृकलाः = जिह्वा शोधनार्थं दारुशकलाः। दन्तधावनं = तत्साधनकाष्ठं। सर्वसुरभिपिष्टं = सकलसुगन्धद्रव्यपिष्टं, शरीरशोधनाय। अञ्जनं =नेत्रयोः लेपनम् ॥ तच्च त्रिककुन्नामपर्वतोद्भवं, स्रक् =पुष्पमाला कण्ठधार्या, शिरोधार्या च। प्रावारं= स्कन्धोपरिधार्यं, वसनान्तरं, उत्तरीयम्। बादरमणि=प्रवाळं, तच्च सुवर्णेन ग्रथितं। सूत्रं= बादरमणिप्रवर्तयोः दर्वीदण्डे बन्धनार्थम् ॥ प्रवर्तौ= कुण्डले। आनडुहंचर्म सर्वलोहितं=सर्वतोरक्तम् ॥ अन्यानि प्रसिद्धानि ॥ तानि संसादयेत्=तत्तत्स्थानेषु आसादयेत् ॥१॥

**२ अथ स्नानस्य मीमांसा ॥**

स्नानप्रधानत्वात् स्नानमित्युच्यते समावर्तनं, उपलक्षणया तत्काल इत्यर्थः। तस्य मीमांसा=विचारः प्रवर्तते इत्यर्थः ॥२॥

**३ रोहिण्यां स्नायादित्येकम्। "प्राजापत्यं वा एतन्नक्षत्रं" तदस्य प्राजापत्य एव नक्षत्रे स्नानं भवति। अथो सर्वान् रोहान् रोहति ॥** अत्र प्रामाण्याय ब्राह्मणोदाहरणम्।

रोहिणीनक्षत्रे स्नानं सर्वतो वृद्धिकरमित्यर्थः ॥३॥

**४ तिष्ये स्नायादित्येकम्। "बार्हस्पत्यं वा एतन्नक्षत्रम्" तदस्य बार्हस्पत्य एव नक्षत्रेस्नानं भवति। अथो बृहस्पति प्रसूतो असानि" इति ॥**

तेन बुद्धिमान् भवामीत्यर्थः ॥४॥

५ उत्तरयोः फल्गुन्योः स्नायादित्येकम् । "भाग्यं वा एतन्नक्षत्रं,, तदस्य भाग्ये एव नक्षत्रे स्नानं भवति । अथो भाग्योऽसानि ॥

भाग्यः भाग्यवान् ॥५॥

६ हस्ते स्नायादित्येकम् । "सावित्रं वा एतन्नक्षत्रं, तदस्य सावित्र एव नक्षत्रे स्नानं भवति । अथो सावितृप्रसूतोऽसानि ॥

सवितृप्रसूतः= आरोग्यवानित्यर्थः ॥६॥

७ चित्रायां स्नायादित्येकम् । "ऐन्द्रं वा एतन्नक्षत्रं । तदस्य ऐन्द्र एव नक्षत्रे स्नानं भवति । अथो चैत्रोऽसानि ॥

चैत्रः = इन्द्रसदृशः, ऐश्वर्यवानित्यर्थः ॥७॥

८ विशाखयोः स्नायादित्युक्तम् । "ऐन्द्राग्नं वा एतन्नक्षत्रं । तदस्यैन्द्राग्न एव नक्षत्रे स्नानं भवति । अथो वैशाखोऽसानि ॥

एन्द्राग्नः – प्रभुत्वतेजस्त्ववान् भवानि इत्यर्थः ॥ अत्र सर्वत्र उक्तमित्यस्य श्रुत्युक्तमित्यर्थः ॥ एषां षण्नक्षत्राणां प्राशस्त्यबोधकानि ब्राह्मणानि ॥८॥

( १८ समावर्तनविधिः )

९ एतेषामेकस्मिन् आपूर्यमाणपक्षे पुराऽऽदित्योदयात् व्रजमभिपद्यते ॥ नैनमेतदहरादित्योऽभितपेत् ।

"तदहः स्नातानां उ[1]ह्वा एष एत्तत्तेजसा यशसा तपति,, इति ब्राह्मणम् ॥

एतेषां षण्णां मध्ये एकस्मिन् नक्षत्रे । आपूर्यमाणपक्षे = शुक्लपक्षे । आदित्योदयात् पूर्वमेव व्रजं-गोष्ठं अभिपद्यते- प्रविशेत् ॥

---

१ – ज. ञ. ठ. मुखं वा ॥

यतः तद्दिने एनं-यजमानं आदित्यो नाभितपेत्- न आतपेन तापयेत् तदहरित्याद्यर्थवादः ।। इदन्तु विद्यान्ते समावर्तने दिनमुक्तम् ।। विवाह पूर्वदिने समावर्तनेतु न नक्षत्रपरीक्षा, नापि पक्षस्य ।।९।।

**१० अन्तर्लोम्ना चर्मणा व्रजमभि[1]बध्नाति ।।**

लोमानि यथान्तर्भवेयुस्तथा अभिबध्नाति-व्रजस्य मुखमाच्छादयति ।१०।

**११ पूर्वार्धमध्ये व्रजस्य अग्निमुपसमाधाय सम्परिस्तीर्य आहरन्त्येतान् सम्भारान्, सकृदेव सम्भरन्ति ।।**

पूर्वार्धमध्ये- पूर्वभागे, व्रजस्यान्तः । सम्भरन्ति-आसादयन्ति ।। मानुष सम्बन्धित्वात् सकृदेव सर्वान् सम्भरन्ति पूर्वोक्तान् ।।११।।

**"यत्सह सर्वाणि मानुषाणि" इति ब्राह्मणम् ।।**

उक्तार्थम् ।।११।।

**१२ दर्भेषु दक्षिणतो ब्राह्मण उपविशति, उत्तरतउदपात्रम् । पालाशींच समिधं निदधाति ।।**

**१३ अपरेणाग्निं उदीचीनप्रतिषेवणां एरकां साधिवासां आस्तीर्य तस्यां प्राङ्मुख उपविशति । उत्तरत उपबर्हणम् । उत्तरतो नापितः ।**

उदीचीन प्रतिषेवणान् -- तद्दिगग्रान् ,उत्तरतः- शय्यायां । उत्तरतः शय्यायाः उपविशति, कर्ता ।।१३।।

**१४ आमध्यं दिनं भिक्षां दद्यात् । अपीह गां पचेत्, वशाचेदभ्यस्यात् ।।**

आमध्यंदिनं = मध्यान्हपर्यन्तं । भिक्षां, आगतेभ्यो भिक्षुभ्यः ।। गांपचेदिति युगान्तरविषयः । वशा= कामायमाना गौः ।। अजातगर्भा इति यावत् । अभ्यस्यात्=उत्सृजेत् ।। १४ ।।

**१५ अत्रैतां पालाशीं समिधमाज्येनाङ्क्त्वा मध्यन्दिनेऽभ्या दधाति ।। "इमं स्तोममर्हते जातवेदसे रथमिव सम्महे**

---

१ क. ग. छ. ठ. अभिनिघ्नन्ति ।।

मा मनीषया। भद्रा हि नः प्रमतिरस्य स॒सद्यग्ने सख्ये मारिषामा वयं तव स्वाहा,, इति॥

मध्यंदिने प्राप्ते इत्यध्याहार्यम् ॥ एतां-आसादितां ॥ १५ ॥

१६ अथैरकायां उदीचीनशिरा निपद्यते-"ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषमृषीणां च त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुष॒शतायुष,, मिति ॥

निपद्यते- उपविशति ॥ उदीचीनशिराः-- उदङ्मुखः ॥ १६ ॥

१७ उद्यमानमनुमन्त्रयते-"शिवा मे भवथ स॒स्पृशे,, इति

उद्यमानं = आर्द्रीक्रियमाणं शिरः, नापितेनेति शेषः ॥

१८ क्षुरमभिमन्त्रयते-"क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हि॒सीः,, इति ॥

१९ उप्यमानमनुमन्त्रयते-"यत्क्षुरेण वर्चयसि वप्त्रा वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीः,, इति ॥

उप्यमानं- वपनेन संस्क्रियमाणं, शिरः॥ अत्रापि नापितेनेत्यनुवर्तते ॥

२० "श्मश्रूण्येवाग्रे वपते। अथोपकुक्षौ। अथ केशान् यथोपपादमितराण्याङ्गानि,, ॥ इति॥

उपकुक्षिः=बाहुमूलं, वपनक्रमप्रदर्शनाय ऋचमानिन्युराचार्याः ॥२०॥

२१ "एतस्माद्धचेते जरसा पूर्वं आयुषि न प्रयान्ति, पूर्वं आयुषि अन्नादा भवन्ति, य एवं विद्वांसो लोमानि वापयन्ते,, इति ब्राह्मणम् ॥

इदं च सार्वदिकम् ॥ लोमवापनक्रमस्य स्तुतये अर्थवादात्मिक ऋचं उदाहरन्ति क्रमवपने फलम् ॥ २१ ॥

२२ स यदि लोमानि वापयिष्यमाणः केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत ॥

स यदि,, इति यदिशब्देन वपनं विकल्पितं समावर्तने ।। केशश्मश्रु इति=अत्र क्रमो न विवक्षितः ।।२२।।

२३ अथैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाह– "इमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्ता-,, मिति । तानि स तत्र निदधाति ।।

२४ अपरेणाग्निं प्राङ्मुख उपविश्य मेखलां वि[1]स्रंसयति –"इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सहपत्या करोमि,, इति ।।

२५ योऽस्य तत्र रातिः पुत्रो वाऽन्तेवासी वा भवति तस्मै प्रयच्छन्नाह– "इमा हृत्वा न्यग्रोधे वोदुम्बरमूले वा निधत्ता,, मिति ।।　　रातिः सखा ।।२५।।

२६ तां स तत्र निदधाति– " इदमहममुष्य शुचा पाप्मान मुपगूहाम्युत्तरोऽसौ द्विषद्भ्यः,, इति ।।

"अमुष्य,, पदस्थाने षष्ठयन्तं, "असौ,, पदस्थाने प्रथमान्तं यजमाननाम गृह्णीयात् ।।२६।।

२७ वृकलैः प्रधाव्य, दन्तान् विधावयते – " अन्नाद्याय व्यपोहध्वं भगो रा[2]जाऽयमागमत् । स मे मुखं प्रसर्पतु वर्चसे च भगाय च इति ।।

वृकलैः – जिह्वामिति शेषः ।।२७।।

२८ उभयीरपः संनिषिञ्चति –"देवमनुष्यस्य व्यावृत्यै,, इति ।।

उभयीः=उष्णाः शीताश्चापः ।। सन्निषिञ्चति=मिश्रयति ।।२८।।

२९ तासामञ्जलिनोपहृत्य मूर्ध्न्यासिञ्चति –"आपोहिष्ठा

१ ज. ग्र. विस्रंसयते ।। २–ज. राजानम् ।।

÷ इति तिसृभिः हिरण्यवर्णा ÷ इति तिसृभिः । "षोढा विहितो वै पुरुषः" इति ब्राह्मणम् ॥

उपहृत्य = सशब्दमादाय ॥ २९॥

॥ इति द्वितीयप्रश्ने एकादशः खण्डः ॥

* द्वादशः खण्डः *

( १९ समावर्तनं ( अनुवृत्तं ) होमश्च )

१ अथैतस्य सर्वसुरभिपिष्टं समुदायुत्य प्रसिञ्चति – " नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः " इति ॥

पूर्वतोऽनुवृत्तं समावर्तनमेवोच्यते ॥ एतस्येति उत्तरसूत्रेणान्वेति प्रसिञ्चति–जलेन सम्मिश्रयति ॥ १ ॥

२ अनुलिम्पते–"अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धो गन्धः समाविशत्विह " इति ॥

अनुलेपनमन्त्र : ॥२॥

३ अथाहतं वासः परिधत्ते –" सा मा तनूराविश शिवो मा तनूराविश " इति। एवमेवोत्तरीयम् ॥

४ अथैनं बादरमणिं सुवर्णोपधानं सूत्रे प्रोत्य, दर्व्यामादाय, दर्वीदण्डं सूत्रेण पर्यस्य जुहोति - "इयमोषधे त्रायमाणा सहमाना सह[१]स्वती । सा मा करोतु सोमवर्चसं सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा " इति ॥

दर्व्यामादाय = दर्वीमध्ये निधाय । अत्र दर्वीपदं स्रुववाचि, प्रकरणात् , यतोऽत्र आज्याहुतिप्रकरणम् ॥ सूत्रेण = हारग्रथन सूत्रेणासादितेन, पर्यस्य = वेष्टयित्वा, यथा होमकालेऽग्नौ हारो न पतेत् । एवमुत्तरत्रापि ॥ स्रुवस्थापनेनैव हारस्य संस्कारो भवति ॥ आज्येन इत्यध्याहृत्य जुहोतीत्यन्वयः ॥ ४ ॥

---

१. ज. सरस्वती ॥

५ अथैनमुदपात्रे परिप्लावयति -" विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः" इति ॥

उदपात्रे = प्रणीताजले । तृतीयार्थे सप्तमी, परिप्लावयति = क्षालयतीत्यर्थः ॥ अयमपि संस्कारः ॥५॥

६ "अपाशोऽसी,, त्युक्त्वा कण्ठे बध्नाति। अक्ष्ण्या परिहरति "वध्य॰ प्रत्यञ्चं प्रतिमुञ्चति व्यावृत्यै ,, इति ब्राह्मणम् ॥ कण्ठे धारणकाले अक्ष्ण्या = चक्षुषा; परिहरति = न पश्येदित्यर्थः । तदर्थं ब्राह्मणवाक्यमुदाहृतम् ॥६॥

७ अथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्व्यामादाय दर्वीदण्डं सूत्रेण पर्यस्य जुहोति-- "आयुष्यं वर्चस्य॰ रायस्पोष मौद्भिद्यम् । इद॰ हिरण्यं वर्चसे जैत्रियायाविशतादिम॰ रयि॰स्वाहा,, इति प्रथमाम् ॥

८ अथ द्वितीयां जुहोति-- "शुनिमिवाह॰ हिरण्यस्य पितुरिव नामाग्रभैषजम् । तं मा करोतु सोमवर्चस॰ सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा ,, इति ॥

९ तृतीयां जुहोति --" उच्चैर्वाजि पृतनाजि[१]सत्रा साहं धनञ्जयम् । सर्वाः समृद्धीर्ऋद्धयो हिरण्ये याः समाहिताः स्वाहा ,, इति ॥

१० चतुर्थी जुहोति --" विराजं च स्वराजं चाभि[२]ष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा स॰सृजामसि स्वाहा ,, इति ॥

११ पञ्चमीं जुहोति-" यशो माकुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मि यशस्तव स्वाहा ,, इति ॥

१ ज. ज. पृतनासाहं सभासाहं । २ ज. चाभिश्री ।

१२ अथैनमुदपात्रे परिप्लावयति-- " विश्वा उत त्वया ÷ इति ॥

१३ तयोरन्यतरमादाय दक्षिणकर्णे आबध्नाति – " आयुष्यं वर्चस्य,, मिति पञ्चभिः ॥

१४ अथैनमनुपरिवर्तयते -"ऋतुभिस्त्वार्तवैः संवत्सरस्यधायसा। तैस्त्वा सहानु करोमि, इति।।एनमनु=कर्णमनुसृत्य।। १४।।

१५ एवमेवोत्तरकर्णेऽपरं प्रवर्तमाबध्नीत ॥

॥ इति द्वितीयप्रश्ने द्वादशः खण्डः ॥

* त्रयोदशः खण्डः *

१ अथ स्रजं प्रतिमुञ्चति -- "शुभिके शिर आरोह शोभयन्ती मुखं मम। मुखं हि मम शोभय भूयाꣳसं च भगं कुरु। यां त्वा जहार जमदग्निः श्रध्दायै कामायान्ये। तान्त्वेमां [1] प्रतिमुञ्चेहं वर्चसे च भगाय च,, इति ॥

स्रजं शिरोधार्यमलङ्करणम् ॥ प्रतिमुञ्चति = धारयति ॥ १ ॥

१ अथ त्रैककुदेनाञ्जनेनाङ्क्ते -- " यदाञ्जन –मिति ॥

त्रिककुन्नाम हिमालयान्तर्गतः पर्वतः, तत्र जातेन त्रैककुदेनाञ्जनेन ॥ नेत्रे अङ्क्ते । तेन वर्चस्वी भवति– इति प्रसिद्धम् ॥२॥

३ अथाऽऽदर्शे परिपश्यते–" यन्मे मनः परागतमादर्शे परिपश्यते। इदं ते मयि पश्याम्यायुष्यं वर्चस्यं मे अस्तु,, इति ॥

आदर्शे, मुखमिति शेषः ॥३॥

४ अथोपानहावुपमुञ्चते– "द्यौरसि,, इति दक्षिणपादे। "पृथिव्यसि,, इत्युत्तरपादे ॥

---

१ ज. प्रतिमुञ्चामि

उपानहौ पादरक्षे ॥ उपमुञ्चते = योजयति ॥ ४ ॥

५ अथ दण्डमादत्ते—"सखा मा गोपाय,, इति

६ अथच्छत्रं—"दिव्योऽसि सुपर्णोऽन्तरिक्षान्मा पाहि,, इति

७ सोऽत्रैवास्ते आनक्षत्राणामुदयात् ॥

अत्रैवास्ते =गोष्ठे एव तिष्ठेत् ॥ ७ ॥

८ अथोदितेषु नक्षत्रेषु उपनिष्क्रम्य दिश उपतिष्ठते—'देवीः षडुर्वी रुरुणः कृणोत विश्वेदेवास इह वीरयध्वम्,, इति ॥ "माहास्महि प्रजया मा तनूभिर्मारधाम द्विषते सोमराजन्,, इति चन्द्रमसम् ॥

९ यत्र यत्र कामयते तदेति—इति समावर्तनम् ॥

यत्र यत्र तीर्थक्षेत्रादिषु, कामयते-गन्तव्यमितीच्छति तदेति= तत्र तत्र गच्छेत् ॥ तीर्थयात्रां कुर्यादित्यर्थः ॥९॥

॥ इति द्वितीयप्रश्ने त्रयोदशः खण्डः ॥

## * चतुर्दशः खण्डः *

( २० समावर्तनपक्वहोमादि )

१ वेदमधीत्य स्नास्यन् इत्युक्तं समावर्तनम् ।

समावर्तनशेषभूतं पक्वहोमादिकं वक्तुं वृत्तं कीर्तयन्ति ॥१॥

२ मन्त्रब्राह्मणे वेद इत्याचक्षते । मन्त्रब्राह्मणयोः वेद नामधेयम् ॥

वेदमधीत्येत्युक्तं – तत्रवेदस्वरूपमुच्यते मन्त्रेति ॥ मन्त्राः होमादौ विनियोज्याः । ब्राह्मणं कर्मविधायकम् ॥ आचक्षते इत्यस्य विवरणं = वेदनामधेयमिति ॥ २ ॥

३ मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् ॥

मन्त्रब्राह्मणे इति समस्तवेदराशेरुपलक्षणम् ॥ ३ ॥

४ मन्त्रब्राह्मणे अधीत्य, चीर्णेषु वा व्रतेषु ॥

स्नायादिति शेषः ॥ ४ ॥

५ एतावदेव नाना ॥

नाना=विशेषः, अनुपदं वक्ष्यते इत्यर्थः ॥ एतं प्रयोगविधिं व्रजात् निष्क्रमणात्पूर्वं अनुतिष्ठेत् । पाठक्रमादर्थक्रमस्य बलीयस्त्वात्॥५॥

६ अथ देवयजनोल्लेखनप्रभृति आग्निमुखात् कृत्वा पालाशीं समिधमाधाय, तत्पुरस्ताद्व्याख्यातम् ॥

पालाशसमिदाधानं पूर्वमुक्तं,-तदनन्तरमेवेदं वक्षमाणंयोजनीयम् ॥६॥

७ केशश्मश्रुनखावापने नैव प्रतिपद्यते सिद्धमाच्छत्रा दानात् ॥

केशादिवापनप्रभृति छत्रादानपर्यन्तमुक्तं तत् कृत्वा पश्चात् इदं पक्वहोमादि कुर्यात् ॥७॥

८ अथ पक्वाज्जुहोति—[1]"द्विपदा पुरोऽनुवाक्या भवति। द्विपद एवावरुन्धे। चतुष्पदा याज्या। चतुष्पद एव पशूनवरुन्धे,, इति ब्राह्मणम् ॥

एतेन ब्राह्मणवाक्योदाहरणेन सारस्वतेष्टिवत् अत्रापि वाक्यद्वयेन पुरोनुवाक्यां चतुर्भिः याज्यां च परिकल्प्य तद्धर्मेण पक्वहोमं कुर्यादिति मन्यन्ते आचार्याः ॥ अत एव गृह्यसङ्ग्रहगतत्वेनोदा ह्रियमाणकारिकादिमूलं चिन्त्यम् ॥ ८ ॥

"आवहन्ती वितन्वाना ÷ इति पक्वं हुत्वा ॥

आवहन्तीति षड्वाक्यमन्त्रोऽयं, द्वेधा विभज्य उक्तरीत्या याज्या पुरोनुवाक्याधर्मेण पक्वं जुहुयात् ॥

९ अथाज्याहुतीरुपजुहोति— 'आमायन्तु ब्रह्मचारिणः स्वाहा,, इति दशभिः ॥

एते तैत्तिरीयसांहित्युपनिषदि प्रसिद्धाः ॥ ९ ॥

१० " उन्मायन्तु ब्रह्मचारिणः स्वाहा „ इति षष्ठो मन्त्रः सन्नस्यते ॥

---

१ ज. ञ. ठ. इदं ब्राह्मणवाक्योदाहरणं स्खलितम् ।

ननु तत्रोपनिषदि नवैव मन्त्राः दृश्यन्ते, तत्कथं "दशभिः" इत्युक्तं - तत्राह-उन्मायन्त्विति ।। उन्मायन्तु इत्यादिः मन्त्रः षष्ठः = षष्ठत्वेन सन्नम्यते =योज्यः ।। तदा दश भवन्ति ।।१०।।

११ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ।।

१२ अथाग्रेणाग्निं बिल्वशाखायां हुतशेषं निदधाति-

"ॐ तस्मिन् सहस्रशाखे।निभगाहं त्वयि मृजे--स्वाहा" इति।।

१३ अथ पक्वावुपादाय प्राश्नाति-- "यथाऽपः प्रवता यन्ति। यथामासा अहर्जरम्। एवं मां ब्रह्मचारिणः। धातरायन्तु सर्वतः स्वाहा" इति ।।

१४ प्राश्य अप आचम्य [1]आत्मानमभिमृशते --"प्रतिवेशोऽसीति ।।

उरोदेश इति शेषः ।। अभिमृशते =संस्पृश्य जपति ।। १४ ।।

१५ सोऽत्रैवास्ते आनक्षत्राणामुदयात् ।

१६ अथोदितेषु नक्षत्रेषु--सिद्धमत ऊर्ध्वम् ।।

इमे सूत्रे पूर्वोक्तानुवादः, कर्मणः अनुक्रमस्मरणार्थः ।। ९६ ।।

।। इति द्वितीयप्रश्ने चतुर्दशः खण्डः ।।

## * पञ्चदशः खण्डः *

( २१ वेदानधीयानस्य विशेषः जडादीनामतिदेशश्च )

१ अथ व्रतस्नातकस्य वेदानधीयानस्य तूष्णीं समावर्तनम् ।

वेदानधीयानस्येति । इदमुपलक्षणं व्रतमप्यकुर्वतः ।। तूष्णीमित्यनेन कर्तुः वेदाध्ययनाभावात्, सर्वं मन्त्रमाचार्य एव पठेदिति विभावनीयम् ।तच्छ्रवणमात्रेण तस्य संस्कारः सिध्यति ।।१।।

२ तीर्थे स्नात्वाऽग्निमुपसमाधाय सम्परिस्तीर्य मध्यान्हे पालाशी० समिधमाज्येनाङ्क्त्वाऽभ्यादधाति-- "इम० स्तोमं, इति

---

१ ज. उरः प्रत्यात्मानम् ।।

स्नानादिकं कर्म यजमानेनैव कार्यम् ॥ १ ॥ ल्यपः उत्तरकालत्वमात्रमर्थः ॥२॥

३ तूष्णीं वपनं, तूष्णीं सम्भाराहरणं च कृत्वा रथस्य दक्षिणं चक्रं अभिमृशति –"रथन्तरमसि,, इति ॥

अनेनास्मिन् समावर्तने रथोऽपि सम्भारेषु सङ्ग्राह्य इत्युक्तं भवति। एवमेवोह्यम् ॥ ३ ॥

४ अथ सव्यं "बृहदसि,, इति ॥

५ रथस्य मध्यमभिमृशति–"वामदेव्यमसि,, इति ॥

६ रथं प्रवर्तमानमभिमन्त्रयते–"रथं वामश्विना रथो मा दुःखे मा सुखे रिषत्,, इति ॥ अप उपस्पृशति ॥

७ रथाऽभावे भूमिमभिमृशति – "इह धृतिरिह विधृतिरिह रन्तिरिह रमतिः,, इति ॥

अशक्तावयं विकल्पः ॥ ७ ॥

८ अथाप उपस्पृश्य हृदयमभिमृशति– "मयीन्द्रियं वीर्यम्,, इति

तथा च चतुर्थपञ्चमषष्ठतमानां, सप्तमाष्टमयोः सूत्रयोः विकल्प इति ध्येयम् ॥ ८ ॥

९ अथो व्रीहिभिर्यवैर्वाऽपः समुदायुत्य शिष्याय प्रयच्छति ॥

शिष्याय= यजमानाय । प्रयच्छति आचार्यः ॥ ९ ॥

१० तत्प्रतिगृह्णाति–"आम आगाद्वर्चसा यशसा सꣳसृज । प्रियः पशूनामधिपतिः प्रजानाम्,, इति ॥ तदुपस्पृश्य जपेत् ॥

११ तज्जलं पुरस्तात् सिञ्चति ॥

१२ अथ दधिमध्वाज्योदकमिश्रं वा दधिमध्वाज्योदकक्षीरमिश्रं वा "अर्घ्य"मिति निवेदयेत् ॥

अर्घ्यं= मधुपर्कः ।।१२।।

१३ शिष्योऽर्घ्यमभिमन्त्रयते- "समावतु समावन्तु समा जुषताम्" इति ।।

१४ अथ द्वाभ्यां हस्ताभ्यां प्रतिगृह्णाति-"आम आगा -द्वर्चसा यशसा स७सृज । प्रियः पशूनामधिपतिः प्रजानां" इति ।।

१५ तस्मि७श्चित् किञ्चिदापतितं स्यात्तदङ्गुष्ठेन महा -नाम्न्या चोपसंङ्गृह्य इमां दिशं निरस्यति- नेष्टा विद्धि ÷ इति ।।

१६ अथाप उपस्पृश्य, सर्वाभिरङ्गुलिभिः समुदायुत्य प्राश्नाति- "इदन्ते बलिमुपहरामि, इति प्रथमम् ।" श्रेष्ठं माऽधिपतिं कुरु" इति द्वितीयम् ।" सोमोऽसि सोमपं मा कुरु" इति तृतीयम् ।। "अन्नमस्यन्नादं मा कुरु" इति चतुर्थम् ।।

१७ एवं चतुष्कृत्वः प्राश्य त्रिरनुपिबेत् । न सर्वम् । न तृप्तिमधिगच्छेत् ।।

सर्वं न पिबेदित्यन्वयः ।। तृप्तिमिति- तृप्तिपर्यन्तं न पिबेत्- इत्यर्थः ।। १७ ।।

१८ ममात्मनः श्रेयांसमिच्छेत् तस्मै शेषं दद्यात् ।।

१९ अथ कर्णे दाम्ना बद्धां गामानुमन्त्रयते- "जहि मे पाप्मानमुपवेत्तुः" इति ।।

२० अथ गामुत्सृजेत्- "गौर्धेनुभव्या माता + इति ।।

२१ अथौदनमाहृतं प्राश्नाति- "ब्रह्मन् प्राश्नामि" इति ।।

२२ अथोदकमिश्रं सक्तुमाहृतमश्नाति- "ब्रह्मन् त्वाऽश्नामि" इति ।।

२३ एवमेव सिद्धं समावर्तनम् ॥

एवमेव = पूर्वोक्तं समावर्तनं सिद्धं = आचार्य एव मन्त्रान् पठेत् कर्ता कर्ममात्रं कुर्यादिति ॥ २३ ॥

२४ एवं जडबधिरान्धमूककुब्जादीनाम् ॥

उक्तमतिदिश्यते जडादीनाम् ॥ जडादयोऽपि स्नातका भवेयुः न तु ब्रह्मचारिण एव सन्तो म्रियेरन् । तत्र प्रायश्चित्तस्मरणात् इति मन्यन्ते । जडादीनां अत्रैव मधुपर्कः । विवाहप्रसङ्गाभावात् ॥२४॥

२५ अशक्तः तूष्णीं समिधमाधाय शेषं तूष्णीमाचरेत् ॥

अशक्तः– यथावत्कर्तुमिति शेषः । तथा च जडादिष्वपि कश्चित् समर्थो भवेत् स यथावत्कुर्यादेवेति निगमनम् ॥ २५ ॥

॥ इति द्वितीयप्रश्ने पञ्चदशः खण्डः ॥

* षोडशः खण्डः *

( २२ त्रिविधाः स्नातकाः, तेषां धर्माश्च )

१ वेदमधीत्य समावर्तनमित्युक्तम् ॥

उत्तरार्थमनुवादः ॥१॥

२ त्रयः स्नातका भवन्ति– वेदस्नातको व्रतस्नातको वेदव्रतस्नातकश्चेति ॥

केवलं वेदाध्यायी. न व्रतमनुतिष्ठति स वेदस्नातकः । केवलं व्रतचारी , न वेदमधीते , स व्रतस्नातकः । उभयचारी-वेदव्रत स्नातकः इति विभागः ॥ २ ॥

३ अथैतेषां अत ऊर्ध्वं नित्यानि भवन्ति– आज्येनौपासनं, दण्डः, कमण्डलुरुपानहौ, छत्रं, द्वे वाससी, द्वे यज्ञोपवीते, उष्णीषमजिनमन्तर्वासः-- इति ॥

औपासनं = अग्निकार्यं । उष्णीषं = शिरस्त्राणं, अन्तर्वासः कौपीनम् ॥ ३ ॥

४ पूर्वेण ग्रामान्निष्क्रमण-- प्रवेशनानि च, वाग्यत

उत्तरेण वा ।।

वाग्यतः = वाचं नियम्य ग्रामान्निष्क्रमणप्रवेशनानीत्यनुषंगः ।। ४ ।।

५ बहिर्वाचं विसृजेत् ।।

ग्रामाद्बहिः वाचं वदेत् ।। ग्रामाद्ग्रामान्तरं गच्छन् आगच्छन् वा मध्ये प्रवेशनिर्गमनयोरिमे नियमाः ।। ५ ।।

६ प्रश्नमनुवाकं वाऽधीयीत ।।

प्रश्नमेकमनुवाकं वा अधीयादेव ।। ६ ।।

७ ब्रह्मपरो ब्रह्मनित्यो देवेभ्य ऋषिभ्यः पितृभ्यः तर्पणानि कृत्वा ऽश्नीयात् ।।

ब्रह्मपरः = अधीतवेदपठनपरः । ब्रह्मनित्यः वेदार्थं ब्रह्म नित्य मनुसन्दधानः ।।७।।

८ दिवा नोष्णीषी नक्तमुष्णीषी, मूत्रपुरीषोत्सर्गेषु निवीती, नित्यं यज्ञोपवीती ।।

उष्णीषधारणं नियमयति ।।८।।

९ तिष्ठन्नाऽऽचामेत्, प्रह्वो वा ।।

प्रह्वः = नम्रः ।। उपविश्यैवाऽऽचामेदिति यावत् ।।९।।

१० सन्ध्ययोश्च बहिर्ग्रामादासनम्, वाग्यमश्च ।।

एते धर्माः अस्य नित्याः ।।१०।।

११ आ जाया-सङ्गमात् स्नातका भवन्ति ।।

स्नातका अपि वेदाद्यध्ययनं कुर्वन्तः समयं नयन्ति क्वचिद्देशे ।। तेषां तीर्थाटनमपि विहितम् ।।११।।

१२ अत ऊर्ध्वं गृहस्थाः ।।

अत ऊर्ध्वं = विवाहानन्तरं ।। गृहपदं लक्षणया गृह्यकर्मवाच्यपि । तेन गृह्यकर्माणि कुर्वन्तः तिष्ठन्तीति गृहस्था इत्यपि वदन्ति ।।१२।।

१३ अविच्छेदाय वेदव्रतैर्विहरेत्, कौमारेण, माहेश्वरेण,

धान्वन्तरेणेति ॥

अविच्छेदाय= वेदप्रवचनसान्तत्याय । वेदव्रतैः= उपाकर्मोत्सर्जना- ख्यैः वक्ष्यमाणैः विहरेत्= वर्षे वर्षे तानि चरेत् ॥ कौमारेण व्रतेन = कुमारपूजाद्यात्मकेन, सत्संततिप्राप्तये ॥ माहेश्वरेण व्रतेन, आयुरभिवृद्धये ॥ धान्वन्तरेण, व्रतेन आरोग्याभिवृद्धये ॥ कौमारादि व्रतानि स्मृत्यागमादिषूक्तानि ॥१३॥

१४ स यद्यौपासनं न धारयते आद्वादशाहादेवैनं आज्येन व्याहृतीर्हुत्वा, श्रौताग्नीनाधास्यमानः ब्रह्मौदनं कृत्वोत्सृजति ॥

सयदीति- श्रौताग्न्यादित्सोः, द्वादशरात्रं अजस्रधारणं नियतं, तत ऊर्ध्वं समारोपणादिना विकल्पः । द्वादशदिनपर्यन्तं औपासनात्परं व्याहृतीर्हुत्वा, ब्रह्मौदनं पूर्वेद्युः कृत्वा परेद्युराधानं कुर्यात् । "इत्र आधास्यमानो ब्रह्मौदनं पचति,, इति तै० ब्राह्मणम् ॥ ब्राह्मणार्थमोदनं ब्रह्मौदनं, तच्चौपासनाग्नौ पक्त्वा ब्राह्मणान् भोजयेत् ॥ श्रौताग्न्यनादित्सुः यावज्जीवं- अजस्रं, समिधादि समारोपेणवा अग्निं धारयेत्-इति यदिशब्दार्थः ॥१४॥

१५ कर्मणि कर्मणि एवैनं " पुनस्त्वादित्या ÷ इति संस्कृत्याहरति ॥

आहृत्य संस्कारादिकर्माणि कृत्वोत्सृजेत् ॥ इदं सद्यः सन्धानम् ॥ अजस्र-धारणसमारोपणयोरभावे इति शेषः ॥१५॥

१६ यद्युवै अनाधास्यमानो भवति नैनमुत्सृजेत् ॥

श्रौताग्निं आधातुं नेच्छेत्, तदा एनमौपासनाग्निं नोत्सृजेत् इति निषेधः ॥ प्रत्यक्षं वा समिधि समारोप्य वा आत्मनि समारोप्य वा धारणं विवक्षितम् ॥१६॥

॥ इति द्वितीयप्रश्ने षोडशः खण्डः ॥

## * सप्तदशः खण्डः *

### ( २३ उपनयनाग्नेरुत्तरत्रानुवृत्तिकथनं औपासनं च )

१ यस्मिन्नग्नावुपनयति तस्मिन् ब्रह्मचर्यं, तस्मिन्व्रतचर्या तस्मिन् समावर्तनं ' तस्मिन् पाणिग्रहणं, तस्मिन् गृह्याणि कर्माणि, तस्मिन् पुत्रसंस्काराः ॥

उपनयने योऽग्निः सिद्धयति, तत्रैवोक्तानि सर्वाणि क्रियेरन् ॥ पुत्रसंस्काराः चौलान्ता विवक्षिताः ॥ दम्पत्योरेकतरयोः उत्तर संस्कारश्च उपलक्षितो ज्ञेयः ॥ स च दहनाख्यः ॥ १ ॥

२ तस्मिन् काम्यानि कर्माणि इत्येके ॥

३ स एष उपनयनप्रभृति व्याहृतिभिः समिद्भिः हूयते आसमावर्तनात्, ॥

४ समावर्तनप्रभृति आज्येन व्याहृतिभिरापाणिग्रहणात् ॥

५ पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोति – "अग्नये स्वाहा, प्रजापतये स्वाहे,, ति सायम् "सूर्याय स्वाहा, प्रजापतये स्वाहे,, ति प्रातः ॥

६ अप्यग्निहोत्रहविषामन्यतमेन जुहुयात् ॥

अग्निहोत्रहवींषि तण्डुलक्षीरदीनि श्रौतोक्तानि ॥६॥

७ पर्वणि पर्वणि चाग्नेयस्थालीपाकः ॥

पर्वणि पर्वणीति–दर्शपौर्णमास्योः ॥७॥

८ स एष आघारवान् वा स्यादाग्निहोत्रिको वा स्यादापूर्विको वा ॥

९ तेन सर्पिष्मता विद्यावन्तं ब्राह्मणं वा भोजयेत् ॥

तेन सर्पिष्मता=स्थालीपाकार्थमपेक्षितेन यावद्धविदा ॥ दर्शपौर्णमासस्थालीपाकाशक्तौ अयं विकल्पः ॥९॥

**१० योऽस्यापचिततमः तस्मा ऋषभं दद्यादित्येके ॥**

अपचिततमः = पूज्यतमः, तस्मै, विद्यावते - इत्यादिः ॥१०॥

**( २४ अग्न्युद्वाते कर्तव्यम् )**

**११ अथास्यानुगतस्य या प्रकृतिस्तत आहरणम् ॥**

अनुगतस्य = उद्वातस्याग्नेः या प्रकृतिः पुनःसन्धानादिः ततः आहरणम् = साधनं कार्यम् ॥११॥

**१२ उपवासोऽनुगतेऽन्यतरस्य भार्यायाःपत्युर्वा ॥**

अनुगते = उद्वातेऽग्नौ भार्यापत्योरन्यतरस्य उप = अग्नेः समीपे वासः अनशनं वा यावत्पुनरग्निसिद्धिः ॥१२॥

**१३ अपि[1]वैतां जुहुयात् - "अयाश्चाग्नेस्यनभि ÷ इति**

अपि वा इत्येतेन एकस्मिन् दिने आहुत्यभावेऽपि इदमेव प्रायश्चित्तमिति वक्ष्यमाणं सूचितम् ॥ उपवासेन सहास्य विकल्पः ॥१३॥

**१४ इत्याहुतो व्याख्यातः ॥**

**॥ इति द्वितीयप्रश्ने सप्तदशः खण्डः ॥**

## * अष्टादशः खण्डः *

**( २५ शूलगवः )**

**१ अथ शूलगवः । संवत्सरे संवत्सरे मार्गशीर्ष्यां पौर्ण -मास्यां क्रियेतापि वाऽऽर्द्रायाम् ॥**

शूलेषु गामुपनीक्ष्य श्रपणं, तेनेशानाय बलिः शूलगवः अत्र यद्यप्याचार्यैः धेन्वा एवालम्भो विहितः । तथाप्याश्वलायन सूत्रे पुंगवस्यैव ( वृषभस्य ) आलम्भो विहितः ॥१॥

**२ गोषु वा उपतप्तासु गोषु गुप्तासु वा ॥**

तथाचेदंकर्म नित्यं नैमित्तिकं च ॥ उपतप्तासु महारोगादिना पीडितासु, गुप्तासु = अदर्शनं गतासु शूलगवः कार्यः ॥२॥

---

१ च वैकाम् ॥

३ गवां मध्ये गृहे गोष्ठे वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ईशानाय स्थालीपाकं श्रपयन्ति ॥

स्थालीपाकः कलौ योग्यः ॥३॥

४ यदि गामालभते—अरण्येऽग्निमुपसमाधाय संपरिस्तीर्य आप्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति- "देवस्य-त्वेत्यनुद्रुत्य "ईशानाय त्वा जुष्टामुपाकरोमी,, ति ॥

यदीत्यनेन युगान्तरविषयत्वमस्य सूच्यते ॥ अरण्ये एव, नतु गृहे, नवा गोष्ठे ॥ अग्निं=औपासनाग्निम् ॥ उपाकरण प्रभृति श्रौते प्रसिद्धं ॥ अनुद्रुत्य=आदौ संयोज्य ॥४॥

५ तूष्णीमित्येके । उपाकरणममन्त्रकम् ॥५॥

६ अथैनामद्भिः प्रोक्षति—" देवस्यत्वेत्युनुद्रुत्य " ईशानाय त्वा जुष्टं प्रोक्षामि,, इति ॥ तूष्णीमित्येके ॥

७ तामत्रैव प्रतीचीनशिरसीं उदीचीनपदीं संज्ञपयन्ति ॥

८ तस्यै संज्ञप्तायै अद्भिरभिषेकः ॥

९ अथ प्राणानाप्यायर्यात तूष्णीम् ॥

अद्भिरित्यनुकर्षः ॥९॥

१० तूष्णीं वपामुत्खिद्य ॥ हृदयमुद्धरति इतिशेषः ॥१०॥

११ प्रज्ञातानि चावदानानि ॥

हृदयस्याग्रेऽवद्यतीत्यादिश्रौते पशुयागे प्रसिद्धानि ॥११॥

१२ तान्येतेष्वेव शूलेषूपनिक्षिप्य तस्मिन्नेवाग्नौ श्रपयन्ति ॥

१३ अथैतानि शूलेभ्य उपनीक्ष्य पुनःकुम्भ्यां श्रपयन्ति ॥

१४ अथैतानि अभिघारितान्युद्वास्य प्रतिष्ठितमभि-

धारयति

१५ परिधानप्रभृत्याग्निमुखात् कृत्वोपोत्थाय ईशानमावाहयति – "आ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः। वाताऽऽजवैर्बलमद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वों ईशानमावाहयामि,, इति ,व्याहृतिभि-श्च।

मन्त्रारम्भे भूर्भुवस्सुवः इति संयोज्येत्यर्थः ॥१५॥

१६ कूर्चासनादि गन्धपुष्पधूपदीपान्तमभ्यर्च्य ॥

१७ अथ स्रुवेणोपस्तीर्याभिघारितां वपां जुहोति–"स[1]हस्राणि सहस्रधा ÷ इति पुरोनुवाक्यामनूच्य "ईशानं त्वा भुवनानां ÷ इति याज्यया जुहोति ॥

सहस्राणि सहस्रशोऽ इति पुरोनुवाक्यापाठः, ईशानलिङ्गाभावान्नयुक्तः ॥१७॥

१८ अथैतान्यवदानानि इडासूने प्रतिच्छाद्य, ओदनं मांसं पीयूषं इत्याज्येन समुदायुत्य मेक्षणेनोपघातं पूर्वार्धे जुहोति 'अष्टभिर्नामधेयैः – " भवाय देवाय स्वाहा। शर्वाय देवाय० । ईशानाय देवाय स्वाहा । पशुपतये०। रुद्राय० । उग्राय० । भीमाय ० । महते० । इति ॥

अवदानानि = शिष्टानि हृदयादीनि अवदानयोग्यानि । इडासूने इडाशब्दः पशुवाचकः, तत्सूने = गोवधस्थाने ॥ ओदनं = अन्नं, मांसं , गोः हृदयादि । पीयूषं –मेद आदि द्रवं, अभिनवं पयो वा आज्येन सम्मिश्रय ॥ दर्व्यामादायेति शेषः, ॥ उपघातं – णमुलन्तः शब्दः विभज्येत्यर्थः ॥१८॥

१९ पुरस्ताच्चोपरिष्टाच्च एतैरेव नामधेयैः स्रुवाहुती जुहोति ॥

---

१ ज , ञ, सहस्राणि सहस्रशो ÷

२० अथ मध्येऽग्नौ जुहोति– "भवस्य देवस्य पत्न्यै स्वाहा÷ इत्यादिभिः ॥ अत्रापि द्रव्यं ओदनाद्येव ॥२०॥

२१ अथापरार्धे जुहोति–" भवस्य देवस्य सुताय स्वाहा-इत्य -ष्टभिः ॥

अत्र सर्वत्र पूर्वाज्यापराज्याहुती ज्ञेये । अग्नौ पश्चार्धे ॥२१॥

२२ अथाऽऽज्याहुतीरुप जुहोति–"नमस्ते रुद्रमन्यव÷ इत्यान्तादनुवाकस्य ( पञ्चदशर्ग्भिः )॥

२३ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

२४ अथाग्रेणाग्निं अर्कपर्णेषु हुतशेषं निदधाति –"यो रुद्रो अग्नौ यो अप्सु य÷इति ॥

२५ "भवाय देवाय नमः स्वाहा--इत्येतैरेव नामधेयैः बलिं हरेत् चतुर्विशतिभिः ॥

हुतशेषेणैव बलिः॥ अत्र यद्यपि प्रहुतलक्षणं वरीवर्ति, तथापि शूलगवस्य स्वतन्त्रकर्मत्वात् लक्षणान्तरसत्वं नदुष्यति । अथवा चर्वन्तरेण बलिः कार्यः न हुतशेषेण ॥२५॥

२६ पुष्पाञ्जलिं दत्वा व्याहृतिभिर्देवमुद्वासयेत् ॥

ॐ भूः ईशानमुद्वासयामि,, इत्यादय उद्वासनमन्त्राः ॥२६॥

२७ स्थालीसंक्षाळनं आज्यशेषं चोदकशेषं च पात्र्यां समानीय वेतसशाखयाऽवोक्षन् सर्वतः त्रिः प्रदक्षिणं गाः पर्येति –"आगावो अग्मन्÷इत्यष्टर्चेन सूक्तेन ॥

स्थाली=हविः पात्रं । उदकशेषं=प्रणीताजलशेषं ।।पात्र्यां =शरावे, गाः गोष्ठगताः । पर्येति=सिञ्चन् परिभ्रमति ॥२७॥

२८ महत्स्वस्त्ययनमित्याचक्षते ॥

स्वस्त्ययनं=मङ्गलं, गावः नीरोगा भवन्तीत्यर्थः ॥२८॥

२९ अथ यदि गां नालभते मेषमजं वाऽऽलभते ॥

कलौ गवालम्भस्य निषेधाच्च प्रकारान्तरमुच्यते इति ज्ञेयम् ॥२९॥

**३० ईशानाय स्थालीपाकं वा श्रपयन्ति, तदा तस्मा-देतत्सर्वं करोति, यद्गवा कार्यम् ॥**

तत्रापि हिंसायां यदि नादरः तदा स्थालीपाकेन सर्वं कुर्यात् ॥ पूर्वोक्तः स्थालीपाकः ईशानाय बल्यर्थः ॥३०॥

**३१ विज्ञायते च "धेन्वै वा एतद्रेतो यदाज्यं पयो वा, अनडुहस्तण्डुलाः, इति गोरेवाङ्गसामान्यात् ॥**

आज्येन पयसा च मिश्रितस्य स्थालीपाकस्य द्रव्यत्वे गवालम्भ साम्यवादोऽयमर्थवादः प्रथमार्थे चतुर्थी धेन्वै इति ॥३१॥

**३२ एतावदेव नाना, नात्रोपाकरणं पशोः ॥**

पशुधर्माः सर्वेऽपि नात्र सन्तीत्यर्थः ॥३२॥

**३३ एवमेवाष्टम्यां प्रदोषे वाक्रियेत । शूलगवो व्याख्यातः ।**

कालान्तरविधानम् । मार्गशीर्षाष्टमी -- प्रदोषयोः ॥३३॥

॥ इति द्वितीयप्रश्नेऽष्टादशः खण्डः ॥

## * एकोनविंशः खण्डः *

## ( २६ वैश्वदेवबलिहरणम् )

**१ अथ सायं प्रातः यदशनीयस्य क्रियेत ॥**

अत्र प्रातः पदं मध्याह्नपरम् ॥ अशनीयस्य =भोज्यान्नस्य । तेन क्रियेत ॥ वैश्वदेवं बलिहरणं चेति आर्थिकम् ॥१॥

**२ एतावदेव नाना ॥** नाना = तत्र विशेषः ॥२॥

**३ औपासने पचने वा होमः ।** पचने=पचनाग्नौ ॥३॥

**४ अक्षारलवणावरान्नसंसृष्टस्य तु होमं परिचक्षते ॥**

क्षार-लवण-अवरान्नासंसृष्टस्यैव होमः ॥ नतु क्षारादि स्पृष्टस्य । अवरान्नं-कृमिकेशादिना दूषितान्नम् ॥ क्वचित्पुस्तके – "क्षारलवणावरान्नसंसृष्टस्य तु न होमं परिचक्षते,, इति निषेधमुखेन पाठः ॥ तात्पर्यमभिन्नम् ॥४॥

**५ काममितरेष्वायतनेषु ।। परकीयगृहेषु कुर्यादकुर्याद्वा ।।**

यदि तत्र यजमानेन वैश्वदेवः क्रियते, तदान्यैर्न पुनः कार्यः ।। एकपाकस्य सकृदेव वैश्वदेवेन चारितार्थ्यात् ।। अन्यैस्तु आत्म-संस्कारार्थं तण्डुलेन जलेन वा कार्यम्, वैश्वदेवमन्त्रो वोच्चारणीयः, स्वकीयकर्तव्यतापरिपूर्तये ।। यदि तद्यजमानेन न क्रियते, परगेहेऽपि तत् कर्तव्यमेव तदनुज्ञातैः । तेन अन्नशुद्धिः आत्मसंस्कारोऽपि भवति । अन्यस्वामिकेऽन्ने तद्गेहे भिन्नपाके च वैश्वदेवः कृताकृतः इतिसाम्प्रदायिकाः ।।५ ।।

**६ अथ यद्येतदेव स्यात् उत्तरतो भस्ममिश्राङ्गारान् निरुप्य तेषु जुहुयात् ।।** एतदेव क्षारादिसंसृष्टमेव यदि होमे द्रव्यं स्यात् तदा इतिशेषः- तदा चुल्या उत्तरतः भस्मना मिश्रितान् अङ्गारान् उपसमाधाय तत्र जुहुयात् ।।६।।

**७ सर्वेष्वायतनेषु पाणिना परिसमूह्य उभयतः परिषेकः ।**

सर्वेषु आयतनेषु=देव-पितृ प्रभृतियज्ञे स्थानेषु पृथक् पृथक् परिसमूहनादिकं कुर्यात् ।। उभयतः=होमात् पूर्वं परञ्च ।।७।।

**८ देशाऽभ्यासे मन्त्राभ्यासः, कामं समानस्थानेषु ।।**

उक्तार्थमेव स्पष्टयन्ति ।।८।।

**९ अथ " देवयज्ञेन यक्ष्ये ,, इति निरुच्य " देवेभ्यः स्वाहा,, इति जुहुयादित्युक्तो देवयज्ञः ।।**

अत्र पूर्वं परतश्च परिसमूहनादि ।। एवमेवोत्तरत्रापि ।।९।।

**१० अथ " पितृयज्ञेन यक्ष्ये,, इति निरुच्य " पितृभ्यः स्वधा ,, इति जुहुयात् – इत्युक्तः पितृयज्ञः ।।**

**११ अथ " भूतयज्ञेन यक्ष्ये ,, इति निरुच्य " भूतेभ्यो नमः ,, इति भूमौ बलिं दद्यादित्युक्तो भूतयज्ञः ।।**

१२ अथ मनुष्य यज्ञेन यक्ष्ये ,, इति निरुच्य " मनुष्ये-भ्यो हन्ता ,, इति भूमावन्नं निधदीत स एष मनुष्य यज्ञः ॥

१३ अथवा एतैर्जुहुयात् – अवग्राहशो हस्तेन होमः ॐ अग्नये स्वाहा । सोमाय० । धृवाय० । धृवायभौमाय० । धृवक्षितये० । अच्युतक्षितये० । ईशानाय० । जयन्ताय० । धर्माय० । घर्मरुचये स्वाहा । धान्वन्तराय० । विद्यायै० । अम्बिकायै० । हरये० । गणेभ्यः० । गणपति-भ्य०। पर्षद्भ्यः०। विश्वेभ्यो देवेभ्यः० । साध्येभ्यो देवेभ्यः०। सर्वेभ्यो देवेभ्यः ० । सर्वाभ्यो देवताभ्यः० । भूः स्वाहा । भुवः स्वाहा । सुवः स्वाहा । भूर्भुवः सुवः स्वाहा ॥ इति पञ्चविंशतिः ॥ अवग्राहशः = पृथक् पृथक् आदाय ॥ इदं देवपितृभूतमनुष्ययज्ञैः विकल्पितम् ॥ केचित् ब्रह्मयज्ञस्यापि उक्ताऽऽहुतिभिः गतार्थत्वं मन्यन्ते। परं तत् प्रकरणविरोधात् अप्रसक्तत्वाच्च नाद्रियते ॥१३॥

१४ " अग्नये स्विष्टकृते स्वाहा ,, इत्युत्तरार्धपूर्वार्धे ॥

१५ अथ बलिं हरेत् ॥ वैश्वदेवानन्तरं कर्तव्यमिदं नित्यम् ॥१५॥

१६ अपरेणाग्निं–" धर्माय स्वाहा, अधर्माय स्वाहा ,, इति स्वाहान्ते किञ्चित् किञ्चिदन्नं भूमौ निदध्यात् ॥ एवमुत्तरत्र ।१६।

१७ अग्रेणाग्निं " कद्रुवे नागमात्रे स्वाहा । सर्पेभ्यः स्वाहा । ब्रह्मणे स्वाहा ,, इति ॥

१८ अभ्रिण्यवकाशे – " अचलायै देव्यै स्वाहा । वास्तुपाल्यै सगणायै स्वाहा ,, इति ॥

अभ्रिणि =इति मेघवत्याकाशे , वातायनदेशे इत्यर्थः ॥१८॥

१९ अभ्रिदेशे – " अद्भ्यः स्वाहा । वरुणाय स्वाहा ,, इति ॥

अभ्रिः भूमिभेदनादिकृषिसाधनं कुद्दालादिः । " खनन साधनभूता काष्ठमयी तीक्ष्णमुखाग्रा अभ्रिः ,, इति सायणाचार्याः (तै . सं०.- १ . ३ . १ . , तद्वति अभ्रिदेशे ॥१९॥

२० स्थाल्यां – " प्रजापतये स्वाहा । परमेष्ठिने स्वाहा । इति ॥ स्थाली = चरुपात्रं ॥२०॥

२१ देवतावकाशे – " ऋषभाय स्वाहा । रुद्राय स्वाहा । रुद्राण्यै स्वाहा ,, इति ॥

देवतावकाशे – कुलदेवतासमीपे ॥२१॥

२२ मध्येऽऽगारस्य – " ओषधिवनस्पतिभ्यः स्वाहा । रक्षोदेवजनेभ्यः स्वाहा " इति ॥

२३ उच्छिरसि – " कामाय स्वाहा । भगाय स्वाहा श्रियै स्वाहा । विष्णवे स्वाहा ,, इति ॥

उच्छिरसि – उपरिप्रदेशे । अगारस्येत्यनुकृष्यते ॥२३॥

२४ स्थूणादेशे " गृहाय स्वाहा । गृहराजाय स्वाहा ,, इति ॥ स्थूणा गेहस्तम्भः ॥२४॥

२५ धनधान्यावकाशे – " धनधान्याभ्याꣳ स्वाहा । वैश्रवणाय स्वाहा ,, इति ॥

धनधान्ययोः अवकाशे = समीपे ॥२५॥

२६ गोष्ठे पल्वले वा – " श्रियै स्वाहा । पुष्ट्यै स्वाहा,, इति ॥ पल्वलं = सरः तत्तीरे इत्यर्थः ॥२६॥

२७ उलूखलमुसलावकाशे – " उलूखलमुसलाभ्याꣳ स्वाहा " इति ॥

२८ दृषदुपलावकाशे – " दृषदुपलाभ्याꣳ स्वाहा " इति ॥

उलूखलमुसले दृषदुपलौ च लोकप्रसिद्धौ ॥२८॥

२९ समूहन्यवकाशे – " समूहन्यै देव्यै स्वाहा ,, इति ॥

समूहनी = सम्मार्जनी , तद्देशे ॥२९॥

३० उत्तरपूर्वदेशेऽगारस्य – " गृह्याभ्यः स्वाहा । अवसानेभ्यः स्वाहा । अवसानपतिभ्यः स्वाहा । सर्पदेव-जनेभ्यः स्वाहा । सर्वभूतेभ्यः स्वाहा,, इति ॥

३१ द्वारमध्ये – "अन्तरिक्षाय स्वाहा । अवान्तरिक्षाय स्वाहा इति ॥ द्वारमध्ये , अगारस्येत्यनुकृष्यते ॥३१॥

३२ पार्श्वयोः -- " धात्रे स्वाहा । विधात्रे स्वाहा ,, इति । द्वारस्यैव पार्श्वयोः ॥ एवमुत्तरत्र ॥

३३ उपपार्श्वयोः -- " भूत्यै स्वाहा । प्रभूत्यै स्वाहा ,, इति ॥

३४ [1] संवरणदेशे – " यदेजति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा " इति ॥

संवरणदेशे = गेहाच्छादनस्थले । अतिथिस्वागतयोग्यस्थले इति यावत् ॥ संवननदेशे इति पाठेऽपि तथैवार्थः ॥३४॥

३५ अथोपनिष्क्रम्य - जेष्ठावकाशे -- " ज्येष्ठाभ्या० स्वाहा । , करस्कराभ्या० स्वाहा ,, इति ॥

ज्येष्ठावकाशे = श्रेष्ठस्थले = विशालदेशे इति यावत् ॥३५॥

३६ अनसि रथे वा -- " श्रियै स्वाहा । विष्णवे स्वाहा,, इति ॥

३७ गोष्ठे – " रुद्राय स्वाहा । पशुभ्यः स्वाहा । पशु-पतये स्वाहा इति ॥

३८ वास्तुमध्ये – " वास्तोष्पतये स्वाहा । पृथिव्यै स्वाहा । अन्तरिक्षाय० । दिवे० । सूर्याय० । चन्द्रमसे० । नक्षत्रेभ्यः०,, । अद्भ्यः०। ओषधीभ्यः० । वनस्पतिभ्यः० ।

---

१. क. ठ. संवननदेशे ।

चराचरेभ्यः० । परिप्लवेभ्यः० । सरीसृपेभ्यः० । देशेभ्यः० । कालेभ्यः० । लोकेभ्यः० । देवे[२]भ्यः० । ऋषिभ्यः० । पितृभ्यः० । वसुभ्यः० । रुद्रेभ्यः० । आदित्येभ्यः ० । इन्द्राय० । बृहस्पतये० । प्रजापतये० । ब्रह्मणे० । आयतनवते स्वाहा ॥ इति ॥

एते सप्तविंशति बलयः ॥३८॥

३९ अथ दक्षिणतः प्राचीनावीती – "पितृभ्यःस्वधानमः स्वाहा " । पितामहेभ्यः ० । प्रपितामहेभ्यः० । मातृभ्यः० । पितामहीभ्यः० । प्रपितामहीभ्यः० । मातामहेभ्यः० । मातुः पितामहेभ्यः० । मातुःप्रपितामहेभ्यः० । मातामहीभ्यः० । मातुःपितामहीभ्यः० । मातुःप्रपितामहीभ्यः ० । इति ॥

अग्नेः दक्षिणतः ॥३९॥

४० अप उपस्पृश्य उपवीती उत्तरतः "नमो रुद्राय पशुपतये स्वाहा " इति ॥ उत्तरतः अग्नेरेव ॥४०॥

४१ अथ दिक्षु – "प्राच्यै दिशे स्वाहा । दक्षिणायै दिशे० । प्रतीच्यै दिशे० । उदीच्यै दिशे० । ऊर्ध्वायै दिशे ० । अधरायै दिशे ० । इति ॥

४२ अथावान्तरदिक्षु – "आग्नेय्यै दिशे ० । नैर्ऋत्यै दिशे० । वायव्यै दिशे० । ईशनायै दिशे" इति ॥

४३ अथाऽऽकाश उत्क्षिपति – "ये भूताः प्रचरन्ति दिवाबलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा " इति दिवा। "नक्तं बलिमिच्छन्तः " इति नक्तम् ॥

---

२. क. ख. ज. वेदेभ्यः ० ।

समानतन्त्रेण मध्याह्ने एव कर्तव्यपक्षे " दिवानक्तं बलिं ,, इति पाठः ॥ ४३ ॥

**४४ सर्वत्र अग्रेणाग्निं वा स्थानम् ॥**

उक्तबलिहरणस्थानैः विकल्पः ॥४४॥

**४५ संक्षाळनं प्रागुदीच्यां दिशि निनयति - "[१] नमो रुद्राय भौमाय स्वाहा ,, इति ॥**

संक्षाळनं = बलिपात्रक्षाळनजलम् ॥४५॥

॥ इति द्वितीयप्रश्ने एकोनविंशः खण्डः ॥

## * विंशः खण्डः *

( २७ अतिथिसत्कारविधिः ब्रह्मयज्ञश्च )

**१ अथ वैश्वदेवं हुत्वाऽतिथिमाकांक्षेत आगोदोहनकालम् ॥**

गोदोहनेति , गोदोहनापेक्षितसमयपर्यन्तं त्रिंशत् पलपरिमितं कालं इति यावत् ॥१॥

**२ अग्रं वा उद्धृत्य दद्यात् । विज्ञायते च " यज्ञो वा एष पञ्चमो यदतिथिः ,, इति ॥**

अग्रमिति । अतिथेरनागमने इतिशेषः , तदा अग्रं = चरुपात्रस्थं षोडशग्रासमात्रं अन्नं उद्धृत्य यस्मै कस्मै चित् दद्यात् ॥ अयं मनुष्ययज्ञः । तत्प्राशस्त्यबोधकं ब्राह्मणवाक्यम् ॥२॥

**३ जघनेन गार्हपत्यं उपविश्य , औपासनस्य वा ॥ " अधीहि भो भगवः ,, इति गार्हपत्यमुक्त्वा प्राणायामैः- त्रिराचम्य सावित्रीं सहस्रकृत्व आवर्तयेत् , शतकृत्वोऽ परिमितकृत्वो वा , दशावरम् ॥**

इदानीं ब्रह्मयज्ञः कथ्यते । जघनेन = पश्चाद्भागे गार्हपत्यस्य , अथवौपासनाग्नेः । इति विकल्पः व्यवस्थितः । आहिताग्नेः गार्हपत्यस्य । तदभावे औपासनस्येति ॥ सावित्रीं = गायत्रीं । जपे

---

१ ख ङ ज . ठ. अनेन बलिदानमपि दृश्यते ॥

विकल्पः संख्यायाः । दशावरं ततो न्यूनं न जपेत् ।। अयं पूर्वाङ्गो जपः ।।३।।

४ ब्रह्मयज्ञधर्मेण -" विद्युदसि÷ इत्यपःस्पृष्ट्वा ब्रह्मयज्ञाङ्गमाचमनं कृत्वा , " तत्सवितुः ÷ इत्येतां पच्छोर्धर्चशोऽ न वानमुक्त्वा वेदादीन् छन्दाँसि कूश्माण्डानि चाधीयीत ।।

ब्रह्मयज्ञधर्मः आरण्यके " ब्रह्मयज्ञेन यक्ष्यमाण ÷ इत्यनुवाके पठितः ।। पच्छोर्धर्चशोऽनवानं , पादशः , अर्धर्चशः पूर्णतयाच इत्यर्थः ।। आदौ व्याहृतीरुक्त्वा पादादिखण्डशः पठेत् ।।४।।

५ " अग्निमिळे ÷ इति ऋग्वेदस्य । " इषेत्वोर्जेत्वा ÷ इति यजुर्वेदस्य । " अग्न आयाहि ÷ इति सामवेदस्य । " शन्नो देवीः ÷ इति अथर्ववेदस्य । " अग्निर्मूर्धा ÷ भुवः ÷ इति छन्दाꣳसि । " यद्देवा देवहेळनं ÷ इत्यादि – कूश्माडण्चः ।।

पूर्वसूत्रोक्तं " वेदादीनित्यादिवाक्यं स्वयमेव विवृण्वन्ति । इति छन्दाꣳसि = इत्यादि ब्राह्मणानि ।।५।।

६ अथ वेदाङ्गान्यधीयीत । तत्तदादीन् वा ।।

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति वेदाङ्गानि ।। अत्र छन्दः शब्देन " मयरसतजभनलगसम्मितं ,, इत्यादि छन्दः सूत्रजातमभिहितं ज्ञेयम् ।।६।।

७ अथ " नमो ब्रह्मणे नमो अस्त्वग्नये ÷ इति परिधानीयां त्रिरन्वाह ।।

" परिधानीयां ,, इति तन्मन्त्रसमाख्या ।। " तत्तदादीन्वा ,, इति पूर्वसूत्रे विकल्पः प्रस्तुतः । स चाशक्तौ अनुष्ठेयान्तरावश्यकत्वेन कालाभावाद्वा ज्ञेयः ।। अङ्गानां आदिभागाः – " अथ शिक्षां प्रवक्ष्यामि ,, । आमावास्येन वा पौर्णमास्येन वा हविषा यक्ष्यमाणो भवति ,, । " वृद्धिरादैच् । " समाम्नायः समाम्नातः ,, ।

" मयरसतजभनलगसम्मितम् ,, । " पञ्चसंवत्सरमयम् ,, इति क्रमेण ज्ञेयाः ॥७॥

८ " वृष्टिरसि वृश्च मे ÷ इत्यप उपस्पृश्य गृहानेति ॥

९ एवमेव वेदादयः छन्दांसि कूश्माण्डयः सायं प्रात-[1]रध्येयानि ॥ अधीयीतेति पाठे द्वितीयान्तानि अध्याहार्याणि ॥

१० यदधीते स ब्रह्मयज्ञः, यज्जुहोति स देवयज्ञः, यत्पितृभ्यः स्वधाकरोति स पितृयज्ञः, यद्भूतेभ्यो बलिँहरति स भूतयज्ञः, यद्ब्राह्मणेभ्योऽन्नं ददाति स मनुष्ययज्ञः, इति ॥

यदधीते इति सूत्रद्वयं आरण्यकस्य " पञ्च वा एते महायज्ञाः ÷ इति अनुवाकस्य निगदव्याख्यानम् ॥१०॥

११ एते पञ्च महायज्ञाः सततं सुप्रयुक्ताः हि नयन्ति परमां गतिम् ॥ इति ॥

महायज्ञा इति – महत्वमेतेषां उपात्तसमस्तदुरितोपक्षयद्वारा चित्तशुध्द्यापादकत्वात्, दौर्ब्राह्मण्यानापादकत्वाच्च ॥ अत एव एते नित्याः। तदाहुः " सततं सुप्रयुक्ता ,, इति ॥ परमां = उत्कृष्टां, मोक्षमिति यावत् ॥११॥

इदानीं पञ्चमहायज्ञानां प्राशस्त्यं प्रस्तुवन्ति – ॥

१२ " एतेभ्यो यस्य पञ्चभ्यो यज्ञ एकोऽपि हीयते ।
मनस्वत्याऽऽहुतिस्तत्र प्रायश्चित्तं विधीयिते ॥

एतेभ्यः पञ्चभ्यः = एतेषां पञ्चानां मध्ये । पञ्चमी आर्षा ॥

हीयते = लुप्यते, आलस्यादिनेति शेषः । यस्येत्यधिकारिण-इत्यर्थः ॥१२॥

त्र्यहं त्र्यहं वापि तेषु प्रमादादकृतेषु च ।
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ॥२॥

---

१ क. ठ अधीयीत ।

तेषु = पञ्चमहायज्ञेषु ।। प्रमादात् = देशकालाद्यानुकूल्याभावात् आलस्याद्वा । तन्तुमतीः = तन्तुं तन्वन् , ÷ उद्बुध्यस्वाग्ने , त्रयस्त्रिंशत्तन्तवः , ÷ इति तन्तुमद्देवताकाः तिस्रः । वारुणीः = वरुणदेवताकाश्चतस्रः "अवते हेळ ÷ उदुत्तमं ÷ इमम्मे वरुण ÷ तत्वायामि ÷ इति जपेत् तत्प्रायश्चित्तम् ।।२।।

"दशाहं द्वादशाहं वा विच्छिन्नेषु तु सर्वशः ।
चतस्रोऽभ्यावर्ति हुत्वा कार्यस्तान्तुमतश्चरुः ।।३।।

सर्वशः = तण्डुल - जलादीनामभावेन प्रवासादिना अवकाशाभावेन अशुचित्वान्मनसाऽपि कर्तुमशक्यत्वेन सर्वरीत्या विच्छिन्नेषु एकोरीति सर्वत्रान्वेति । "अग्नेभ्यावर्तिन ÷ अग्ने अङ्गिरः ÷सहरय्या ÷ पुनरूर्जा ÷ , इति चतस्रोऽभ्यावर्तिनीः हुनेत् ।। तथा तान्तुमतः तन्तुमदग्निदेवताकः चरुः = चरुहोमः कार्यः ।। एतेन सर्वथा तेषामत्याज्यत्वमुक्तं भवति ।। तन्तुमद्देवताका मन्त्राः पूर्वं कथिताः- "तन्तुन्तन्वन् ÷ इत्यादयस्त्रयः । होमसंख्या तु अष्टोत्तरं सहस्रं शतं, अष्टाविंशतिर्वा सम्भवानुरोधेन ।। अनादिष्टायां संख्यायां सकृत, इति न्यायेन वा सकृत् सकृत् ।६।।

"यस्य स्त्री वाऽनुपेतो वा गृहेऽवेतान् बलीन्हरेत् ।।
कूश्माण्डयस्तत्र होतव्याः स्वयं यज्ञसमृद्धये ।।४।।

यजमानसन्निधौ तस्य स्त्री वा अनुपनीतः पुत्रो वा यथासम्भवमेनान् यज्ञान् निर्वर्तयेयुः । ततः स्वयं यजमानः तत्र न्यूनता परिहाराय कूश्माण्डहोमं कुर्यात् ।।

"प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते ।
पञ्चानां महतामेषां स यज्ञैः सह गच्छति ।।५।।

तत्र हेतुमाह – गृहे अन्यः अधिकारी भ्रात्रादिः न विद्यते चेत् स यजमानः तैः पञ्चमहायज्ञैः सहैव प्रवासं गच्छति ।।५।।

"प्रवासे कुरुते चैनान् यदन्नमुपपद्यते ।
न चेदुत्पद्यते चान्नं अद्भिरेतान् समापयेत् ।।६।।

स यत्र गच्छति तत्र यदन्नं भोज्यं लभ्यते, तेनैव तत्र उक्त यज्ञान् कुर्यात् ॥ अन्नालाभे तु जलैरेव कुर्यात् ॥६॥

"अद्भिरेव व्रतं कुर्यात्, यथालाभमनुव्रतम् ॥

यथालाभं = उपलब्धेन द्रव्येण कुर्यादेव, नतु लोपयेत् ॥ सर्वथा उक्तद्रव्यालाभे तन्मन्त्रान् पठेत् वा, । "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति ,, इति श्रुत्या तथा प्रतिपादनात् । "अन्नाभावे वैश्वदेवं तण्डुलेन जलेन वा । अथवा मन्त्रमुच्चार्य, वैश्वदेवं चतुर्विधमिति स्मृतेश्च ॥ "खण्डनी पेषणी चुल्ली चोदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य पञ्चयज्ञैर्व्यपोहति ,, इत्युक्तरीत्या प्रतिदिनं एधमानानां पाप्मनां क्षयाय ते यज्ञाः प्रतिदिनमधिकारिणा यत्र कुत्रस्थितेनाप्यवश्यमनुष्ठेयाः ॥

"देवानां देवयज्ञेन द्विजा गच्छन्ति सात्मताम्[1] ॥७॥
पितृणां पितृयज्ञेन भूतयज्ञेन भूतिनः ॥
मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्रह्मणः ॥८॥
एतासां सात्मतां गत्वा देवतानां शतं समाः ।
आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययम् ॥९॥

पञ्चमहायज्ञानां फलकथनम् ॥ देवानां सात्मतां = साम्यरूपां मुक्तिं ॥ एवं पितृणामित्यादि ॥ यद्यपि एषां उपात्तदुरित क्षयरूपं फलमुक्तं, तथापि "संयोग पृथक्त्व ,, न्यायेनोभयमपि अविरुद्धम् ॥ शतंसमाः - देवतामानेन तत्र शतं वर्षाण्युषित्वा ततः परं पुनरावृत्तिरहितं मोक्षाख्यं आनन्दं ब्रह्मैव भवन्ति, चित्तशुद्धि द्वारा इति शेषः । ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृताऽऽत्मानः प्रविशन्ति परं पदम् ,, इत्युपनिषद्घोषः ।५।

अतिथिसत्कारप्रसङ्गेन अतिथीन् प्राह - अथेति ॥

१३ अथास्मा अतिथिर्भवति - गुरोः समानवृत्तिः, वैखानसो वा, गृहस्थो, वानप्रस्थः, परिव्राजको, गतश्रीः ।

---

१ क. ज. ठ. सास्यताम्

**स्नातको राजा वा धर्मयुक्तः ॥**

गुरोः समानवृत्तिः समानार्हतावान् , समानशीलो वा । वैखानसः = मुनिव्रतः । " वायुभक्षा निराहाराश्च ÷ इत्यादिना बौ० धर्म० सूत्रे तृतीयप्रश्ने तृतीयखण्डे उक्तलक्षणः ॥ गतश्रीः = श्रीमान् सन् कालेन दरिद्रः , सतु कुटुम्बी भवेत् अयं गतश्री शब्दः वेदेऽन्यथा व्याख्यातः ॥ अन्ये प्रसिद्धाः ॥ धर्मयुक्त इत्यनेनाधार्मिको व्यावर्त्यते ॥ राजपदं क्षत्रियपरं । तेन अक्षत्रियो व्यावर्त्यते ॥१३॥

**१४ तेषां अभ्युत्थायासनं पाद्यमर्हणमर्घ्यं वा प्रयुञ्जीत ॥**

तेषां पुरतः, अत्र वाशब्दश्चार्थे ॥ अर्घ्यं = मधुपर्कः ॥१४॥

**१५ यास्तत्रौषधयः सन्ति ता देयाः ॥**

ओषधयः व्रीहितण्डुलादयः ॥१५॥

**१६ अन्यां वा प्रक्रियां कुर्वीत ॥**

तत्कालोचितां फलोपहारादिरूपां , यया ते तुष्येयुः ॥१६॥

**१७ सर्वेभ्योऽभ्यागतेभ्यः आचाण्डालेभ्यः स्वागतं व्याहरेत् ॥**

अतिथि - अभ्यागतलक्षणमुक्तां पूर्वं ॥ सर्वेभ्य इति–अतिथिसत्कारे लिङ्गजातिभेदविमर्शो न कार्य इति उक्तं भवति ॥१७॥

**१८ ओषधि–विभागस्तु विभववता कार्यः ।**
**अभावे भूमिरुदकं तृणानि कल्याणी वाक् ॥**

विशेषपूजाद्यशक्तौ " तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एताऽन्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ,, इत्युक्तरीत्याऽर्हणं कुर्यात् ॥१८॥

**१९ एतानि वै सतोऽगारे न क्षीयन्ते कदाचन–इति ॥**

उक्तस्मृतेर्मूलसूत्रम् ॥१९॥

**२० तानेतान् परं ब्रह्मेत्याचक्षते ॥**

तान् = काले समागतान् अतिथीन् परंब्रह्मस्वरूपान् मन्यन्ते श्रुतिविदः ॥२०॥

२१ तेषामग्रहणे तु द्वादशरात्रमक्षारलवणाशनं अधःशयनं ब्रह्मचर्यं च ॥

अतिथिसत्काराकरणे प्रायश्चित्तम् ॥२१॥

२२ त्रिरात्रोपोषितः उत्क्षेपणपरः गृह्णीयात् ॥

पूर्वोक्तदोषे प्रायश्चित्तान्तरं विकल्पेन। त्रिरात्रं त्र्यहोरात्रं । उपोषणं कृत्वा, उत्क्षेपणपरः = तानुच्चैस्तरान् भावयन् गृह्णीयात् = पुनरतिथिं स्वीकुर्यात्, पूजयेदित्यर्थः ॥२२॥

२३ बलिहरणं व्याख्यातम् ।

॥ इति द्वितीयप्रश्ने विंशः खण्डः

* एकविंशः खण्डः *

( २८ प्रत्यवरोहणम् )

१ अथ प्रत्यवरोहणम् ॥

प्रत्यवरोहणं नाम ऋतौ ऋतौ क्रियमाणं कर्म, तच्च यावज्जीवम् ; अस्याधिकारः विवाहात्परमेव ॥ एकस्मिन् पाके वसतां एकेनैव कृते सर्वैरपि कृतं भवति ॥१॥

२ वसन्तादौ – ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा, देवयजनोल्लेखन – प्रभृत्याग्नि मुखात् कृत्वा, सावित्र्या पक्वं हुत्वा, आज्याहुतीरुप जुहोति – " मधुश्च स्वाहा माधवश्च स्वाहा इति ॥

वसन्तादौ = चैत्रशुक्लप्रतिपदि ॥ आदिमसप्ताहे – स्वानुकूले शुभदिने इति संप्रदायः ॥ ब्राह्मणानन्नेनेति – पुण्याह-वाचनादि गायत्र्या पक्वहोमपर्यन्तं सर्वतो समानम् ॥ आज्याहु-त्यादि भिद्यते ॥२॥

३ वासन्तिकैरलङ्कारैरलंकृत्य, वासन्तिकान्यन्नानि ब्राह्मणे-भ्यो दत्वा, अन्नशेषान् सगणः प्राश्नाति – " वसन्ते-नर्तुना देवाः ,, इति ब्राह्मणम् ॥

सगण – इति प्राशने अन्वेति । एवमुत्तरत्रापि ॥ वासन्तिकैः = पुष्पादिभिः अलङ्कारैर्वसन्तोद्भवैः ब्राह्मणान्, अलंकृत्येत्यन्वयः तादृशान्येव यवाद्यन्नानि ॥ अन्नशेषान् = हुतशेषान् सगणः प्राश्नाति अवशिष्टान् । ब्राह्मणवाक्योदाहरणं तु प्रमाणत्वेन ज्ञेयम् ॥३॥

४ ग्रीष्मादौ – "शुक्रश्च स्वाहा । शुचिश्च स्वाहा" इति आज्यं हुत्वा, ग्रैष्मिकैरलङ्कारैरलंकृत्य, ग्रैष्मिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति । "ग्रैष्मेण देवा ऋतुना" इति ब्राह्मणम् ॥

ग्रैष्मेणान्नेन = मुद्गान्नादिना ॥४॥

५ वर्षादौ – "नभश्च स्वाहा, नभस्यश्च स्वाहा" इति हुत्वा, वार्षिकैरलङ्कारैरलंकृत्य, वार्षिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान् सगणः प्राश्नाति । "वर्षाभिर्ऋतुनाऽऽदित्याः" इति ब्राह्मणम् ॥

षष्टिदिनेषु प्राप्यव्रीह्याद्यन्नानि ॥५॥

६ शरदादौ – "इषश्च स्वाहा । ऊर्जश्च स्वाहा" इति हुत्वा, शारदिकैरलङ्कारैरलंकृत्य, शारदिकान्यन्नानि ब्राह्मणेभ्यो दत्वा, अन्नशेषान् सगणः प्राश्नाति ॥ शारदेनर्तुना देवाः, इति ब्राह्मणम् ॥

शाल्याद्यन्नानि शारदानि ॥६॥

७ हेमन्तादौ– "सहश्चस्वाहा, सहस्यश्च स्वाहा" इति हुत्वा हैमन्तिकैरलङ्कारैरलंकृत्य, हैमन्तिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषं सगणः प्राश्नाति । "हेमन्तेनर्तुना देवाः इति ब्राह्मणम् ॥ प्रैयङ्गवाद्यन्नानि हैमन्तानि ॥७॥

८ शिशिरादौ = "तपश्च स्वाहा, तपस्यश्च स्वाहा" इति हुत्वा, शैशिरैरलङ्कारैरलंकृत्य, शैशिरिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषं सगणः प्राश्नाति ॥ "शैशिरेण

र्तुना देवाः „ इति ब्राह्मणम् ॥

गोधूमाद्यन्नानि शैशिराणि ॥८॥

९ अथाधिमासे – ' उपयाम गृहितोऽसि स०सर्पोस्य० हस्पत्याय त्वा स्वाहा „ इति हुत्वा । चैत्रिकैरलङ्कारैर-लङ्कृत्य, चैत्रिकाण्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषं सगणः प्राश्नाति । " ग्रीष्मो हेमन्त उतनो वसन्तः शरद्वर्षाः सुवितन्नो अस्तु „ इति ब्राह्मणम् ॥

अधिमासे इत्युपलक्षणं क्षयमासस्यापि । उभयत्राप्येकमेव विधानम् ॥ चैत्रिकैरिति - चैत्राद्याश्विनमासपर्यन्तस्योपलक्षणं, तत्राधिमाससम्भवात् । अपि च कार्तिकादि माघान्तस्यापि क्षयमाससम्भवे तदप्युपलक्षणीयम् ॥ अलङ्करण - अन्नदाने तत्तन्मासिके एव ग्राह्ये । इदं च प्रत्यवरोहणं नवान्नाग्रयणप्रकृतिभूतम् ॥ श्रौते तु आग्रयणं इष्टिः, तच्चास्मादन्यदेव ॥९॥

१० स एष आघारवान्वा स्यादाग्निहोत्रिको वापूर्विको वा॥

११ प्रत्यवरोहणं व्याख्यातम् ॥

॥ इति द्वितीयप्रश्ने एकविंशः खण्डः ॥

* द्वाविंशः खण्डः *

( २९ अष्टकाश्राद्धम् )

१ अथाष्टकाहोमः ॥

व्याख्यायते इत्यध्याहारः ॥ अयं प्रतिसांवत्सरिक – अनुमासिकादीनां प्रकृतिः ॥१॥

२ तद्धे मास्यपरपक्षाष्टम्यां क्रियेत ॥

तैषपदं मार्गशीर्षोपलक्षणं - " तै० ब्राह्मणे " द्वादशाष्टकाः „ इत्युक्तत्वात् मार्गशीर्ष - पुष्य - माघ – फाल्गुनेषु अपरपक्षेषु अष्टम्यां अष्टकाश्चतस्रः, पूर्वोत्तरदिनेषु अन्वष्टका 'अष्टौ इति गणनात् ॥२॥

**३ एवं माघे एवं फाल्गुने, यदि विहृतः । ॥**

विहृतः = प्रतिमासं पृथगेव कर्तव्यत्वेन विवक्षितः ॥३॥

**४ यद्युवै समस्तः, उपरिष्टान्माघ्याः पौर्णमास्याः, अपर पक्षस्य सप्तम्यां अष्टम्यां नवम्यां क्रियेतापिवाष्टम्यामेव ॥**

समस्तः । समानतन्त्रेण कर्तव्यः । विकल्पोऽशक्तविषयः । अपिवेति तत्रापि विकल्पः । अन्वष्टके अपि अष्टकया - समानतन्त्रेण कार्ये इति भावः ॥ अत्र शिष्टिव्याख्यानेऽपि - मार्गशीर्षादि चतुर्षु मासेषु अपरपक्षेषु अन्वष्टकाभिः सह अष्टकाहोमः कर्तव्यत्वेन व्यवस्थापितः ॥ धर्मशास्त्रेषु षण्णवतिश्राद्धेषु । प्रतिवर्षं कर्तव्येषु अष्टकाः द्वादश गणिताः ॥४॥

**५ श्वः करिष्यामि ,, इति ब्राह्मणान्निमन्त्रयते , योनि–गोत्र–श्रुत – वृत्तसम्पन्नान् ॥ अविगुणाङ्गान् ॥**

श्व इति । अनेन सर्वत्र श्राद्धेषु विप्रनिमन्त्रणं पूर्वेद्युरेवेति गम्यते । सद्यो निमन्त्रणन्तु आनुकूल्यविषयः ॥ योनीत्यादि ब्राह्मणविशेषणानि । योनिसम्पन्नः = सत्कुलप्रसूतः । गोत्रसम्पन्नः = सप्तगोत्रेष्वेव जातः । श्रुतसम्पन्नः - षडङ्गवेदज्ञः ॥ वृत्तसम्पन्नः = सदाचारशीलवान् अविगुणाङ्गः अङ्गवैकल्यशून्यः । एवं भूतान् निमन्त्रयीत ॥५॥

**६ अविकीर्णिनः , परिखातिक्रान्तान् , आन्तगान् ,अन्त्यजातान् अनुकामीन – हालेय–बालेय – पुत्रिकापुत्र–परक्षेत्रज – सहोढ–कानीनानुगावरद्विप्रवरान् परिहापयेत् ॥**

श्राद्धे परित्याज्यानाह-तेन योन्यादिसम्पत्तिषु न्यूनतायामपि निषिद्धान् परित्याज्यान्यान् निमन्त्रयितुं शक्येत । तदर्थः आरम्भः । अवकीर्णी = अन्ययोनौ, अयोनौ वा रेतःसिक् । परिखा = कर्मभूमेः भारतस्य सीमा, तामतिक्रान्तः परिखातिक्रान्तः राज्ञा दण्डविधानेन देशान्निष्कासिता वा । अन्तः = अन्तिमवर्णः , तत्स्त्रीगामी आन्तगः । अन्त्यजातः =

शूद्रापुत्रः ॥ अनुकामीनः = काममनुसृत्यवर्तमानः, कामाचारः । हालेयः = मद्यप, मद्यविक्रयी च । बालेय = रासभव्यवहारी । पुत्रिका = " अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्,, इति विधिना गृहीता, तस्याः पुत्रः पुत्रि-कापुत्रः । परक्षेत्रजः – परदारजातः सहोढः = गर्भिण्यामेव विवाहितायां तद्गर्भे जातः । कानीनः = कन्यकाजातः । अनुगः = सेवकः । अवरः = सर्वरीत्या नीचः । द्विप्रवरः = प्रवरद्वयगोत्र जातः । एतान् श्राद्धेषु वर्जयेत् ॥६॥

**७ असम्बन्धानित्येके ॥** रक्तसम्बन्धरहितानेव वरयेदिति केचन वदन्ति ॥७॥

**८ कामं सम्बन्धानपि श्रुतवृत्तसम्पन्नान् ॥ " श्रुतवृत्त-योर्हि स्वधा निधीयते ,, इत्युपदिशन्ति ॥**

श्रुतवृत्तसम्पन्नाश्चेत् सम्बन्धिनोपि श्राद्धार्हाः स्वमतेन ॥ तत्र वृद्ध सम्मतिः उपदिशन्तीत्यनेनोक्ता । अत एव शाखान्तरेषु जामातृ - भागिनेयदौहित्रानपि वरयन्ति ॥८॥

**९ वेदार्थवित् त्रिमधुः, त्रिणाचिकेतः, त्रिसुपर्णः, पञ्चा-ग्निसङ्गी, षडङ्गवित्, विशीर्षकः, ज्येष्ठसामवित्, स्नातक इत्येते पङ्क्तिपावनाः श्राद्धार्हा भवन्ति ॥**

अन्यानपि श्राद्धार्हानुपदिशन्ति –

केवलं वेदार्थवित् । त्रिमधुः = मधुशब्दघटितमन्त्राध्यायी । त्रिः कृत्वः मधुविद्योपासको वा, मधुविद्या छान्दोग्ये प्रसिद्धा । त्रिणाचि-केतः = त्रिवारं नाचिकेताग्निचित् । त्रिसुपर्णः = प्रतिदिनं त्रिसुप-र्णमन्त्राध्यायी तैत्तिरीये नारायणोपनिषदि प्रसिद्धास्ते मन्त्राः । पञ्चा ग्निसेवी = दक्षिणाग्निगार्हपत्याऽऽहवनीयसभ्याऽऽवसथ्याः पञ्चाग्नयः, तत्सेवी । केवलं षडङ्गज्ञः । विशीर्षकः – विशेषण शिरोव्रतानु-

ष्ठायी ।। आथर्वणिके शिरोव्रतं वेदव्रतत्वेन प्रसिद्धम् ।। ज्येष्ठ सामवित् – " मूर्धानं दिवः – इति मन्त्रस्य त्रिविधमपि साम यो- वेत्ति सः " इति केचन सामगाः ।। धर्मसूत्रव्याख्यायां गोविन्द राजोऽपि तथैव प्राह ।। भास्कररायास्तु ललिता सहस्रनामभाष्ये (६७२ तमे नाम्नि) " उदुत्यं ÷ चित्रदेवानां – इति मन्त्रद्वयस्य साम ज्येष्ठसामेति आहुः ।। स्नातकः – त्रिविधः ।। इत्येते पङ्क्तिपावनाः – स्वपङ्क्तावुपविष्टान् पुनन्ति, ते श्राद्धार्हाः भवन्ति ।।९।

**१० अथापांक्तेयाः कव्यघ्नाः, द्विजाधमाः, तान् प्रवक्ष्यामः – ये स्तेनाः, पतिताः, क्लीबाः, नास्तिकाः, वेदनिन्दकाः, कर्मनिन्दकाः, जटिलाः, अनधीयानाः, दुर्बलाः, कितवाः, पूगयाजकाः, अयाज्ययाजकाः, चिकित्सकाः, देवलकाः, मांसविक्रयिणः, पण्यजीविनः, ग्रामप्रेष्यः, कुनखी, श्यावदन्तः, मातापितृगुरुद्वेषी, त्यक्ताग्निः, वार्धुषिकः, ब्रह्मद्विट्, परिवित्तिः, कुशीलवः, अवकीर्णी, वृषलीपतिः, पौनर्भवः, काणः, उपपतिः, भृतकाध्यापकः भृतकाध्यापितः, शूद्रशिष्यः, शूद्रगुरुः, वाग्दुष्टः, कुण्डगोलकौ, मातापितृगुरुत्यागी, गरदः, अगारदाही, कुण्डाशी, सोमविक्रयी, समुद्रगामी, हस्तिगः, अश्वोष्ट्रदमनकः, मद्यपः, पापरोगी, दाम्भिकः, अभिशस्तः, रसविक्रयी, नक्षत्रजीवी, कृषिजीवी, सद्भिर्निन्दितः, प्रेतनिर्यातकः, आचारहीनः, नित्ययाचनिकः, वृषलपुत्रः, इति ।। एतान् वर्जयित्वा श्रुतवृत्तयोः स्वधा निधीयते इत्युपदिशन्ति ।।**

अपांक्तेयाः – पङ्क्त्युपवेशानर्हाः, कव्यं – श्राद्ध घ्नन्तीति ते, ।। श्राद्धवैकल्यकारिणः, । क्रत्वर्थत्वेन निषेधः । द्विजाधमाः के इत्याकाङ्क्षायां – प्रवक्ष्यामः – इति प्रतिज्ञा ।। स्तेनाः – चोराः ।

पतिताः - जातिभ्रंशादिपातित्यहेतुभूतकर्मकराः । नास्तिकाः - ईश्वरो नास्ति, परलोको नास्ति - इति वादिनः । वेदनिन्दकाः - भण्डधूर्तनिशाचरकर्तृको वेदोऽपि न प्रमाणम् - इति वदन्तः ।। कर्मनिन्दकाः - सत्कर्माणि निन्दन्तः ।। जटिलाः - जटाधारिणो गृहस्थाः विहितशिखाधिककेशधारिणः । दुर्बलाः - रोगादिना शरीरबलशून्याः । कितवाः - द्यूतकराः । पूगयाजकाः - समूहयाजकाः । देवलकाः - आगमिकाः । ( शांतिद्विजसंज्ञ१काः ) द्रव्यार्थमेव देवपूजकाः । ग्रामप्रेष्याः = ग्रामसेवकाः । श्यावदन्तः = धूसरदन्तः । त्यक्ताग्निः = औपासनाग्नित्यागी । वार्धुषिकः- द्रव्याणां वृध्या जीवति, सः । परिवित्तिः - कनिष्ठे विवाहिते-तदग्रजोऽविवाहितः । कुशीलवः- गायकः, तेनैव जीवति । अवकीर्णी-त्यक्तब्रह्मचर्यादिव्रतः । वृषलीपतिः =शूद्रापतिः । पौनर्भवः =मृतेभर्तरि अन्येन परिणीतायाः पुत्रः। उपपतिः - जारः । भृतकाध्यापकः - मासिकादिवेतनं प्रतिज्ञाय अध्यापयति सः । भृतकाध्यापितः - तच्छिष्यः केवलं वेतनं दत्वैवाधीती ।। वाग्दुष्टः - सदा दुष्टवाक्वक्ता । "अमृते जारजः कुण्डः । मृतेभर्तरि गोलकः ।। गरदः- भोज्यान्नादौ विषप्रदः । अगारदाही - गेहदाही । कुण्डाशी - जारिणीपुत्राश्रयजीवी अत्याशीवा ॥ समुद्रगामी - समुद्रे यानेन दिनत्रयादूर्ध्वं देशान्तरं नौकया गामी । पापरोगी - क्षयकुष्ठापस्मारादिरोगी । अभिशस्तः - सर्वनिन्द्यः, सर्वैरवमानितो वा । रसविक्रयी क्षीर-तैलादि रसपदार्थविक्रयेण जीवी । नक्षत्रजीवी = शकुनादि फलकथनेन जीवी । प्रेतनिर्यातकः - सततं शववहनकर्मणा जीवी । नित्ययाचनिकः - प्रतिदिनं याचनेनैव जीवी ।। वृषलपुत्रः = महापापिपुत्रः ।। इत्येते अपाङ्क्तेया द्विजाधमाः कव्यध्नाः इति पूर्वेणान्वयः ।। पुनः श्रुतवृत्तकथनं तस्य प्राधान्यार्थम् ।।१०।।

---

१ शान्तिद्विजः प्रकुरुते बहुदीपशान्तिं तत्रत्यवारवनिता मदनाग्निशान्तिम् ।। पक्वान्नपायसघटैः जठराग्निशान्तिं कालक्रमेण जगदीश्वरशक्तिशान्तिम् ।। इत्युक्तः ।।

११ तान् श्वोभूते श्मश्रुकर्माभ्यञ्जनस्नानैः यथोपपादं सम्पूज्य स्वयमाप्लुत्य शुचौ देशे समुपवेशयति ॥

यथोपपादं – यथानुकूलं । श्वोभूते – निमन्त्रणात्परेऽहनि ॥ श्मश्रु कर्मादिकरणं । शुचौ देशे = श्राद्धकर्मार्हे देशे । तान् समुपवेशयति ॥११॥

१२ तथाप्युदाहरन्ति–

"द्वौ दैवे पितृकार्ये त्रीन् एकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ १ ॥

विप्रनिमन्त्रणप्रसंगेन विप्रसंख्यां परिसंख्यापयति–तथापीति ॥ उदाहरन्ति इत्यनेन तस्य साम्प्रदायिकत्वं प्रामाण्यं च सूच्यते दैवे=विश्वेदेवस्थाने । द्वौ भोजयेत् ॥ पित्र्ये = पितृस्थाने त्रीन् । अथवा-उभयत्राप्यैकैकं । श्राद्धे विस्तारं न कुर्यात् ॥

"सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् । पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥ २ ॥

विस्तारे दोषमाह –सत्क्रियामिति । सत्क्रियां = कर्मसाधुत्वम् । अनेकेषां समवाये परस्पर वैमत्येन कर्मसाधुत्वं दुर्लभमेव ॥देश कालौ स्थलाशौचं =कुतपादिकालातिक्रमश्च भवेत् । शौचं = स्वशुचित्वं रक्षितुमपि अशक्यं स्यात् । ब्राह्मणसम्पदं = श्राद्धार्हत्वरूपां ॥ अतः सुसमृद्धोऽपि ॥ कोटीश्वरोऽपि श्राद्धे विस्तारं न कुर्यात् ॥ "सतुशब्दस्य । विस्तरः,, इति नियमः प्रायिकः । अथवा स नियमः महर्षीन् न नियमयति ॥ एतान् पञ्च विस्तरो हन्तीति अन्वयो बोध्यः ॥

"भ्रातृद्वयं न कर्तव्यं न कर्तव्यं पितासुतौ । अनग्निको न कर्तव्यः न कुर्यात् गर्भिणीपतिम् ॥३॥

एकस्मिन् श्राद्धे – भ्रातृद्वयं =एकोदरं । पितापुत्रौ = जनक सुतौ । अनग्निकं = औपासनाग्निशून्यं, विधुरमित्यर्थः ।

गर्भिणीपतिं = सप्तममासादूर्ध्वमिति शेषः ॥ एतान् न श्राद्धे योजयेत् ॥

" भ्रातॄन् वा भोजयेच्छ्राद्धे पुत्रं वापि बहुश्रुतम् ।
आत्मानं वाऽपि युञ्जीत न विप्रं [1] वेदवर्जितम् ॥ ४ ॥

वेदाध्ययनरहितं विप्रं ब्राह्मणार्थे न निमन्त्रयेदित्यर्थः अर्थवादः - भ्रातॄनित्यादिः । न तु विधिः ॥

" निमन्त्रितस्तु गायत्रीं नियुक्तस्तु निषङ्गिणः ॥ भुक्त्वा तु वामदेव्यं च भोक्ता तु सततं जपेत् ॥५॥

प्रसङ्गात् भोक्तृधर्मान् प्राह - भोक्ता निमन्त्रितः सन् गायत्रीं जपेत् । नियुक्तः सन् = गृहीतक्षणः सन् । निषङ्गिणः = तादृशपदयुतान् नमनुवाकान् । नमस्सहमानायेत्यादीन् । भुक्त्यन्ते-वामदेव्यं = कयानश्चित्र - इतिऋग्गध्यूढं साम । जपेदिति सर्वत्रान्वयः ॥

" देवसवितरेतत्ते सहमानाय वै ततः । कयानश्चित्रइत्यादि श्राद्धभोक्ता जपेद्बुधः ॥६॥

देवसवितरेतत्ते ÷ (इत्यादि) अनार्ते ,, ( इत्यन्तं ) । प्रसिद्ध मन्यत् ॥ भोक्ता इत्यनेन भोजनानन्तरमपि एतान् जपेदिति सूचनम् ॥

१३ अथ स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि कृत्वा ।

स्नानपवनादिकं शेषसूत्रे वक्ष्यते ॥

१४ अथ देवयजनोल्लेखनप्रभृति आप्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति - "पितृभ्यस्त्वा, पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमि ॥

अत्र गोरुपाकरणादि कर्म पशुयागे द्रष्टव्यम् ॥ १४ ॥

---

[1] क. घ. ठ. वेदविप्रियम् ।

१५ तूष्णीमित्येके ।।

१६ अथैनामद्भिः प्रोक्षति "पितृभ्यस्त्वा पितामहेभ्यस्त्वा- प्रपितामहेभ्यस्त्वा जुष्टां प्रोक्षामि ।। इति ।।

१७ तामत्रैव प्रतीचीनशिरसीं दक्षिणपदीं संज्ञपयन्ति ।

१८ तस्यै संज्ञप्तायै अद्भिरभिषेकः ।

१९ प्राणानाप्याययति तूष्णीम् ।। आप्यायनं = घृतसेचनेनथा भावयतीत्यर्थः ।।

२० तूष्णीं वपामुत्खिद्य हृदयमुद्धरति ।।

२१ प्रज्ञातान्यवदानानि, प्रज्ञाता मतस्नू ।।

मतस्नू = पशोरवयव विशेषः, ।।२१।।

२२ तान्येतेष्वेव शूलेषूपनीक्ष्य एतस्मिन्नेवाग्नौ श्रपयन्ति ।।

२३ पृथङ्मासं चोदनं चापूपांश्च श्रपयन्ति । अन्याश्च विशेषान् ।। भक्ष्यविशेषान् ।। व्यञ्जनानिच प्रसाधयेदिति ।।

२४ तत्सर्वं सिद्धं समानीय क्षणं ग्राहयति ।।

२५ अथवा पितृभ्यः स्थालीपाकं श्रपयन्ति । यद्वा कार्यम् । "विज्ञायते च „ धेन्वा एवैतद्रेतो यदाज्यम्„ "अनडुहस्तण्डुलाः„ इति, गोरेवाङ्गसाम्यात् ।।

अथवेत्यादि सूत्रं वर्णितार्थम् ।। २५ ।।

२६ अयुग्मान् ब्राह्मणान सुप्रक्षालितपाणिपादान् अथ- आचमय्य, स्वयमाचम्य, संदर्भोपक्लप्तेषु आसनेषु द्वौ दैवे त्रीन् पित्र्ये, एकैकमुभयत्र वा प्राङ्मुखानुपवेशयति उदङ्मुखान् वा ।। अयुग्मानिति ।। सुप्रक्षालितेति अनेन पादप्रक्षाळन विधानं सूचितम् ।। प्राङ्मुखान् विश्वेदेवार्थम् ।। उदङ्मुखान् पित्रर्थम् ।। वा शब्दश्चार्थे ।। अथ आचम्येत्यनेन विप्राचमनं पूर्वमिति बोधायनमतं ज्ञायते ।। अत्र केचन विवदन्ते

तदबौधायनम् । पादप्रक्षाळने मण्डलादिकं कारिकातो ज्ञेयम् ॥२६॥

**२७ यदि प्राङ्मुखान् उदगपवर्गः । यद्युदङ्मुखान् प्रागपवर्गः।**

प्राङ्मुखान् विश्वेदेवान् ॥ उदङ्मुखान् पितृन् ॥ अत्र-यदि प्राङ्मुखान् दक्षिणापवर्गः इति पाठे पितृणां प्राङ्मुखोपवेशनमपि युक्तमिति वदन्ति ॥ २७ ॥

**२८ तेषामेवोदकं निनीय सप्रणवेन क्षणं ग्राहयति– "अष्टकाश्राद्धे क्षणः क्रियता ,, मिति ॥**

हस्ते इति शेषमापूर्य उदकं निनीयेत्यनेनान्वयः । आरम्भे क्षणग्राहणमेकम् । पुनरावाहनानन्तरं द्वितीयमिदम् ॥२८॥

**२९ " ॐ तथे ,, ति प्रतिवचनम् ॥**

**३० प्राप्नोतु भवान् प्राप्नोतु भवानि,, ति॥**

प्रतिविप्रं इतिशेषः ॥३०॥

**३१ " प्राप्नवानि, प्राप्नवानि इतीतरे प्रत्याहुः ॥**

**३२ अथैनान् तिलमिश्रा अपः प्रतिग्राहयति " अमुष्मै स्वधानमो ऽमुष्मै स्वधानम,, इति ॥**

अपः अर्घ्यपात्रस्थाः, एनान् विप्रान् प्रति, विप्रहस्ते ददातीत्यर्थः ॥ अर्घ्य पात्राणि विप्रसंख्यासमसख्याकानि ॥३२॥

**३३ त्रिस्तिलोदकमेके समामनन्ति ॥** त्रिरर्घ्यमित्यर्थः ॥

**३४ पुरोऽन्तं द्विस्तिलोदकं, भुक्तवत्सु तृतीयम् ॥**

पुरोन्तं = भोजनात्पूर्वं द्विः=द्विवारं । अर्चनादौ अर्चनान्ते । भोजनान्ते तृतीयमर्घ्यदानं इति पिण्डितोर्थः ॥

**३५ द्वौ विप्रौ वैश्वदेवौ समभ्यर्च्य अन्नत्यागं कृत्वा ।**

**३६ अथैनान् वस्त्रगन्धपुष्पधूपदीपमाल्यैर्यथोपपादं सम्पूज्य पृच्छति– " उद्ध्रियतेऽग्नौ च क्रियते,, इति ॥**

**३७ " काममुद्ध्रियतां ,, काममग्नौ च क्रियताम्,, इती**

तरे प्रत्याहुः।

३८ "अग्नौ करिष्यामि' इति, कुरुष्वेति इतरे ॥

३९ अथाभ्यनुज्ञातः– परिधानप्रभृत्याग्निमुखात्कृत्वा भृता-यां वपायां पञ्चस्त्रुवाहुतीर्जुहोति– "याः प्राचीरितिपञ्च।

पुनः अभ्यनुज्ञातः इत्यनेन वपाहोमात्पूर्वं विश्वेभ्यो देवेभ्यः आहुति-द्वयं तथा तैरभ्यनुज्ञानं च सूचितम् ॥ ३९॥

४० त्रेधा वपां विच्छिद्य, औदुम्बर्या दर्व्या द्विरुपस्तीर्य, सकृदवदाय, द्विरभिघार्य, प्रत्यज्य, पुरस्तात्स्त्रुवाहुतिं हुत्वा "सोमाय पितृमते शुष्मिणे ÷ इति प्रथमाम् ॥

४१ एवमेव द्वितीयां जुहोति– "अंगिरस्वन्तमूतये÷इति ॥

४२ एवं तृतीयां जुहोति – "यदग्ने कव्यवाहन ÷ इति ॥

विच्छिद्य विभज्य। अत्र स्थालीपाकपक्षे ऽन्नं त्रेधा विभज्य जुहुया-दिति ज्ञेयम् ॥ अत्र सर्वत्र उपस्तरणाभिघारणयोः द्विवारकथनात् पञ्चत्वसम्पत्तिः पैतृके त्रिरावत्तिनामपि इति ध्येयम् ॥ ४२॥

४३ अथाष्टकाहोमं जुहोति – "इयमेव सा या प्रथमा÷ इति पञ्चदशभिः। "ईयुष्टे ये पूर्वतरामपश्यन् ÷ इत्ये-काम् "संवत्सरस्य प्रतिमाणमेतम् ÷ इत्येकाम्। एताः सप्तदशाज्याहुतीर्हुत्वा ॥

४४ अपूपमष्टधा विभज्य, त्रीण्यवदानानि वपायाः कल्पेन हुत्वा, इतराणि ब्राह्मणेभ्यो दद्यात् ॥

वपायाः कल्पेन वपाहोमे इव अवदानधर्मेण सोमाय पितृमते ÷ इति त्रिभिर्मन्त्रैः हुत्वा ऽवशिष्टापूपभागान् ब्राह्मणेभ्यो निवेदयेत् ॥

४५ ओदनं मांसं पीयूषमित्याज्येन समुदायुत्य औदुम्ब-र्या दर्व्या उपघातं दक्षिणार्धे जुहोति, पुरस्ताच्चोपरिष्टाच्च हविषां स्त्रुवाहुती जुहोति ॥ –

पीयूषं = मुद्गखाजिकं, यवागूं वा । समुदायुत्य = सम्मिश्रच । उपघातं = विभज्य ।।४५।।

"पितृभ्यः स्वधानमः स्वाहा । पितामहेभ्यः स्वधा० । प्रपितामहेभ्यः ० । मातृभ्यः ० । पितामहीभ्यः ० । प्रपितामहीभ्यः ० । मातामहेभ्यः ० । मातुः पितामहेभ्यः० । मातुः प्रपितामहेभ्यः ० । मातामहीभ्यः ० । मातुः पितामहीभ्यः ० । मातुः प्रपितामहीभ्यः ० । आचार्येभ्यः ० । आचार्यपत्नीभ्यः ० । गुरुभ्यः ० । गुरुपत्नीभ्यः ० । सखिभ्यः ० । सखिपत्नीभ्यः ० । ज्ञातिभ्यः ० । ज्ञातिपत्नीभ्यः ० । अमात्येभ्यः ० । अमात्यपत्नीभ्यः ० । [1] अन्तेवासिभ्यः ० । अन्तेवासिपत्नीभ्यः ० । इति चतुर्विंशतीः ।।

आचार्यादयो द्वादश गणविशेषाः ।।४५।।

४६ अथा"ग्नये कव्यवाहनाय स्विष्टकृते स्वधानमः स्वाहा,, इति दक्षिणार्धपूर्वार्धे ।। पितृपात्रादयं स्विष्टकृत् ।। देवपात्रात्त्वाङ्गोऽन्यः ।। ४६ ।।

४७ मिन्दाद्वयं व्याहृतीश्च जुहुयात् ।।

४८ मांसोदनं पात्रेषु उद्धृत्य विशेषान्निक्षिप्य हुतशेषेण संसृज्य, भोजनस्थानेषु दक्षिणाग्रेषु दर्भेषु सादयित्वा । दक्षिणाग्रैः दर्भैः प्रतिच्छाद्य, [2] प्रोक्ष्य, पात्राणि परिषिञ्चति–

"ॐ भूः पृथिवीसमन्तस्य तेऽग्निरुपद्रष्टा ऋचस्ते महिमा÷ "भुवोन्तरिक्षसमन्तस्य ते वायुरुपश्रोता यजूंषि ते महिमा÷ "सुवर्द्यौः समन्तस्य ते आदित्योऽनुख्याता सामानि ते महिमा÷ "दत्तस्याप्रमादायों ,, इति सर्वत्र मन्त्रान्तान्

१ क. ज. ञ. ठ सर्वेभ्यः । सर्वेभ्यः । २ क. ग. घ. झ. गायत्र्या प्रोक्ष्य

**सन्नमथ्य त्रीण्यपि पात्राणि पृथक् पृथक् अपसव्यम् ॥**

त्रिरिति शेषः, तस्य परिषेचने ऽ न्वयः । पात्रेषु=दैव- पित्र्येषु भोजन पात्रेषु । उद्धृत्य = परिविष्य, विशेषान् = भक्ष्यादीन । हुतशेषेण स०सृज्य=सम्मिश्रच । सादयित्वा = स्थापयित्वा । दैवे तु परिषेचनं "सत्यन्त्वर्तेन परिषिञ्चामि,, इति मन्त्रेण सकृत् । प्रच्छादनमपि दैवे पूर्वोत्तराग्रैः । एकैकविप्रपक्षेतु एकमेव पात्रं पित्र्यं, उक्तमन्त्रत्रयेण त्रिः परिषेचनम् ।।

**४९ सव्यं जानुं भूमौ निपात्य पाणिभ्यां पात्रमभिमृशति– "पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्त्वा ऽऽ मुखे ऽ मृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्य-क्षितमसि मा पितृणां पितामहानां प्रपितामहानां नाम-गोत्र-रूपाणां क्षेष्ठा अमुत्रामुष्मिनल्लोके,, इति ॥**

सव्यं = वामं । दक्षिणमुद्धृत्येति स्वारसिकं । सर्वत्र पित्रर्चनेऽ-यं क्रमः ।। दैवे तु तद्विपरीत । दैवे तु – "पितृणा,, मित्यादि स्थानेषु " देवाना,, मित्यूहः । नाम - गोत्र - रूपाणां = अमु-कगोत्राणां वसु - रुद्र - आदित्यरूपाणामित्यर्थो विभज्य ज्ञेयः ॥४९॥

**५० अथ स्वाङ्गुष्ठेनानखेनान्नमनुदिशति[1]– " इदं विष्णुर्विचक्रमे,, ÷ इति ॥**

अनुदिशति = स्पृशतीत्यर्थः ॥५०॥

**५१ "विष्णो कव्यं रक्षस्व,, इति ॥ विप्रहस्ते जलं दत्वा ब्राह्मणानामङ्गुष्ठेनानखेनानुदिशति – सम्बन्ध - नाम– गोत्र –रूपाणि चतुर्थ्यन्तान्युक्त्वा "अमुष्मै स्वधा नमोऽ-मुष्मै स्वधानमः ,, इति ॥**

अनुदिशति = स्पर्शयति, अन्नमित्यार्थिकम् ॥५१॥

---

१ ज. ञ. अनुदिशति

५२ " एतद्वः सर्वꣳसपरिकरञ्च ,, इति विप्रहस्ते पुनर्जलं दत्वा, सम्बन्धनामगोत्रादि प्रथमान्तमुक्त्वा - "देवो देवता, इदमन्नं कव्यं ब्राह्मणस्त्वाऽऽहवनीयार्थे परिविष्टं परिवेक्ष्य माणं चाऽऽतृप्तेरेतत्सर्वं, इयं भूमिर्गया भोक्ता गदाधरः अन्नं च ब्रह्माऽहं च ब्रह्म भोक्ताच ब्रह्म सर्वं खल्विदं ब्रह्माक्षयवटच्छायेयं रजतमयपात्रस्थमन्नं पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधा कव्यं न मम गयायां श्रीरुद्रपादादिसमस्तपादेषु दत्तमस्तु ,, इति भूमौ पितृतीर्थेन जलं निनयेत् ।।

देवो देवता इत्यत्र पितरो देवता, पितामहो देवता इत्याद्यूह्यम् ।। दैवे तु पितृशब्दस्थाने विश्वेदेवनामोह्यम् ।। कव्यं स्थाने हव्यमिति च । भोजनपात्रस्येशानभागे पितृतीर्थेन जलं इत्यन्वयः ।। दैवेतु देवतीर्थेनेति ज्ञेयम् ।।५२।।

५३ [1] एवमेवेतरेभ्योऽन्नत्यागं कृत्वा प्राञ्जलिरुपतिष्ठते - " ये चेह पितरो येच नेह याꣳश्च विद्म याꣳउचन प्रविद्म । त्वंवेत्थ यदिते जातवेदः स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व ,, इति ।। विश्वेदेवस्थानेतु " ये देवा दिव्येकादशस्थ ÷ इति उपस्थानमन्त्रः ।५३।।

५४ त्रिप्राणमापोशनं दत्वा " देवताभ्यः पितृभ्यश्च ÷ इति पितृपञ्चकं जप्त्वा, ब्रह्मार्पणं कृत्वा गायत्रीं, मधुवाता ऋतायते - इति त्र्यृचं च जप्त्वा प्रत्येकं " तत्सदमृतं ,, इत्युक्त्वा पितॄन् स्मृत्वा ' अमृतोपस्तरणमसि इति प्राशयेत् ।।

(१)देवताभ्यः (२,पितृभ्यश्च (३)महायोगिभ्य एवच । (४)नमः स्वधायै(५)स्वाहायै नित्यमेव नमो नमः-इति पितृपञ्चकम् ।। विश्वेदेवाः ॐ तत्सदमृतं, पितरः ॐ तत्सदमृतं,, इत्येवं प्रत्येकम् ।।५४।।

५५ तेऽपि सव्येन पाणिना पात्रममुञ्चन्तो मौनं वाऽप्य-

---

१. क. ग झ. ठ. एवमादि सूत्रत्रयम् । नान्यत्र ।

**मौनं पङ्क्त्यां, धरणिं स्पृष्ट्वा पादेन वा, शब्दमकुर्वन्तो भुञ्जीयुः ॥**

सव्येन=वामेन। मौने विकल्पः व्यवस्थितविषयः - भोजनार्थमपेक्षितामेव वाचं ब्रूयुः नेतराम् इति ॥ ५५ ॥

**५६ अथ भुञ्जानान् समीक्षते - "श्रद्धायां प्राणे निविश्योऽमृतं जुहोमि। शिवो मा विशा प्रदाहाय। प्राणाय स्वाहा", इति पञ्चभिः पर्यायैः। "ब्रह्मणि म आत्माऽमृतत्वाय", इति षष्ठं प्रत्यात्मानम् ॥**

प्राणाद्याहुतिस्वीकारसमये विप्रान् पश्यन्-उक्तपञ्चमन्त्रान् जपेत् षष्ठाहुतिस्तु कारिकादौ दृश्यते। सूत्रे तु षष्ठं प्रत्यात्मानमित्युक्तं। ब्रह्मणि मेत्यादि मन्त्रपठनकाले यजमानः आत्मानं स्पृशेदिति तदर्थो लभ्यते। अत्रैवं व्यवस्था - "ब्रह्मणे स्वाहा", इति विप्रैः षष्ठाहुतिस्वीकारसमये यजमानः "ब्रह्मणिमे ÷ ति पठन् आत्मानं ब्रह्मरूपेण विभावयन् उरः स्पृशेत् इति ॥५६॥

**५७ न चात ऊर्ध्वं निरीक्षते - "ह्रीका हि पितरः", इति विज्ञायते ॥**

अ । ऊर्ध्वं=प्राणाहुत्यनन्तरं तान् न पश्येत्। तत्र निदानं "ह्रीका- इति ब्राह्मणवाक्येन दर्शितम्। अतो निरीक्षणे ते न सम्यग् भुञ्जीयुः। ततः कर्ता पापीयान् स्यात् ॥ ह्रीकाः= लज्जावन्तः ॥ ५७॥

**५८ सर्वैः कामैस्तर्पयन् परिश्रुते त्वेव दद्यात् ॥**

कृतान्नशाकपाकादिषु यथेच्छं तर्पयेत्। परिश्रुते = कृतपाके एव ॥ ५८ ॥

**५९ स्वधायुक्तानि ब्रह्माणि अभिश्रावयन्, राक्षोघ्नानि नैर्ऋतानि वैष्णवानि च तृप्तिपर्यन्तमन्नसूक्तानि च श्रावयेत्॥**

स्वधाशब्दयुक्तानि ब्रह्माणि = स्वधाशब्दयुक्तान् वेदान्। अन्नसूक्त

राक्षोघ्नाभिश्रवणादीनि उत्तरसूत्रैः वक्ष्यन्ते ॥ ५९ ॥

६० [1] अथान्नसूक्तानि–" ओदनवती । आब्रह्मन् ब्राह्मणो, आब्रह्मन् ब्राह्मणो – इति ब्रह्मणी अनुवाकौ । नमस्सह–मानायेत्यनुवाकं, कयानश्चित्र आभुवत् ÷ कस्त्वासत्यो मदानां ÷ इति ऋचौ । कि॰स्विदासीदित्यनुवाकं । तेजसा वा एषः ÷ इत्यनुवाकं । प्रजापतिर्देवेभ्यो यज्ञान् ÷ इत्यनुवाकं । प्रजापतिरकामयत ÷ इत्यनुवाकं । प्रजापतिः प्रजा-असृजत÷इत्यनुवाकं । अहमस्मि प्रथमजा ऋतस्येत्यष्टर्चं । अन्नाद्वै प्रजाः प्रजायन्ते ÷ इति त्रीननुवाकान् । अन्नं न निन्द्यात् ÷ इति चतुरोऽनुवाकान् । आज्यमसि ÷ इत्यान्तं एकां पठेत् ॥ नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह ॥

ओदनवती = ओदनशब्दवत्तात् तन्नामनि "ओदनमुद्रवते ÷ यन्तु नदयः ÷ इति यजुषी । आब्रह्मन्नित्यनुवाकयोः ब्रह्मेति नाम । ब्रह्मशब्दवत्वात् ॥ स्पष्टमन्यत् ॥ नमो ब्रह्मण - इति ऋचः परिधानीयेति नाम ॥ ६० ॥

६१ अथाभिश्रवणसूक्तानि –"नमो ब्रह्मण ÷ इति शान्तिः । सहवै देवानां ÷ रक्षा॰सि हवा ÷ इत्येतावनुवाकौ ॥ आप्रयद्दक्षिणादोत सव्यात्,, इतिवाक्यं । विष्णोर्नुकमिति षडृचं सूक्तं । कृणुष्वपाजः ÷ इति राक्षोघ्नमनुवाकं । येदेवाः पुरः सदः ÷ इत्यान्तमनुवाकं । स एतानपामार्गानजनयत् । रक्षोहणो वलगहनो, सोमाय पितृमते, उशन्तस्त्वा हवामहे, भक्षे ह्वि मा विशः ÷ इत्यनुवाकान् । नमः सुते निर्ऋते ÷ इति पंचर्चं । ध्रुवासि धरुणास्तृता, इयमेव सा या, छन्दश्चितं चिन्वीत, अग्न उदधे, त्वामग्ने वृषभं

---

१ इतः षट्सूत्राणि क. ग झ. ठ. पुस्तकेष्वेव ॥

चेकितानं, शिरो वा एतद्यज्ञस्य, असावादित्योऽस्मिल्लोके, इत्येताननुवाकान् । सन्ततिर्वा एते ग्रहाः, इन्द्रो वृत्र७हत्वा, पवमानः सुवर्जनः, वैश्वदेवेन वै प्रजापतिः, अग्नये देवेभ्यः, सुरावन्तं बर्हिषदं, उशन्तस्त्वा हवामहे, अयं वा व यः पवते, त७हैतमेके पशुबन्धे, यां प्रथमामिष्टकां, ऋचां प्राचीमहती,, इत्येताननुवाकान् ।।

पठेदितिशेषः ।।६१ ।।

६२ "मेधा देवी जुषमाणा ÷ "मेधाम्म इन्द्रो ÷ "अप्सरासु च या मेधा ÷ "आमां मेधा ÷ इति ऋचः । पञ्चब्रह्ममन्त्राः ।। सद्योजात - वामदेव - अघोर - तत्पुरुषेशानमन्त्राः पञ्चब्रह्म - मन्त्राः ।।६२ ।।

६३ ,,एकवि७श एषः ÷, अग्निर्वाव संवत्सरः ÷ इत्यनुवाकावपीत्यन्ये । महाव्याहृतीरप्यन्ये ।।

अन्येषां मतं । महाव्याहृतयः = भूरग्नय ÷ इत्यादि चतस्रश्च ।।६३।।

६४ पुरुषसूक्तं, सोमोत्पत्तिं, वार्षदर्भीं, इतिहासं, चरणव्यूहं चेति खिलपञ्चकम् ।।

पुरुषसूक्तं प्रसिद्धम् ।। सोमोत्पत्तिं = "प्रथमां पिबते वह्निः द्वितीयां पिबते रविः,, इत्यादिसन्दर्भं देव व्यास संवादात्मकं उपनिषत् ।। वार्षदर्भी = वृषदर्भमहाराजस्य कथां । सा महाभारतेऽरण्यपर्वणि प्रसिद्धा - पुराणान्तरे च । इतिहासं-भारतरामायणादि, पितृप्रसादेन मुक्तानां भारद्वाजानां कथा च ।। चरणव्यूहं प्रसिद्धं, एतानि पठेदिति शेषः । ६४ ।।

६५ एषां मध्ये यथासम्भवं, । पठेदिति शेषः ।। ६५।।

६६ "नमो ब्रह्मण-इति परिधानीयां त्रिरन्वाह ।।

६७ तृप्यन्ते-अन्नपात्रं जलपात्रं चादाय तृप्तान् परिपृच्छति - हविषां मध्येऽपेक्षितं याचध्व,, मिति ।।

६८ "निरपेक्षाः" इति प्रतिवचनम् ॥

६९ "तृप्ताः स्थ" इत्युक्ते "तृप्ताः स्मः" इतीतरे प्राहुः ॥

७० अथ प्राचीनावीती – "मधुवाता ऋतायते ÷ इति तिसृभिः "मधु मधु मधुसम्पन्नं इत्युक्ते "सुसम्पन्न" मिति ब्रूयुः ॥

७१ "अमृतापिधानमसि" इत्यपिधानीयं जलं दद्यात् ॥ तत्स्वाहेति प्राश्य, अर्धं पिबति गण्डूषं, पितृतीर्थेन अर्धं त्यजति भूतले ॥

अपिधानीयं = उत्तरापोशनार्थं जलं । तत् = जलं, स्वाहेति अर्धं पिबेत्, अर्धं पितृतीर्थेन भूमौ बलिदेशे त्यजेत् ॥ गण्डूषपदं उत्तरापोशनमेव वक्ति ॥ ७१॥

७२ हस्तप्रक्षाळनार्थं चषकाणि दत्वा पात्रान्तरे क्षिप्तापां द्वादशगण्डूषैः विदध्यान्मुखशोधनम् ॥

चषकाणि = विस्तृतपात्राणि दत्वा, तत्र पात्रान्तरेण क्षिप्तानां अपां गण्डूषैः द्वादशवारं मुखशोधनं कुर्युः ॥ ७२ ॥

७३ हस्तपादान् प्रक्षाळ्य, द्विर्द्विराचमय्य, हस्तशुद्धिं तिलोदकमर्घ्यं, दक्षिणाग्रेषु दर्भेषु आशयेषु उच्छिष्ट पिण्डान् दत्वा अन्नशेषांश्च संप्रकिरन्ति ॥

हस्तपादानिति, द्वन्द्वैकवद्भावस्यानित्यत्वात् नैकवत्वम् ॥ प्रक्षाळ्य = क्षालयित्वा, णिजर्थगर्भम ॥ अर्घ्यं, हस्तेषु इदं तृतीयं तिलोदकम् । आशयेषु = आसनरूपेषु । उच्छिष्टनामकपिण्डान् च दत्वा, १ "येऽग्नि दग्धाः कुले जाता येऽनग्निदग्धाः कुले मम । भूमौ दत्तेन पिण्डेन तृप्ता यान्तु परां गतिम्" इति मन्त्रेण । अन्नशेषान् = पिण्डकरणानन्तरमवशिष्टान् सम्प्रकिरन्ति, प्रागपवर्गानिति शेषः ।

१ ग. च ठ. पुस्तकेषु मूले एवेमौ मन्त्रौ पठितौ ॥

" असंस्कृतप्रमीता ये त्यागिन्यो याः कुले स्त्रियः । दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ,, इति तत्र मन्त्रः ॥ ७३ ॥

७४ पुनस्तिलोदकं दत्वा, अथैनान् संक्षाळनेन निषिञ्चन् " ऊर्जस्वतीः स्वधया वन्दमानास्तान्ते स्योनाः स्रवन्तीः । ऊर्जं वहन्तीः स्वधमादमक्षितं क्षीरममृतं घृतं दधि मधु पयः,, इति अप्रदक्षिणं उच्छिष्टभाग्भ्यो जलमिश्रममृतं ददाति ॥

संक्षाळनेन उच्छिष्टपिण्डपात्रक्षाळनजलेन । अमृतं पञ्चामृतम् ॥७४॥

७५ " अतीतकुलकोटीनां सप्तद्वीपनिवासिनां । [१] प्राणिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ,, " ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मया दत्तं पञ्चामृततिलोदकम् ,, इति च ॥

अतीतेत्यादि मंत्रस्तु उच्छिष्टपिण्टदानार्थं प्रसारितेषु दर्भेषु तिलोदकदाने प्रायोगिकैरुपयुज्यते ॥ ये के चास्मदिति मन्त्रस्तु पञ्चामृतसेचने पिण्डेषु उपयुक्तः ॥७५॥

७६ हस्तौ प्रक्षाळ्याचम्य पवित्रपाणिः "स्वस्ति ,, "स्वदितं इति च वाचयित्वा दक्षिणाभिराराधयति ॥

७७ सुवर्णहिरण्यमणिजैः, वस्त्र – गेह – भूमि – भाण्डैः, गवाश्वाजाविकहस्तिदासपुरुषैः , व्रीहियव माष तिलैः, दण्डोपानहछत्रकमण्डलुयानासनशयनोपधानैः , सर्वोपस्करणैः , यथोपपादं सम्पूज्य , अक्षय्यं वाचयित्वा , अभिवाद्योपसंगृह्य , पात्राणि चालयित्वा , स्वधां वाचयित्वा – " उत्तिष्ठत पितरः ÷ , परेतपितरः ÷ , इति द्वाभ्यामुत्थापयेत् ॥

सुवर्णादि दक्षिणादानं यथोपपादं = यथानुकूलं कुर्यात् ॥ तत्र विभवसत्वासत्वादिकं व्यवस्थाकारणम् ॥ कालदेशादिकं च ॥ पात्राणि

१ च. झ. अर्थिनां ।

= भोजनपात्राणि । स्वधां = पितृतृप्तिकरीं वाचम् ।। पितृ पदं षष्ठयन्तमुक्त्वा "अक्षय्यमस्त्विति भवन्तो ब्रुवन्तु, इति प्रश्नः, "अस्तु अक्षय्यम्,, इति प्रतिवचनं च ज्ञेयम् ।। अत्र क्रमो न विवक्षितः । उत्थापयति - इति ,, विसर्जनमनेनोक्तम् । अत्रापि नायं क्रमो विवक्षितः । ब्राह्मणानुज्ञयैव पिण्डप्रदानस्य विवक्ष्यमाणत्वेन तत्पुरत एव तस्य विहितत्वात् ।। विप्रार्चनप्रसङ्गात् आवाहनमारभ्य विसर्जनपर्यन्तमुक्तमिति ध्येयम् ।। ७७ ।।

**७८ तान् प्रसादयेत् । ते तु " वाजे वाजेऽवत ÷,, इत्युत्तिष्ठन्ति ।।**

प्रसादयेत् -सन्तोषयेत् , तेन तेऽनुग्रहं कुर्युः ।। "देवस्य सन्तोषकालीना प्रार्थना प्रार्थयितुरभीष्टघटना पटीयसी ,, इति सम्प्रदायः ।। ७८ ।।

**७९ तान् मनसा प्रापयति , तान् संसादयेत् ।।**

तान् = पितॄन् । मनसा प्रापयति = पितृलोकं गमयति । संसादयेत् = तत्र गतान् भावयेत् ।। ७९ ।।

**८० " मनोन्वाहुवामहे ÷ , " आन एतु मनः पुनः ÷, " पुनर्नःपितरो मनो ददातु ÷ इति तिसृभिर्मन आह्वयते ।।**

पितृप्रेषणार्थं गतं मनः स्वस्थानं प्रत्याह्वयते इति यावत् ।। ८० ।।

**८१ आमा वाजस्य प्रसवः ÷ इत्यादिना तान् प्रदक्षिणीकृत्य वरान् याचयते -**

**,, दातारो नोऽभिवर्धन्तां वेदासन्ततिरेव नः ।**
**श्रद्धा च नो माव्यगमत् बहुदेयं च नोऽस्तु ।।**
**अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।**
**याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ।। इति ।।**

तान् = विप्रान् । वरान् याचयेत् । वरपदार्थः श्लोकाभ्यां दर्शितः । वेदा = वेदवती ' अर्शआद्यच् सन्ततिः इत्यन्वयः ।। ८१ ।।

**८२ ' नः' पदे ' वः" पदं क्षिप्त्वा तावेव ते पठेयुः ।।**

प्रार्थनश्लोकावेव " नः ,, स्थाने " वः ,, इत्युक्त्वाऽऽशीर्वदेयुः ॥८२॥

८३ " ब्राह्मणासः पितरः ,, ÷ इति ऋचं , " वसवस्त्वा-रुद्रैः ÷ इत्यान्तमनुवाकं , येन देवा ज्योतिषोर्ध्वा ÷ इति-ऋचं अन्याश्चाशीर्मन्त्रान् पठेयुः ॥

अत्रापि क्रमो न विवक्षितः । पित्रुद्वासनात्प्रागेवाशीर्वचनस्य सिद्ध-त्वात् ॥ ८३ ॥

८४ अथान्नशेषमनुज्ञाप्य , यथा ब्रूयुस्तथा कुर्यात् ॥

अनुज्ञाप्य = भोजनार्थमाज्ञां स्वीकृत्य , विप्राणामिति शेषः ॥ ते यथा ब्रूयुः , तथैव कुर्यात् , नान्यथा ॥ ८४ ॥

८५ तैस्त्वभ्यनुज्ञेयम् । यथा "इष्टैः सह भुज्यता,, मिति ॥

तैस्तु अभ्यनुज्ञा देयैवेति विधिः । तेऽपि नान्यथा ब्रूयुरित्यर्थः ॥ तद्वच-नमेवाकारतो दर्शितम् इष्टैरिति ॥ ८५ ॥

८६ अथाभ्यनुज्ञातः दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् सं-स्तीर्य " मार्जयन्तां पितरः ,, इत्यादि चतुर्विंशति नामभिः तिलोदकं दत्वा तेषु अन्नशेषैः पिण्डान् ददाति— पितृभ्योऽयं पिण्डः स्वधानमः इत्यादिचतुर्थ्यन्तैः चतुर्विंशति नामभिः पिण्डान् दत्वा , पुनस्तिलोदकम् ॥

प्रकरणान्तरद्योतनाय 'अथ' शब्दः—प्रसंगागतं विप्रार्चनं समाप्य विप्र-विसर्जनात्पूर्वमेव विवक्षितं पिण्डदानादि प्रक्रमते ॥ अभ्यनुज्ञातः विप्रैः इत्यार्थिकम् ॥ चतुर्विंशति नामानि अवदानप्रकरणे कथितानि ॥ ८६ ॥

८७ पिण्डदानात्पूर्वं " यन्मे माता ÷ इत्यादित्रिभिर्मन्त्रैः अवदानधर्मेण चरुशेषैः तिस्र आहुतीर्जुहुयात् ॥

पिण्डदानात्पूर्वमित्यनेन मण्डले दर्भास्तरणानन्तरं तान् प्रच्छाद्य इमा आहुतयः कार्या इति गम्यते ॥ ८७ ॥

८८ अथ भूमौ हस्तलेपं निमार्ष्टि —

" येनः पतिता गर्भा असृग्भाज उपासते ।
तेभ्यः स्वजा स्वधानमस्तृप्णुवन्तु मदन्तु च ,,
" य आमा ये पक्वा ये च दुष्टाः पतन्ति नः ।
तेभ्यः स्वजा स्वधानमस्तृप्णुवन्तु मदन्तु च ,,
ये कुमारा याःस्त्रियो येऽविज्ञाताः पतन्ति नः ।
तेभ्यः स्वजा स्वधानमस्तृप्णुवन्तु मदन्तु च ,, इतितिसृभिः ॥

हस्तलेपं=पिण्ड करणसमये हस्ते लिप्तोंऽशः, तं ॥ ८८ ॥

८९ उपवीती आचामेत् ॥

उपवीतीत्यनेन पूर्वं प्राचीनावीतमुक्तमिव ॥ ८९ ॥

९० प्राचीनावीती अञ्जनाभ्यञ्जनवासांसि पिण्डेषु ददाति– " अञ्जन्तां पितरः , इत्येवमञ्जनम् ॥
" अभ्यञ्जन्तां पितरः,, इत्येवमभ्यञ्जनम् ॥
" १ इमानि वःपितरो वासा॑ॅसि,, इत्येवं वासा॑ॅसि ॥
इति ॥

अञ्जन्तां=इतिसौत्रोधातुः । सामवेदेच प्रसिध्दः– ॥ अतो न पाणिनिव्याकरणविरोधः शङ्क्यः ॥ ९० ॥

९१ अथ यदि कर्ता अष्टमासाधिकषट्षष्टिवयाः, तेनात्मनः उरोलोमानि पिण्डेषु क्षेप्याणि । तेन पितरः प्रीणन्ति – इति विज्ञायते ॥

विशेषेण प्रीणन्तीति श्रुतेरर्थः ॥ ९१ ॥

९२ अथोपवीती चतुर्थ्यन्तैःनमोन्तैः तैरेव नामभिः गन्ध-पुष्प-धूप-दीप-नैवेद्यैः – " अमुष्मै नमोऽमुष्मै नम ,, इत्यभ्यर्च्य , ताम्बूलनीराजनादिभिरुपचर्य , षड्भिः नमस्कारैः विपर्यासमुपतिष्ठते – ॥

पार्वणपूजां विधत्ते – अथेति तैरेव = पित्रादि चतुर्विंशतिभिः ।

---

१ ख. ग. ठ. एतानि ॥

पितृभ्यो नमः गन्धान् समर्पयामि „ इत्येवं मन्त्राः ॥ विपर्यासं यथा तथा = नमस्कारपूर्वकमुपस्थानं विपर्यासः ॥

" नमो वः पितरो रसाय ÷ इत्यादिषड्भिः । " पितरो नमो वोय एतस्मिन्ल्लोकेस्थ युष्मा॰स्तेऽनु येऽस्मिंल्लोके मान्तेऽनुय एतस्मिंल्लोकेस्थ यूर तेषां वसिष्ठा भूयास्त येऽस्मिल्लोकेऽहं तेषां वसिष्ठो भूयासं „ इति सर्वास्वनुपजति ॥

"नमो वः „ पदोच्चारसमये उपवीती नमस्कुर्यात् । "पितरो ÷ इत्याद्युच्चारणसमये प्राचीनावीती उपतिष्ठेत-इति सम्प्रदायः ॥

„ वसिष्ठः समानानां भवति य एवं विद्वान् पितृभ्यः करोति" इति ब्राह्मणम् ॥

एवं उपस्थानप्रकारं विदित्वा पितृभ्यः नमस्करोति , स समानेषु वरिष्ठो भवति, इति ब्राह्मणवाक्यमर्थवादः प्राशस्त्यबोधकः ॥ ९२ ॥

९३ अथ वीरं याचते - " वीरं मे - पितरो दत्त , पितामहादत्त , प्रपितामहादत्त , इति । " पितृमानहंयुष्माभिर्भूयास॰ सुप्रजसो मया यूयं भूयास्त " इति सर्वास्वनुपजति ॥

वीरं = सत्पुत्रं, सद्भृत्यगणं च ॥ ९३ ॥

९४ अथैनान् संक्षाळनेनाभिषिञ्चति - „ ये समानाः समनसः ÷ " ये सजाताः समनसः ÷ इतिद्वाभ्याम् ॥

प्राचीनावीती एनान् = पिण्डान् । संक्षाळनेन = पिण्डपात्रक्षालन जलेन ॥

" ये बर्हिषि पिण्डाः तेषां तथैव संक्षाळनेन त्रिरपसलैः परिषिञ्चति ॥

पूर्वोक्तमेव विवृण्वते - अपसलैः = अप्रदक्षिणं त्रिवारं इति परिषेचने क्रमः ॥ ९४ ॥

एवं संक्षाळनाभिषेचनापूर्वं सप्तसप्ततितम (७७) सूत्रोक्तं स्वधावाचनमपि कार्यम् ।। तेन पितरःप्रीणन्ति ।।

**९५ अथ पञ्चामृतेन तिलोदकसंक्षाळनमिश्रितेन त्रिरपसलैः पिण्डान् परिषिञ्चति – " ऊर्जं वहन्तीरमृतं घृतं दधि मधु पयः कीलालं परिस्रुतं॰ स्वधास्थ तर्पयत मे पितॄन् तृप्यत तृप्यत तृप्यत ,, इति ।।**

**९६ पिण्डानुद्वास्य भूशुद्धिं कृत्वा (तत्र) " स्वस्ती ,, त्यक्षतान् क्षिपेत् ।।**

तत्र भूमौ अक्षतान् क्षिपेत् , तेन भूमौ पिण्डदानकृतापराधक्षमापणं मन्यन्ते ।। ९६ ।।

**९७ स्विष्टकृत्प्रभृति सिद्धमाधेनु वरप्रदानात् ।।**

इदमत्रबोध्यं – अग्नौ करणं ब्राह्मणभोजनं , पिण्डप्रदानं – इत्येतत्त्रयं श्राद्धे प्रधानं मन्यन्ते आचार्याः ।। अत एव तेषां पृथक् पृथक् कथनं , तेष्वभिनिवेशश्च ।। ९७ ।।

**९८ श्वो भूते तिलैस्तर्पयेत् ।।**

श्वो भूते = परेहनि ।। " परेद्युः श्राद्धकृन्मर्त्यः यो न तर्पयते पितॄन् । अतृप्ताः पितरः सर्वे शापं दत्वा व्रजन्ति हि ,, इति साम्प्रदायिकाः ।। ९८ ।।

**९९ आचमनेऽग्निमुखे ब्राह्मणभोजनेऽभिश्रवण उपसंग्रहणे पश्चाद्धोमे चोपवीतं ' अन्यत्र प्राचीनावीतम् ।।**

उपसंग्रहणे = विप्रपादाभिवन्दने । पश्चाद्धोमे = यन्मे माता ÷ इत्यादि शिष्टचरुहोमे ।। चकारेण दैवे सर्वत्रेति ज्ञाप्यते ।। ९९ ।।

**१०० एवमेव श्वो भूते मांसशेषेण , एवमेव परश्वो भूते ' यदि त्र्यहम् ।।**

मांसशेषेण श्राद्धं कुर्यात् , सप्तमी अष्टमी नवमीषु अष्टकात्रयं यदिकुर्वन्ति ।। १०० ।।

इदानीं विकल्पमुपक्रमते –

१०१ यदि गां नालभते मेषमजं वाऽऽलभते ।।

१०२ आरण्यकेन वा मांसेन यथोपपन्नेन ।।

१०३ खड्गमृग महिष मेष वराह पृषत शश रोहित शङ्ग, तित्तिरि कपोत कपिञ्जल वाध्रीणसानां अक्षय्यं तिलमधुघृतसंसृष्टेन ।।

खड्गादयो मृगाः । तित्तिरिप्रभृतयः पक्षिणः ।। तेषां मांसेन अक्षय्या तृप्तिः पितॄणाम् ।। १०३ ।।

१०४ तथा मत्स्यस्य शतबलैः ।।

मत्स्यस्य मांसेन तत्रापि शतबलैः= तदारण्यैर्मत्स्यैः । तृप्तिविशेषः ।। १०४ ।।

१०५ स्थालीपाकचरुणावा ।। इदं विवृतपूर्वम् ।। १०५ ।।

१०६ क्षीरोदनेन वा सूपोदनेन वा ।। १०६ ।।

( ३० इतरे श्राद्धभेदाः )

अष्टकाश्राद्धप्रसंगेन श्राद्धान्तराणि प्रस्तौति -

१०७ यद्वा भवत्यामैः ।। मूलफलैर्वा प्रदानमात्रम् ।। अपि हिरण्येन ।। प्रदानमात्रमिति त्रिष्वप्यन्वेति ।। आमैः = अपक्वैः तण्डुलादिभिः मूलफलादिभिर्वा । दानेनैव श्राद्धसम्पत्तिः ।। इदमामश्राद्ध हिरण्यश्राद्धं च ।। १०७ ।।

१०८ अपि वा गोग्रासमाहरेत् ।।

इदमपि श्राद्धम् ।। एवमुत्तरत्र ।। १०८ ।।

१०९ अथवा अनूचानेभ्य उदकुम्भानाहरेत् ।।

१२० अपि वा श्राद्धमन्त्रानधीयीत ।।

श्राद्धमन्त्राध्ययनमपि - श्राद्धविशेष एव " यं यं क्रतुमधीते तेन तेनास्येष्टं भवति,, इति श्रुतिः। उक्तं च सायणचार्यैः -" अस्ति हि अनुष्ठातुमशक्तस्य सर्वत्र भावनया तत्पूर्तिः ,, ( तै. सं. १. १. ३. ) इति ।। अशक्तिश्च व्यवस्थिता ।नत्वालस्यम् ।। ११० ।।

१११ अपिवाऽऽरण्येनाग्निना कक्षमुपोषेत् ।।

कक्षं = तृणराशिं । उपोषेत् = दहेत् । यथाऽन्येषामुपरोधोमाभूत् ॥ १११ ॥

**११२ एषामेकाष्टकेति, नत्वेवानष्टकः स्यात् ॥**

एषां = द्वादशाष्टकानां मध्येऽशक्तेनैका वाऽष्टका कार्या । नतु सर्वथा लोपयेत् ॥ ११२ ॥

**( ३१ श्राद्धे पवित्राणि )**

श्राद्धप्रसंगेन तत्र पवित्राणि द्रव्याण्याह– सिकता इति ॥

**११३ सिकताः श्राद्धे पवित्राणि, यद्यध्यवसानाय यद्यन्ववकीर्णाय ॥**

सिकताः स्थण्डिले प्रसारणाय, आसनेषु – भोजनपात्रेषु च विकिरणाय च । यदिशब्दश्चार्थे ॥ ११३ ॥

**११४ कुशाः श्राद्धे पवित्राणि, यद्यासनाय, यदिपरिस्तरणाय, यद्युत्पवनाय ॥**

पवित्राणीति सामान्ये नपुंसकम् ॥ एवं पूर्वोत्तरत्र ॥ आसनाद्युपलक्षकं पवित्रकूर्चादिषु ॥ ११४ ॥

**११५ कुतपो दूर्वा भृङ्गराज इति श्राद्धे पवित्राणि । कुतप आरम्भाय, दूर्वा भृङ्गराजश्चार्चनायै ॥**

कुतपः = दिवाप्रमाणे पञ्चदशधाविभक्तेऽष्टमोभागः ॥ ११५ ॥

**११६ तिलाः श्राद्धे पवित्राणि, यदि दानाय, यदिभोजनाय, यद्यपां संसर्जनाय ॥**

तिलदानं, तिलभक्ष्यं, तिलोदकं च श्राद्धे पवित्राणीति यावत् ॥ ११६ ॥

**११७ खड्गः श्राद्धे पवित्रं, यदिमांसं, यद्यस्थिमयं पात्रम् ॥**

खड्गः मृगविशेषः । तन्मांसं, तदस्थिमयपात्रंचश्राद्धे श्रेष्ठम् ॥ ११७ ॥

**११८ दौहित्रः श्राद्धे पवित्रं, यदिभोक्ता, यदिपरिवेष्टा, यद्यभिश्रावयिता ॥**

दौहित्रः = दुहितुः पुत्रः । स च मातामह कर्तृकश्राद्धेभोक्ता, पात्रे

अन्नादिपरिवेष्टा , विप्रभोजन समये अन्नसूक्तादि अभिश्रावयिता = श्रावयितेत्यर्थः ।। ननु मातामहोद्देश्यक श्राद्धे , प्रक्रमवैगुण्यप्रसङ्गात् । पवित्रेषु सर्वत्र कर्तुरेवान्वयस्वारस्यात् ।। ११८ ।।

**११९ इत्यष्टका होमोव्याख्यातः ।।**

उपक्रान्ताष्टकाहोममुपसंहरन्त आहुः - इतीति ।। ११९ ।।

**( ३२ सांवत्सरिकादिषु अष्टकाधर्मातिदेशः )**

**१२० एवमेव प्रतिसंवत्सरश्राद्धं , मासिश्राद्धं , अपरपक्षस्यान्यतमेऽहनि क्रियेत ।।**

इदानीं अष्टकाश्राद्धोक्तधर्मान् प्रतिसांवत्सरिकादिषु अतिदिशति - एवमेवेति ।। अतिदेशोनाम - अन्यत्रोक्तानामन्यत्र करणविधानम् ।। अनेनाष्टकाहोमः सर्वश्राद्धकल्पानां प्रकृतिरित्युक्तं भवति ।। संवत्सरे संवत्सरे मृततिथौ मातापित्राद्यर्थे क्रियमाणं श्राद्धं प्रतिसांवत्सरिकम् ।। मासि श्राद्धं = अनु मासिकं , पित्रादिमरणोत्तरं वर्षमध्ये क्रियमाणं उत्तमषोडशरूपम् । अपरपक्षो महालयपक्षः । तत्र अन्यतमेऽह्नि कर्तव्यं सकृन्महालयश्राद्धं ।। इदंचोपलक्षणं अपरपक्षे प्रत्यहं क्रियमाणानां सर्वेषामपि ।। मासिश्राद्धपदेन - युगादि मन्वादि दर्शव्यतीपात वैधृति प्रभृति श्राद्धान्युपलक्षितानि ।। तत्र तत्र ये ये विशेषाः, तत्तत्कल्पेषु वक्ष्यन्ते ।। १२० ।।

**१२१ एतावदेव नाना , नात्राष्टका होमो भवति ।।**

उक्तश्राद्धेषु अष्टकाहोमः " इयमेव सा या ÷ इत्यादिमन्त्रैः सप्तदशाज्याहुतयो न सन्ति ।। सर्वमन्यत्समानम् ।। १२१ ।।

**१२२ इमाः सप्त पाकयज्ञसंस्था व्याख्याताः ।।**

ग्रंथादौ प्रतिज्ञातमुपसंहरन्ति - इमा इति ।। व्याख्याताः - निरूपिताः , प्रसंगागताश्चान्ये ।। १२२ ।।

इति श्री सूर्थुपोह्वेण। रामचन्द्रशास्त्रिणा विरचितायां सूत्रसञ्जीविन्यां द्वितीयः प्रश्नः समाप्तः ।।

**इति बोधायन गृह्यसूत्रे द्वितीयप्रश्ने द्वाविंशः खण्डः**

**द्वितीयः प्रश्नः समाप्तः ।।**

* अथ तृतीयः प्रश्नः * । प्रथमः खण्डः

१ (उपाकर्म तत्कालनिर्णयश्च)

१ अथ हुतानुकृतिरुपाकर्म ॥

एवं हुतादि सप्तपाकयज्ञान् निरूप्य, तेषामनुकृतीः क्रमेण निरूपयन्ति – अथेत्यादिना ॥ अनुकृतिः = अनुकरणं। अतिदेश इति मीमांसायाम् हुतादिधर्माणां होम – होम बलि – होम बलि प्राशनादीनां अत्र दर्शनात् – तत्तदनुकरणं इति ॥ प्रकृतेहुतस्य होमरूपो धर्मः अत्रोपाकर्मणि अनुक्रियते इतियावत् ॥ अतो हुतानुकृतिः उपाकर्म । एवं उत्तरत्रापि ज्ञेयम् ॥ १ ॥

२ श्रावण्यां पौर्णमास्यां क्रियेताऽपिवाऽऽषाढ्याम् ॥

श्रावणाऽऽषाढयोः पौर्णमासी उपाकर्मणि मुख्यः कालः । श्रावण्यां ग्रहणसंक्रमणादिसम्भवे आषाढ्यां कुर्वीतेतिदर्शयितुं अपिवेत्युक्तम् ॥ २ ॥

३ अथाप्युदाहरन्ति –

" पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रावणे कुर्युः हस्तर्क्षे सामवेदिनः ॥ २ ॥

तैत्तिरीयकाः = तैत्तिरीयशाखाध्यायिनः, बौधायना अपि ते एव । तैत्तिरीयकत्वं आपस्तम्बादिसाधारणं व्यापकम् । औदयिके पर्वणि = उदयमारभ्य सङ्गवकाल व्याप्तिमत्यांपूर्णिमायां ॥ " श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि । तदैवौदयिकीग्राह्या नान्यदौदयिकीं विदुः ,, " परेह्नि सङ्गवादूर्ध्वं पूर्णिमा श्रावणे यदि । सङ्गवस्पर्शिनी वाऽपि हीना पूर्वाशुभावहा ,, इति गार्ग्य – निगमादिवचनैः औदयिकत्वस्य व्यवस्थापनात् ॥ तथाच सङ्गवकालादूर्ध्वं किञ्चिदधिकव्याप्तिमती प्रथमा, सङ्गवस्पर्शिनी अनुकल्पा इति व्यवस्था ज्ञेया ॥

' गुरौ शुक्रेऽथवा मूढे राष्ट्रक्षोभे मलिम्लुचे ।
उपाकर्म न कुर्वीत कर्कटस्थे दिवाकरे ॥ २ ॥
एतदारम्भविषयं गृहस्थानां नचैव तु ।
श्रावणस्य तु नित्यत्वात् नैव नित्यानि लोपयेत् ॥ ३ ॥

गुरौ अथवा शुक्रे मूढे = अस्ते। मलिम्लुचे = अधिकमासे सति। एतत् आरम्भविषयं = प्रथमोपाकृतिपरम्॥ नतु गृहस्थोपाकर्मपरम्। गृहस्थेति, द्वितीयाद्युपाकर्म परम्। उपाकर्म श्रावणे नित्यं न लोपयेत्॥ कर्कटस्थे इति नर्मदोत्तदेशविषयः। "नर्मदोत्तरभागेतु कर्तव्यं सिंहयुक्तके। कर्कटे संस्थिते भानौ उपाकुर्यात्तु दक्षिणे,, इति गुरुस्मृतौ व्यवस्थापनात्॥ ३॥

४ समारब्धेष्वन्तेवासिषु ब्राह्मणानन्नेन परिविष्य पुण्याहं - स्वस्ति ऋद्धिमिति वाचयित्वा॥

अनेनाचार्योऽन्ते वासिभिः सहेदं विशाल भूमौ कुर्यादिति ज्ञायते। किञ्च बहुषु मिलितेषु उपाकर्म होम एक एवेत्यपि ज्ञेयम्॥ ४॥

५ अथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा, प्राजापत्यादि काण्डर्षीनभ्यर्च्य, आज्यस७ंस्काराद्यग्निमुखान्तं कृत्वा सावित्र्या पत्वाज्जुहोति -

प्रणीता प्रणयनानन्तरं निवीतिनः काण्डर्षीन् पूजयेयुः। ते च प्रजापतिः, सोमः ' अग्निः ' विश्वेदेवाः, स्वयंभूरिति पञ्चकाण्डर्षयः॥ अग्नेः पूर्वभागे तेषां पूजनम्॥ ५॥

६ अथ चतस्र आज्याहुतीरुपजुहोति - "याज्ञिकीभ्यो देवताभ्यः स्वाहा, सा७ंहितीभ्यो देवताभ्यः स्वाहा, वारुणीभ्यो देवताभ्यः स्वाहा, सर्वाभ्यो देवताभ्यः स्वाहा इति॥

७ अथ काण्डर्षिभ्यो जुहोति ÷ " प्रजापतये काण्डऋषये स्वाहा। सोमाय काण्डऋषये०। अग्नये काण्डऋषये०। विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः०। स्वयम्भुवे काण्डऋषये०। इति॥

जुहोति, आज्याहुतीरित्यनुवर्तते। एवमुत्तरत्रापि॥ ७॥

८ अथ सदसस्पतिं जुहोति - "सदसस्पतिमद्भुतं ÷ इति॥

९ अथ सावित्रीं जुहोति - "तत्सवितुः ÷ इति॥

१० अथ वेदाहुतीर्जुहोति - "अग्निमीळे ÷ इति ऋग्वेदस्य । " इषेत्वोर्जेत्वा ÷ इति यजुर्वेदस्य । " अग्न आयाहि ÷ इति सामवेदस्य । " शन्नोदेवीः ÷ इति अथर्व वेदस्य ॥ "ऋचोयजूँषि सामानि । अथर्वाङ्गिरसश्चये - इत्यथर्वाङ्गिरसः । " इतिहासपुराणानि । सर्पदेवजनाश्चये - इतीतिहासपुराणानां, सर्पदेवजनानां च । " ये च लोका ये चालोकाः । अन्तर्भूतं प्रतिष्ठितं - इतिसर्वभूतानाम् । एवमेव सर्वव्रतेषु जुहुयात् ॥ यद्वा नाममन्त्रैः - ऋग्वेदाय स्वाहा । यजुर्वेदाय० । सामवेदाय० । अथर्ववेदाय० । अथर्वाङ्गिरोभ्यः० । इतिहासपुराणेभ्यः० । सर्पदेवजनेभ्यः० । सर्वभूतेभ्यः स्वाहा,, इति ॥

एवमेकोनविंशत्याज्याहुतीः कुर्यात् ॥ १० ॥

११ अथावदानधर्मेण यज्ञोपवीतं जुहोति - " यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्चशुभ्रं यज्ञोपवीतं बलमस्तु तेजः स्वाहा इति ॥

अवदानधर्मः शेषे वक्ष्यते ॥ ११ ॥

१२ अथ गुरुभ्यो यज्ञोपवीतं दत्वा, पितृभ्यो ब्राह्मणेभ्यश्च दत्वा, स्वयं च धारयेत् ॥

१३ यदि ब्रह्मचारी " मौञ्जी दण्डोपवीतानि वासः कृष्णाजिनं तथा । पूर्वोक्तयुक्तान्युत्सृत्य धारयेच्च व्रते व्रते ॥ इति ॥ अयं ब्रह्मचारिणां नियमः । गृहस्थानान्तु दण्डाद्यभावात् उपवीतवाससोरेव नियमान्वयः ॥ १३ ॥

१४ अथाऽऽचम्य ब्रह्मयज्ञधर्मेण " विद्युदसि ÷ , इत्युपस्पृश्य , ब्रह्मयज्ञाङ्गमाचमनं कृत्वोपस्थं कृत्वा - " तत्सवितुः वरेण्यं - इति पच्छोऽर्धर्चशोऽनवानमुक्त्वा वेदादीन्

जपति ॥

ब्रह्मयज्ञधर्मः सहवै प्रश्ने प्रसिद्धः। ब्रह्मयज्ञाङ्गं त्रिराचमनं। उपस्थं = मुद्राविशेषः, आसन विशेष इति सायणः ॥ " आकुञ्चितस्य सव्यजानुन उपरि दक्षिण पादप्रक्षेपे सति यत् सुखावस्थानं भवति तादृशं तत्,, इति सा० भाष्यम्। अत्र विशेषस्तत्रैव द्रष्टव्यः॥ १४ ॥

१५ त्रीनादितोऽनुवाकान् अधीयीरन्। काण्डादीन् वा सर्वान् " इषेत्वा ÷, आप उन्दन्तु ÷ उद्धन्यमानं ÷, अनुमत्यै ÷ संज्ञानं विज्ञानं ÷,, इति ॥

आदितः = संहितारम्भे। त्रीन् = इषेत्वा ÷ यज्ञस्य ÷ शुन्दध्वं,, इति ॥ वा शब्दाश्चार्थे। काण्डादीनप्यधीयीत। तान् स्वयमेव प्रकटयन्ति इषेत्वेति ॥ १५ ॥

१६ " नमो ब्रह्मण ÷ इति परिधानीयां त्रिरन्वाह। अप उपस्पृश्य, "वृष्टिरसिवृश्च मे,, इति ॥ सिद्धं महातर्पणम्॥

धर्मसूत्रे ( २-४-७ ) वक्ष्यमाणं महातर्पणं मनस्याकलय्य सिद्धमित्युक्तम् ॥ १६ ॥

१७ अथ श्रावण्यै पौर्णमास्यै स्वाहा, इत्याज्यमुपहुत्य, स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

१८ अथ काण्डर्षीन् तर्पयन्ति – अपूपैर्धानाभिः सक्तुभिरोदनेनेति। यद्युवैतेभ्यो भवति ॥

तर्पयन्ति = पूजयन्ति। अपूपादिषु मध्ये यदि उ वा एतेभ्यो भवति = रोचते, तैः पूजयन्ति उवेति प्रसिद्धिं वक्ति ॥ १८ ॥

१९ " ऋषयश्छन्दा‌ꣳसि आचार्या वेदा यज्ञाश्च प्रीयन्ताम्॥ ब्रह्मच ब्राह्मणाश्च प्रीयन्तामिति वाचयीत ॥

( २ अनध्यायाः )

२० त्र्यहमेकाहं वा नाधीयीरन्॥

उपाकर्मानन्तरमिति शेषः ॥ २० ॥

२१ मासं प्रदोषे नाधीयीरन् ॥

उपाकर्मानध्यायप्रसङ्गेन अनध्यायान्तराण्यपि कथ्यन्ते ॥ मासं = सकलेषुमासेषु । कालाध्वनोरत्यन्तसंयोगेद्वितीया। मासं प्रदोषे इत्यावर्त्य, उपाकर्मानन्तरमासे प्रदोषे अध्ययनं न कुर्यादित्यर्थःकार्यः । पक्षप्रदोषे सति यावत् प्रतिपदं नाधीयीरन् ॥ सर्वामिति शेषः । त्र्यहमिमनुकर्षः । अस्तात्परं घटिकात्रयं प्रदोषः ॥ २१ ॥

२२ नित्यं चैव भुक्त्वोर्ध्वम् ॥

भोजनानन्तरं यावत् भुक्तं जीर्णं भवेत् । अन्यथा अध्ययनेनोदरबाधा भवेत् । घटिकाद्वयेन जीर्णं भवतीति वैद्यशास्त्रम् ॥ २२ ॥

२३ मध्यरात्रात्परम् ॥

नाधीयीरन् ॥ २३ ॥

२४ स्तनिते सप्रदोषमहरनध्यायः ॥

स्तनिते = मेघगर्जने सति-शेषः । वर्षाकालादन्यत्र। तदा प्रदोष कालेन सह तद्दिनं गर्जनानन्तरं अनध्यायः॥ २४ ॥

२५ अस्तमिते चोदयात्प्राक् ॥

रवावस्तमिते स्तनितेर्गर्जिते उदायात्प्राक् = सार्धमूहूर्तसन्ध्या समये ॥ ततः उदयपर्यन्तमनध्यायः ॥ २५ ॥

२६ विद्युति च स्वप्नान्तम्॥

अस्तमिते विद्युति निमित्ते ततः स्वापपर्यन्तम् ॥ २६ ॥

( ३ अनध्यायानामतिदेशः )

२७ एवमेव काण्डोपाकरण काण्डसमापनाभ्याम् ॥

परमिति शेषः वक्ष्यमाणाभ्यां व्रतारम्भ समापनाभ्यां परं त्र्यहं एकाहं वाऽनध्यायः ॥ २७ ॥

२८ स एकः काण्डऋषिः ॥

२९ यस्यचैवैकस्य काण्डस्याद्योऽनुवाकः, तस्य चैवैकस्य एतदहरनध्यायः ॥

सूत्रद्वयमेकान्त्वपि । एकस्य काण्डस्य एक एव काण्डऋषिः । तस्य

काण्डस्योपाकरणसमापननिमित्तोऽनध्यायः तत्काण्डस्य मात्रम्। नान्येषां काण्डानामिति समुदायार्थः आद्याजुवाकमधीत्यानध्यायः कार्यः।२८-२९।

**३० एवं काण्डविसर्गे ॥**

व्रतसमाप्तौ इति पूर्वानुवादः उत्तरार्थः ॥ ३० ॥

**३१ एतावदेव नाना ॥ नात्रानुवाकः ॥**

अत्र = काण्डविसर्गे न ब्रह्मयज्ञः – इति भेदः व्रतारम्भात् ॥ ३१ ॥

**( ४ प्राजापत्यादि पञ्चकाण्डमन्त्राः )**

काण्डाध्ययनप्रसङ्गेन पञ्चकाण्डमन्त्रान् विभज्य दर्शयति पौरोऽडाशिकमित्यादिना –

**३२ पौरोडाशिकं , याजमानं , होतारो, हौत्रं , पितृमेधः , इति सब्राह्मणानि , सानुब्राह्मणानि, कर्मचोदक ब्राह्मणानि अर्थवादब्राह्मणानि प्राजापत्यानि ॥**

सूत्रस्य सूचकत्वात् सामान्यजनतापरिज्ञानाय विवरणं सम्यक् अपेक्ष्यते । यथामति यथाऽऽधारं विवृणुमः ॥

इदानीं लोके प्रचलितः सारस्वतः पाठः ॥ काण्डविभागपाठोऽन्य एव । स एवात्राऽऽचार्यैः प्रदर्शितः ॥ तैत्तिरीयशाखायां संहिता - ब्राह्मणं आरण्यकमिति सारस्वतपाठः । तत्र केचन मन्त्रात्मकाः । केचन ब्राह्मणात्मकाः , केचनोभयात्मकाः मन्त्राः सन्ति ॥ प्रजापतिः सोमः अग्निः विश्वेदेवाः स्वयम्भूरिति पञ्चकाण्डानां क्रमेण दैवतानि । काण्डा अपि तत्तन्नाम्ना व्यवह्रियन्ते । काण्डेषु प्रत्येकं द्रव्य यजमानऋत्विक् सम्बन्धेन क्रियासम्बन्धेन च काण्डमन्त्राणां वैविध्यम् । यथापौरोडशिकं याजमानं – इत्यादि संज्ञाः । आसांसमाख्येति मीमांसा मर्यादा । साच यौगिकः शब्दः –

तत्र मन्त्रो नाम = यज्ञादिषु विनियोक्तव्यः । स च प्रयोगसमवेतार्थस्मारकः । ब्राह्मणं नाम = मन्त्रादीनां विनियोगविधायकम् ॥ तत्रैवार्थवादसहितमनुब्राह्मणम् ॥ अत एव सूत्रेषु कर्मचोदक ब्राह्मणानि, अर्थवाद ब्राह्मणानि – इति तयोः विवरणं दत्तम् ॥ व्रतपूर्वकं अध्येतारः तत्तद्व्रतमध्ये तत्तत्काण्डमन्त्रादीनेवाधीयीरन् ॥ केवलं

वेदाध्येतारस्तुप्रसिद्ध-सारस्वताध्ययनपाठक्रममनुसरेयुः । व्रतपूर्वकाध्येतॄणां कृतेऽयं क्रमः-तद्यथा- अत्र सारस्वतपाठमनुसृत्य काण्डप्रश्नानुवाकानां अङ्का दत्ताः ।।

पौरोडाशिकमिति -

इदं प्राजापत्यकाण्डगतमन्त्रादीनां प्रदर्शकं सूत्रम् ।। प्राजापत्य काण्डः पञ्चधा विभक्तः पौरोडाशिकं , याजमानं , होतारः , हौत्रं पितृमेधः - इति। तत्र -

१ तै० सं० प्रथमकाण्डे प्रथमप्रश्ने आदितः त्रयोदशाऽनुवाकाः पौरोडाशिक संज्ञामन्त्राः ।। पुरोडाशसम्बन्धात् ।।

- तै० ब्रा० ३ . २ . अत्रादितः दशानुवाकात्मकः पूर्णः प्रश्नः । तथा " प्रत्युष्ट७ं रक्षः ÷ ३ . ३ . आदितः एकादशानुवाकात्मकः पूर्णः प्रश्नः पौरोडाशिकब्राह्मणानि ।। एवं - तै० सं० २ काण्डे षष्ठप्रश्ने प्रथमतः षडनुवाकाः , पञ्चमप्रश्ने एकादशतमोऽनुवाकश्च । तथा - तै० ब्रा० १ . ३ . १० इन्द्रोवृत्र७ं हत्वा ÷ इत्येकोऽनुवाकश्च पौरोडाशिकब्राह्मणानि ।।

- तै० सं० २ काण्डे पञ्चमप्रश्ने " विश्वरूपो वै त्वाष्ट्रः ÷ इत्यादिषडनुवाकाः पौरोडाशिकानुब्राह्मणानि ।।

।। इति पौरोडाशिकम् ।।

२ अथ याजमानं-तै० सं० प्रथमकाण्डे पञ्चमप्रश्ने ममनामप्रथमं ÷ इत्यनुवाके " पयस्वतीरोषधयः ÷ इत्यादि सप्तमन्त्राः , तथा तत्रैव षष्ठप्रश्ने " सन्त्वासिञ्चामि ÷ इत्यादि प्रथमानुवाकमारभ्य षडनुवाकाः याजमान मन्त्राः ।।

- तै० सं० १. ६. ७. यथावै ÷ इत्यनुवाकमारभ्य पञ्चानुवाकाः तथा तै. सं० १. ७. १ पाकयज्ञं वा ÷ इत्यारभ्य प्रथम तृतीय - चतुर्थ-पञ्चम षष्ठानुवाकाः पञ्च याजमान ब्राह्मणानि ।।

।। इति याजमानम् ।।

३ अथ होतारः — तै० आ० ३. - १. " चित्तिः स्रुगि ,, त्यादित्रयोदशानुवाकाः होतृमन्त्राः ।

— तै० ब्राह्मण० २ - २. १ - ११. " प्रजापतिरकामयत

÷ इत्येकादशानुवाकात्मकः प्रश्नः पूर्णः । तथा तत्रैव २. - ३. १. - ११. "ब्रह्मवादिनो वदन्ति इत्याद्येक + ादशानुवाकाः पूर्ण प्रश्नः होतृब्राह्मणानि ॥

॥ इति होतारः ॥

४ हौत्रम् — तै० ब्रा० ३. ५. १. – १३. "सत्यं प्रपद्ये ÷ इत्यादस्त्रयोदशानुवाकाः हौत्रमन्त्राः ॥

तै० सं० २. ५. ७ — १० "देवावै नर्चिनः ÷ इत्यादि चत्वारोऽनुवाकाः । तथा २. ५. ११. "निवीतं मनुष्याणां + इत्यारभ्य "मनुष्यलोकं चाभिजयति इत्यन्तम् । एवं २. ६. ७. – १० "मनुः पृथिव्या + इत्यादि चत्वारोऽनुवाकाः । एवं तै० सं० १. ७. २. "सं७् श्रवाहसो + इत्यनुवाकश्चेति दशानुवाकाः हौत्र ब्राह्मणम् ॥

॥ इति हौत्रम् ॥

५ पितृमेधः — तै० आ० षष्ठ प्रश्ने "परेयुवा७ंसं + इत्यादि द्वादशानुवाकाः पितृमेधमन्त्राः ॥

## ॥ इति प्राजापत्यकाण्डः ॥

## ❋ सौम्यकाण्डः ❋

**३३ आध्वर्यवं, ग्रहाः, दाक्षिणानि, समिष्टयजू७ंषि, अवभृथ यजू७ंषि, वाजपेयः, शुक्रियाणि, सवाः, इति सब्राह्मणानि सानुब्राह्मणानि कर्मचोदकब्राह्मणानि अर्थवाद ब्राह्मणानि — इति सौम्यानि ॥**

अयं काण्डोऽष्टधा विभक्तः — यथा आध्वर्यवं इति ॥

१ आध्वर्यवं — तै० सं० १. २. १. – १३. "आपउन्दन्तु + इत्यादि त्रयोदशानुवाकाः । तथा तत्रैव १. ३. १. - १३. "देवस्यत्वा + इत्यादि त्रयोदशानुवाकाः । तै० ब्रा० १. ४. ८. "पवमानः सुवर्जनः + इत्येकोऽनुवाकः । एवं १. १. १. "ब्रह्मसन्धत्तं + इत्येकोनुवाकः इति २८ अनुवाकाः आध्वर्यवमन्त्राः ॥

— तै० सं० ६. १. — ११. " प्राचीनवꣳशं ÷ इत्येकादशानुवाकाः । तथा ६. २ १ — ११ " यदुभौ विमुच्य ÷ इत्याद्येकादशानुवाकाः । एवं ६. ३. १. – ११ " चात्वालाद्धिष्णियान् ÷ इत्याद्येकादश अनुवाकाः । तथैव ६. ४. १. – ३. " यज्ञेन वै ÷ इति त्रयोऽनुवाकाःब्राह्मणम् ।। अत्र तृतीयोऽनुवाकः अनुब्राह्मणमपि ब्राह्मणम् । तथा ६.-६.-४.-११ "स्फचेन वेदिं + इत्यष्टानुवाकाः । एवं ७. १. १ – ३ " प्रजननं ज्योतिः ÷ इत्यादित्रयोऽनुवाकाः अनुब्राह्मणानि । तै० ब्रा० १. ५. ९ः — १२ " देवासुराः संयत्ता — इत्यादि चत्वारोऽनुवाकाः — आहत्य ५१ अनुवाका आध्वर्यवं ब्राह्मणम् ॥

२ ग्रहाः— तै० सं० १. ४. १.—४२ " आददे ग्रावासि ÷ इत्यादि ४२ अनुवाकाः । तथा तै० आ० ३. १६. "तरणिर्विश्वदर्शत ÷ इत्येकः — इत्याहत्य ४३ अनुवाका ग्रहमन्त्राः ॥

— तै० ब्रा० १. ४. १. " उभये वा एते ÷ , १. ५. ४. " ब्रह्मवादिनो वदन्ति ÷ इति द्वावनुवाकौ । इमौ अनुब्राह्मणे । तै० सं० ६. ४. ४. – ११ देवस्यत्वा ÷ इत्याद्यष्टानुवाकाः । ६. ५. १.–११ " इन्द्रोवृत्राय ÷ इत्याद्येकादशानुवाकाः । इत्याहत्य २१ ग्रहब्राह्मणानि

३ दाक्षिणानि — तै० सं० १. ४. ४३ " उदुत्यं जातवेदसं ÷ इत्येकोऽनुवाकः दाक्षिणमन्त्राः ।

तै० सं० ६. ६. १ " सुवर्गायवा ÷ इत्येको ब्राह्मणम् ॥ इति दाक्षिणानि ॥

४ समिष्ट यजूꣳषि – तै० सं० १. ४. ४६ " धातारातिः + इत्येकोऽनुवाको मन्त्राः ।

-तै० सं० ६. ६. २. " समिष्टयजूꣳषिजुहोति + इत्यनुवाको ब्राह्मणम् ॥ इति समिष्टयजूꣳषि ॥

५ अवभृथः - यजूꣳषि – तै० सं० १. ४. ४९ " ऊरुꣳ हि राजावरुणः ÷ इत्यनुवाको मन्त्रः ।

— तै० सं० ६. ६. ३. " अवभृथयजूꣳषि जुहोति + इत्यनुवाको ब्राह्मणम् ॥ इत्यवभृथयजूꣳषि ॥

६ वाजपेयः - तै० सं० १. ७. ७. — १२ " देवसवितः प्रसु-वेत्यादि षडनुवाका वाजपेयमन्त्राः ॥

— तै० ब्रा० १. ३. २.—९ " देवावैं यथादर्श-इत्याद्यष्टानु वाकाः ब्राह्मणम् ॥ इति वाजपेयः ॥

७ शुक्रियाणि — तै० आ० ४. १.-४२. " नमो वाचे या चो-दिता ÷ इत्यादिद्विचत्वारिंशदनुवाका मन्त्राः शुक्रियाः ॥

-- तै० आ० ५. १. १२ " देवावै सत्रं ÷ इत्यादि द्वादशानु वाकाः शुक्रियब्राह्मणानि ॥ इति शुक्रियाणि ॥

८ सवाः — तै० ब्रा० २. ७-४ , २. ५. ५., २. ७. ६. अत्र आद्ययोरन्तिमौ मन्त्रौ । अन्तिमानुवाके रेवज्जात ÷ इत्येकोमन्त्रः । तथा २. ७, ७, " सिꣳहेव्याघ्र ÷ इत्यादि द्वावनुवाकौ । एवं २. ७. १२-१३ " अस्याजरासो ÷ इत्यादि द्वावनुवाकौ । तथा २.-७. १५ - १७ , " व्याघ्रोऽयमग्नौ चरति ÷ इत्यादित्रयोऽनुवाकाः सवमन्त्राः ॥

— तै० ब्रा. २. ७. १—३ " त्रिवृत्सोमो भवति ÷ इत्यादि त्रयोऽनुवाकाः । एवं २. ७. ४. " तत्सर्वं भवति „ इत्यन्तम् । तथा २. ७. ५. अत्रापि " तत्सर्वं भवती „ त्यन्तम् । एवं २. ७. ६. अत्र " षद्भिꣳ सर्वः „ इत्यन्तम् । तथा २. ७. ९.-११ " प्रजापतिः प्रजाः ÷इत्यादि त्रयोऽनुवाकाः । एवं २. ७. १४ " प्रजापतिः पशून-सृजत ÷ इत्यनुवाकः । तथा २. ७. १८, " इद्रं वै ÷ इत्यनुवाकश्च सव ब्राह्मणानि ॥ इति सवाः ॥

॥ इति सौम्यकाण्ड विवरणम् ॥

## * अथाग्नेयकाण्डः *

**३४ अग्न्याधेयमग्निहोत्रमग्न्युपस्थान मग्निचयनं सावित्रं नाचिकेतं चातुर्होत्रीयं वैश्वसृजंमारुणाः – इतिसब्राह्मणानि सानुब्राह्मणानि कर्मचोदक ब्राह्मणानि अर्थवाद ब्राह्मणानि आग्नेयानि ॥**

अयमाग्नेयकाण्डो नवधा विभक्तः । तद्यथा---

१ अग्न्याधेयं — तै० ब्रा० " धर्मशिरः ÷ १: १ . ७. , " उद्धन्यमानं ÷ १. २. १. इति द्वावनुवाकौ अग्न्याधेयमन्त्राः ।

— तै० ब्रा० १. १. २.-६. " कृत्तिकास्वग्निमादधीत ÷ इत्यादि पञ्चानुवाकाः । तथा १. १. ८.-१० " इमे वा एते ÷ इत्यादि त्रयोऽनुवाकाः अग्न्याधेय ब्राह्मणम् ॥

—तै० सं० १, ५. ३. " भूमिर्भूम्ना ÷ इत्येकोऽनुवाकः पुनराधेय मन्त्राः ॥

-- तै० सं० १: ५. १-२, १. ५. ४. " देवासुराः÷ इत्यादित्रयोऽनुवाकाः । तथा तै० ब्रा० १. ३. १. " देवासुराःसंयत्ता ÷ इत्येकश्च पुनराधेय बाह्मणानि ॥ इत्यग्न्याधेयम् ॥

२ अग्निहोत्रं - नात्र मन्त्राः ।

—तै० ब्रा० २. १. १.— ११ " अङ्गिरसोवैः÷ इति समग्रः प्रश्नः । तथा १. ४. ३-४ " उदस्थाद्देव्यदितिः ÷ इति द्वावनुवाकौ च अग्निहोत्रब्राह्मणानि ॥ इत्यग्निहोत्रम् ॥

३ अग्न्युपस्थानं - तै० सं० १. ५. ५-६ " उपप्रयन्तो अध्वरमित्यनुवाकौ । तथा १. ५. १० " ममनाम प्रथमं ÷ अत्र आदितः षण्मन्त्राश्च अग्न्युपस्थानस्य मन्त्राः ।

— तै० सं० १. ५. ७—९ अयज्ञो वा इयादयः त्रयोऽनुवाकाः अग्न्युपस्थान ब्राह्मणानि ॥ इत्यग्न्युपस्थानम् ॥

४ अग्निचयनं — तै० सं० ४. १ १-१० " युञ्जानः प्रथमं ÷ इत्यादिदशानुवाकाः । तथा तै० सं० ४-३-१-१० " आपान्त्वेमन्त्सादयामि ÷ इत्यादि द्वादशानुवाकाः । तथा ४. ४. १-११ " राश्मिरसि ÷ इत्याद्येकादशानुवाकाः । एवं ४. ५.१ -११ "नमस्ते रुद्रमन्यव ÷ इति कृत्स्नः प्रश्नः । तथा ४. ६-१-५ " अश्मन्नूर्जं ÷ इत्यादि पञ्चानुवाकाः । तथा ४. ७. १-१४ " अग्नाविष्णू ÷ इत्यादि चतुर्दशानुवाकाः । एवं तै० ब्रा० १.५.७-८ " आयुषः प्राण७ सन्तनु ÷ इत्यनुवाकौ । तथा तै० आ० ३. १७ १८ अत्रैकैको मन्त्रः । तथा ३. १९ अत्रैकोमन्त्रः । ४. ९. " इषे पीपिहि ÷ इत्यादि आप्रश्न समाप्तेः । इत्यग्निचयनमन्त्राः ॥

— तै० सं० ५. १. १–१० " सावित्राणि जुहोति ÷ इत्यादि दशानुवाकाः । तथा ५. २. १-१०" विष्णुमुखा वै ÷ इत्यादि दशानुवाकाः । एवं ५. ३. १–११ " उत्सन्नयज्ञो वा एषः ÷ इत्याद्येकादशानुवाकाः तथा ५. ४, १-११ "देवासुराःसंयत्ताआसंस्तेन ÷ इत्याद्येकादशानुवाकाः । तथा ५. ५. १–१० " यदेकेन स७ स्थापयति ÷ इत्यादि दशानुवाकाः । एवं " ५. ६. १–१० " हिरण्यवर्णाः शुचयः ÷ इत्यादि दशानुवाका मन्त्रब्राह्मणात्मकाः । तथा ५. ७. १-१० " यो वा अयथा दैवतं ÷ इत्यादिदशानुवाकाश्च अग्निचयनब्राह्मणानि॥ इत्यग्निचयनम् ॥

५ सावित्रम् — तै० ब्रा० ३. १०. १–८ " संज्ञान ÷ इत्याद्यष्टौ अनुवाकाः सावित्रमन्त्राः ॥

— तै० ब्रा ३. १०. ९–११ " प्रजापतिर्देवान् – इत्यादित्रयोऽनुवाकाः सावित्र ब्राह्मणानि ॥ इति सावित्रम् ॥

६ नचिकेतं — तै० ब्रा० ३. ११–१–६. " लोकोऽसि ÷ इत्यादि षडनुवाकाः नाचिकेतमन्त्राः ॥

— तै० ब्रा० ३, ११. ७–१० चत्वारोनुवाकाः "अयं वाव ÷ इत्यादयः नाचिकेतब्राह्मणानि ॥ इति नाचिकेतम् ॥

७ चातुर्होत्रीयं — तै० आ० ३. ९. चित्तिस्रुक् ÷ इत्येकोऽनुवाकः चतुर्होत्रीय मन्त्रः ।

यद्यपि अयमनुवाकः प्राजापत्यकाण्डे होतृमन्त्रप्रविष्टः , तथापि संयोग पृथक्त्व न्यायेन अत्रापि प्रविष्टः इति न दोषः ।

—तै० ब्रा० ३. १२. ५. "ब्रह्म वै चतुर्होतारः ÷ इत्येकोऽनुवाकः चातुर्होत्रीय ब्राह्मणम् ॥ इति चातुर्होत्रीयम् ॥

८ वैश्वसृजं , — तै० ब्रा० ३. १२. ६–९ " यच्चामृतं ÷ इत्यादि चत्वारोऽनुवाकाः वैश्वसृजमन्त्राः ॥ अस्य ब्राह्मणं नास्ति ॥ इति वैश्वसृजम् ॥

९ आरुणाः —

तै० आ० " भद्रं कर्णेभिः ÷ इत्यादि ३२ अनुवाकाः मन्त्र ब्राह्मणात्मकाः आरुणमन्त्र ब्राह्मणानि ॥ इत्यारुणाः ॥

॥ इत्याग्नेय काण्डविवरणम् ॥

* अथ वैश्वदेवकाण्डः *

३५ राजसूयः, पशुबन्धः, इष्टयो, नक्षत्रेष्टयो, दिव श्येनयो,ऽपाद्याः, सात्रायणमुपहोमाः, [1] कोकिली, सूक्तानि, औपानुवाक्यं, याज्या, ऽश्वमेधः, पुरुषमेधः, सौत्रामण्यच्छिद्राणि पशु हौत्रमुपनिषदः, इति सब्राह्मणानि सानुब्राह्मणानि कर्मचोदकब्राह्मणानि अर्थवादब्राह्मणानि वैश्वदेवानि ॥

अयं काण्डोऽष्टादशधा विभक्तः ॥ तद्यथा —

१ राजसूयः — तै० सं० १. ८. १. अयं मन्त्रब्राह्मणात्मकः प्रश्नः द्वाविंशत्यनुवाकात्मकः। तथा तै० ब्रा० १. ५. ५. " ऋतमेव परमेष्ठी ÷ इत्येकोनुवाकः। इति राजसूय मन्त्राः ॥

तै० ब्रा० १. ६. १–१० " अनुमत्ये ÷ इत्यादि कृत्स्नः प्रश्नो दशानुवाकात्मकः। तथा १. ७. १ ·१० "एतद्ब्राह्मणान्येवेत्यादि दशानुवाकाः। एवं १. ८. १–१० " वरुणस्य सुषुवाणस्य ÷ इत्यादि पूर्णः प्रश्नः। तत्र पञ्चम षष्ठानुवाकौ वर्ज्यौ ॥ तथा १. ४. ९–१० " प्रजावं ÷ अग्निर्वाव ÷ इत्यनुवाकौ। एवं १. ५. ६. " देवा वै यज्ञेऽकुरुत " इत्यनुवाकः ·— इति राजसूयब्राह्मणम् ॥ इतिराजसूयम् ॥

२ पशुबन्धः — अत्र मन्त्रा न नसन्ति। ब्राह्मणानितु तै० सं० २. १. १–१० वायव्य७्श्वेतं ÷ इत्यादि दशानुवाकाः ॥ इति पशुबन्धः ॥

३ इष्टयः — तै० सं० २. २. १–११ " प्रजापतिः प्रजा ÷ इत्याद्येकादशानुवाकाः मन्त्र ब्राह्मणात्मकाः। एवं २. ३. १ – १३ " आदित्येभ्यो भुवत् ÷ इत्यादि त्रयोदशानुवाकाः ब्राह्मणानि। तथा २· ४· १–१३ एते त्रयोदशानुवाकाः मन्त्रब्राह्मणात्मकानि। अत्र- " अग्नयेऽन्नवते ÷ इत्यनुवाके पञ्चदशतमः " इतः प्रथमं जज्ञे ÷ इत्येको मन्त्रः, अन्ये ब्राह्मणानि ॥ इतीष्टयः ॥

---

१ ग. घ· कौलिकी ॥

४ नक्षत्रेष्टयः — तै० ब्रा० ३. १.– ३. " अग्निर्नःपातु ÷ इत्यादि त्रयोऽनुवाकाः ८० मन्त्राः । तथा ३. १. ४–६ " अग्निर्वा ÷ इत्यादि त्रयोऽनुवाका उपहोमाः । एवं १. ५. १. " अग्नेः कृत्तिकाः ÷ इत्यनुवाकः । इति नक्षत्रेष्टिमन्त्राः ।

तै० ब्रा० ३. १. ४–६ एते त्रयोऽनुवाकाः । तथा १. ५. २–३ " यत्पुण्यं नक्षत्रं ÷ , " देयसवितुः ÷ इत्यनुवाकौ ब्राह्मणानि ॥ इति नक्षत्रेष्टयः ॥

५ दिवश्येनयः — तै० ब्रा ३. १२. १–२ " तुभ्यं ता ÷ इत्याद्यनुवाकौ । तत्र द्वितीयानुवाके " अग्नये कामायस्वाहा – इत्यादि मन्त्रा उपहोमीयाः । अवशिष्टोऽनुवाकभागः ब्राह्मणम् ॥ इति दिवश्येनयः ॥

अपाद्याः – तै० ब्रा० ३.१२. ३ " तपसा देवा ÷ , ३. १२. ४ देवेभ्यो वै स्वर्गो ÷ इति द्वावनुवाकौ मन्त्रब्राह्मणात्मकौ अपाद्योयौ ॥ इत्यपाद्याः ॥

७ सात्रायणम् – अत्र मन्त्रा न सन्ति । ब्राह्मणानितु तै० सं० ७. १. ४. १० अङ्गिरसो वै ÷ । तथा ७ २ १ १० । ७. ३. १-१० । ७. ४. १-११ । ७. ५. १ १० । ४८ अनुवाकाः । तथा तै० ब्रा० १. २. २–६ । १. ४. ५–७ । इत्यष्टावनुवाकाः ॥ इति सात्रायणम् ॥

८ उपहोमाः — तै० ब्रा० २. ४. १–८ " जुष्टोदमूना ÷ इत्यादयोष्टौ , २. ५. १ – ८ " प्राणो रक्षति ÷ इत्यादयोऽष्टौचानुवाका मन्त्राः । ब्राह्मणं नास्ति ॥ इत्युपहोमाः ॥

९ कौकिली — तै० ब्रा० २. ६. १–२० " स्वाद्वीन्त्वा ÷ इत्यादि विंशत्यनुवाकाः । तत्र प्रथमानुवाकः सौम्यकाण्डे ग्रहेऽपि प्रविष्ट – इत्येके ॥ तथा तै० ब्रा० १. ४. २ " युवꣳ सुराममश्विना ÷ इत्येकोऽनुवाकश्च मन्त्रः ॥ ब्राह्मणं नास्ति ॥ इति कोकिली ॥

१० सूक्तानि — " पीवोन्नाꣳ – इत्यद्यष्टौ , तै ब्रा० २. ८. १–८ अनुवाकाः । तै० आ० ३. १४-१५ " भर्तासन् ÷ इति द्वावनुवाकौ । तथा २. ८. ९ तै० ब्रा० " ता सूर्या ÷ इत्येकोऽनुवाकश्च मन्त्राः । अत्रापि ब्राह्मणं नास्ति ॥ सूक्तमितिनाम ॥ इति सूक्तानि ॥

११ औपानुवाक्यम्— तै० सं० ३. १. १. "अबद्धं मनः ÷ इत्येक एवमंत्रः, अवशिष्टोऽनुवाकः पूर्णः ब्राह्मणम् । अतएव अस्यानुवाकस्य मन्त्रब्राह्मणात्मकत्वमुच्यते ।। एवं सर्वत्रज्ञेयम् । तै० सं० ३. १. २ मन्त्रब्राह्मणात्मकः । ३. १. २ अयमपि उभयात्मकः । ३. १. ३ अयं ब्राह्मणमेव । ३. १. ४ अयं मंत्रा एव । ३, १. ५-६ इमौ मंत्रब्राह्मणात्मकौ । ३. १. ७ अयमपि मंत्रब्राह्मणम् । ३. १. ८ अयमप्युभयात्मकः । तथा ३. १. ९-१० मन्त्रब्राह्मणात्मकौ । ३. २. १-४ मंत्रब्राह्मणात्मकाश्चत्वारः ।।

एवं ३. २. ५. मंत्रात्मकोऽनुवाकः । ३. २. ६-९ मंत्रब्राह्मणात्मकाः ३. २. १० मंत्रात्मकः । ३. ३. १ मंत्रात्मकः । ३. ३. २ मंत्रब्राह्मणात्मकः । ३. ३. ३. मंत्रात्मकोऽनुवाकः । ३. ३. ४. ब्राह्मणमेव । ३. ३. ५ उभयात्मकः ३. ३. ६-७ उभे ब्राह्मणे । ३. ३. ८-९ मंत्रब्राह्मणात्मकौ ।। ३. ३. १० मंत्रात्मकः । ३. ४. १ ब्राह्मणमेव । ३-४. २ मंत्राः । ३-४-३ ब्राह्मणम् ३-४-४ उभयात्मः । ३. ४. ५, ३. ४. ७. मंत्रात्मकौ । ३. ४. ६ ब्राह्मणम् । ३. ४. ८ उभयात्मकः । ३. ४. ९ ब्राह्मणम् । ३. ४. १०. उभयात्मकः । ३. ५. १ उभयात्मकः । ३ ५. २ ब्राह्मणम् । ३. ५. ३ मंत्रा एव । ३. ५. ४ उभयात्मकः । ३. ५. ५ अयमपि उभयात्मकः । ३. ५. ६ मंत्रात्मकः । ३. ५. ७ ब्राह्मणम् । ३. ५. ८ मंत्रा एव । ३. ५. ९ ब्राह्मणम् । ३. ५. १० उभयात्मकः ।

।। इत्यौपानुवाक्यम् ।।

१२ याज्याः - तै० सं० १. १. १४ । १. २. १४. १. ३. १४ । १. ४. ४६ । १. ५. ११ । १. ६. १२ । १. ७. १३ । १. ८. २२ । २. १. ११ । २. २. १२ । २. ३. १४ । २. ४. १४ । २. ५. १२ । २. ६. ११-१२ । ३. १. ११ । ३. २. ११ । ३. ३ ११ । ३. ४. ११ । ३. ५. ११ । ४. १. ११ । ४. २. ११ । ४. ३. १३ । इत्येते २३ अनुवाका मन्त्राः ।। नात्र ब्राह्मणम् ।।

।। इति याज्याः ।।

१३ अश्वमेधः — तै० सं० ७. १. ११-२० इत्येते दशानु-

वाकाः तथा ७. २. ११-२० एते दशानुवाकाः । एवं ७. ३. ११-२० एते च दशानुवाकाः । ७. ४. - १२ - २२ एते चैकादशानुवाकाः । ७. ५. ११ अत्र पञ्चाशन्मन्त्राः । ७. ५. १२. अत्रपञ्चाशन्मन्त्राः । ७. ५. १३ "कस्त्वा युनक्ति ÷ इत्यादि "यज्ञस्यर्ध्यै ,, इत्यन्तं द्वौमन्त्रौ । ७. ५. १६ "यःप्राणतो निमिषत ÷ इत्यादयस्त्रयो- मन्त्राः । ७. ५. १७ "य आतमदा ÷ इत्यादि त्रयो मन्त्राः । तथा ७. ५. १८ इतः अनुवाकान्तः । ७. ५. १९ अत्र दशमन्त्राः "आक्रान्वाजी ÷ इत्यादयः । ७. ५. २० पूर्णोऽनुवाकः ७. ५. २३-२४ इमावनुवाकौ । ४. ४. १२ एकोऽनुवाकः । ४. ६. ६—९ एते च चत्वारोनुवाकाः । ४. ७. १५ एकोनुवाकः । तथा ५. १. ११, ५-२. ११,—१२. एते त्रयोनुवाकाः । एवं ५. ७. ११—२३. एते त्रयोदशानुवाकाः । तथा तै० आ० ३. २०—२१ । तै० सं० ५. ७. २४--२६ - इतित्रयः इत्यश्वमेधमन्त्राः ॥

— तै० ब्रा० ३. ८. १—२३ पूर्णः प्रश्नः । ३. ९. १—२३ पूर्णः प्रश्नः । तै० सं० ५. ५. ११—२४ चतुर्दशानुवाकाः । तथा ५. ६. ११—२३ त्रयोदशानुवाकाः । ५. ३. १२, ५. ४. १२ ,७. ५. २५. अनुवाकाः , एतान्यश्वमेधब्राह्मणानि ॥

॥ इत्यश्वमेधः ॥

१४ पुरुषमेधः — अत्र मन्त्रा न सन्ति । ब्राह्मणानितु - "ब्रह्मणे ब्राह्मणमालभते इत्यादि तै० ब्रा० ३. ४. १-१९ एकोनविंशत्यनुवाकाः ॥

॥ इति पुरुषमेधः ॥

१५ सौत्रामणिः — तै० सं० १. ८. २१ "स्वाद्वींत्वा ÷ इत्येकोऽनुवाकः मन्त्राः ।

— तै० ब्रा० १. ८. ५—६ द्वावनुवाकौ ब्राह्मणे ॥

॥ इति सौत्रामणिः ॥

१६ अच्छिद्राणि — "याः पुरस्तात् ÷ इत्यादि - तै० ब्रा० ३. ७. ४— १४ एकादशानुवाकाः मन्त्राः । ब्राह्मणानि तु तै० ब्रा० ३. ७. १ — ३ इति त्रयोऽनुवाकाः ॥ इत्यच्छिद्राणि ॥

१७ पशुहौत्रम् – " अञ्जन्तित्वामध्वरे ÷ इत्यादि तै० ब्रा० ३. ६. १–१५ पञ्चादशानुवाका मन्त्राः । ब्राह्मणं नास्ति ॥

॥ इति पशुहौत्रम् ॥

१८ उपनिषदः – तै० आ० ७. १, ३, ४, १०, इति चत्वारोनुवाकाः । तथा – " अम्भस्य पारे ÷ इत्यादि तै० आ० १०–१–७७ अनुवाकाः । तेषु मध्ये ११: १४. १५. २६ एते चत्वारोऽनुवाकाः ब्राह्मणानि । अन्ये मन्त्राः ॥

– तै० आ० ७: २, ८. १–९, ९. १–११ ,, " शीक्षां-व्याख्यास्यामः एते विंशत्यनुवाकाः । तथा – " सत्यं परं पर७ इत्यादि १०–७८. ७९. ८० इति त्रयोऽनुवाकाः ब्राह्मणानि ॥

॥ इत्युपनिषदः ॥

**॥ इति वैश्वदेवकाण्डविवरणम् ॥**

## * स्वायम्भुवः काण्डः *

**३६ स्वायम्भुवः काण्डः – काठके पठितो विधिः स्वाध्याय ब्राह्मणं, स्वयम्भूश्चात्र दैवतं, सर्वभूतपतिः शुचिः ,, इति ॥**

पञ्चमं स्वायम्भुवं काण्डं निर्वक्ति –

काठके उक्तोऽयं स्वायम्भुवकाण्डः । तद्यथा - स्वाध्याय ब्राह्मणं = स्वाध्यायाध्ययनचोदकं ब्राह्मणं ; तच्च " सहवै० ,, प्रश्ने तै. आ० २. ३, ६ " यद्देवा देवहेडनं ÷ यददीव्यं नृणमहं ÷ आयुष्टे विश्वतो दधत् ÷ वैश्वानराय प्रतिवेदयामः ÷ इति चत्वारोऽनुवाकाः । मंत्रब्राह्मणात्मकाः । तथा तत्रैव २. १९–२० " भूःप्रपद्ये ÷ नमः प्राच्यैदिशे ÷ इति द्वावनुवाकौ मन्त्राः ।

– तै आ० " सहवैप्रश्ने १, २, इमौद्वौ । ७–१८ द्वादशानुवाकाश्च ब्राह्मणम् ॥ इति काठके उक्तमित्यर्थः ॥ अस्य काण्डस्य स्वयंभूः सकलभूतगणाधिप एव दैवतम् ॥ तथा शुचिः = ऋषिरपि स एव इत्ययं विशेषः पूर्वकाण्डेभ्यः ॥ तेषु प्रजापति प्रभृतयो

दैवतं, ऋषिस्तु नैकः ॥ तत्र तत्र भाष्यकारादिभिरुक्ताः ऋषयो ज्ञेयाः ॥

अत्रेदं बोध्यम् — काण्डविभागविवरणकालेऽस्माभिः सार स्वतपाठमनुसृत्य - काण्डप्रश्नप्रपाठकानुवाकादीनामङ्काः प्रदर्शिताः - संहितायाः काण्डप्रपाठकानुवाकाङ्काः, ब्राह्मणस्याष्टकप्रपाठकानुवाकाङ्काः । आरण्यकस्य प्रश्नानुवाकाङ्काः इति विभज्य ज्ञेयम् ॥

## ( ५ कारीरीव्रतादि )

**३७ अथ कारीरीव्रतं — चतूरात्रमक्षारलवणमलं भूमौ भुञ्जीत पशुवत् ॥**

इतर व्रतापेक्षया भूमौ एव पशुवत् = मुखेनैव क्षारलवणरहितं अलं पर्याप्तं भुञ्जीतेति विशेषः ॥ ब्रह्मचर्यादिधर्माः व्रतान्तर इवात्रापि समानाः ॥

**३८ एव मेव कारावतम् ॥ ओषध्यनुवाकं अधीयीरन् सावित्रीभ्यः प्रभृति ॥**

अत्र सावित्र्युपदेशादनन्तरं ओषध्यनुवाकं = सोमलिङ्गकं तदध्ययनं नित्यं, पशुवत् भूमौ भोजनं नास्ति इति ॥३८॥

आह - **३९ नात्र भूमौ भुञ्जीत, न पशुवत् ॥**

अत्र = कारावते । तथाच पूर्वतन कारीरीव्रतापेक्षया ओषध्यनुवाकाध्ययनं पशुवत् भूमिभोजानाभावश्च विशेषः ॥ ओषध्यनुवाकः तै० सं०, ऐ० ब्राह्मणादौ च प्रसिद्धः ॥ ३९ ॥

**४० " मौञ्जीं दण्डोपवीते च वासः कृष्णाजिनं तथा ॥ पूर्वोपयुक्तान्युत्सृज्य धार्याणि स्युर्व्रते व्रते ॥ इति ॥**

नूतनमौञ्जीधारणादिकं सर्वव्रतेषु नित्यमित्यर्थः ॥ ४० ॥

॥ इति तृतीयप्रश्ने प्रथमः खण्डः ॥

## * द्वितीयः खण्डः *

## ( ६ अध्ययनाङ्गव्रतोपक्रमः )

वेदाध्ययनप्रसङ्गेन होत्रादि वेदव्रतानि वक्तुं प्रक्रमते-अथेत्यादिना-

१ अथाऽऽचार्यप्रसूतः कर्माणि करोति – " विज्ञायते च आचार्यो वै ब्रह्मेति,,

तत्र सकलान्यपि कर्तव्यानि आचार्येण प्रसूतः = प्रेरितः, आज्ञप्त-इत्यर्थः। कुर्यात् अधीती - इति आर्थिकं ॥ १ ॥

२ काण्डे काण्डे व्रतचर्या ॥

प्राजापत्यादिकाण्डेषु अध्येष्यमाणेषु क्रमेण होत्रादिपञ्चव्रतानि वक्ष्य माणानि उपाकर्मोत्सर्जनपूर्वकं आचरणीयानि ॥ २ ॥

३ अथैतानि ब्रह्माणि सांवत्सरिकैर्व्रतैरध्येयानि भवन्ति –होतारः, शुक्रियं, उपनिषदः, गोदानं, सम्मितं चेति ॥

होत्रादि व्रतानि एकैकसंवत्सरपर्याप्तानि चरित्वा एकैकं काण्डं क्रमेणाधीयीरन् इति तात्पर्यार्थः ॥ एतानि ब्रह्माणि = पूर्वखण्डोक्तानि, तत्तत्काण्डवेदान् ॥ ३ ॥

४ तत्रादौ होतृव्रतमुपक्रमते – ब्राह्मणानिति ॥

ब्राह्मणानन्नेन परिविष्य, पुण्याहं स्वस्ति ऋद्धिमिति वाच यित्वा ॥ अनेन व्रतोपक्रमाङ्गपुण्याहवाचनमुक्तम् ॥ ४ ॥

५ होतृषु प्रधानकालेषु – देवयजनोल्लेखन प्रभृति-आग्निमुखात् कृत्वा, सावित्र्या पक्वं हुत्वा, यथोपदेशं चतस्रः प्रधानाहुतीर्जुहोति ॥

" याज्ञिकीभ्यो देवताभ्यो होतृभ्यः स्वाहा ॥

" साꣳहितीभ्यो० " "

" वारुणीभ्यो० " "

" सर्वाभ्यो० " " इति ॥

प्रधानकालेषु प्राजापत्यकाण्डाध्ययनार्थमुक्तकालेषु ॥ यथोपदेशं = पूर्वखण्डोक्तदिशा आचार्योक्त दिशा वा ॥

"अथ काण्डर्षि जुहोति - "प्रजापतये काण्डऋषये स्वाहा इति।

"अथ सदसस्पतिं जुहोति – "सदसस्पतिमद्भुतं ÷ इति ॥

" अथ सावित्रीं जुहोति – " तत्सवितुः ÷ इति ॥

अथ वेदाहुतीर्जुहोति –

ॐ ऋग्वेदाय स्वाहा० । यजुर्वेदाय० । सामवेदाय० । अथर्ववेदाय० । अथर्वाङ्गिरोभ्यः० । ब्राह्मणेभ्यः० । इतिहासपुराणेभ्यः० । कल्पेभ्यः० । गाथाभ्यः० । नाराश౦सीभ्यः० । रैभीभ्यः० । सर्पदेवजनेभ्यः० । सर्वभूतेभ्यः० । इति ॥

एवं विंशत्याज्याहुतयः ॥ ५ ॥

६ अथ पालाशीश्चतस्रः समिधः आर्द्राः सपलाशाः सप्रारोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा घृताक्ता अभ्याधापयन् वाचयति । ÷ आचार्यः शिष्यमित्यर्थसिद्धम् ।।

" ॐ अग्ने व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता౦ स्वाहा „

"वायो व्रतपते० आदित्य व्रतपते० व्रतानांव्रतपते० इति ॥

अयं व्रतोपक्रमहोमः, एवमुत्तरत्र ॥ ३ ॥

७ अथ ब्रह्मयज्ञधर्मेण प्राजापत्यकाण्डस्याद्यमनुवाकमधीयीत । मौञ्ज्यादि पञ्चमुद्राधारणं च प्रसिद्धम् ॥

मौञ्जी, दण्डः, उपवीतं, वासः, कृष्णाजिनं चेति पञ्चचिह्नानि ॥ पूर्वोक्तं स्मारितम् ॥ एवमुत्तरत्रापि ॥ ७ ॥

८ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

( ७ व्रते नियमाः, व्रतविसर्गश्च )

९ संवत्सरमेतद्व्रतं चरेत् । " संवत्सर౦हि व्रतं नातीत्य एतस्मि౦स्त्वेव प्राजापत्यकाण्डं संवत्सरेऽधीयीत ॥

एतद्व्रतं – काण्डाध्ययनं च संवत्सरे एकस्मिन्नेव समापयेत् ॥९॥

१० यद्युवैतस्मिन्संवत्सरे नाधीयीत, यावदध्ययनमेतद्व्रतं चरेत् ॥

यदि उवा=आलस्यादिना बुद्धिमान्द्यादिना वा एकस्मिन् संवत्सरे प्राजापत्यकाण्डाध्ययनेऽशक्तः, तदाऽऽध्ययनसमाप्तेर्व्रतमपि अनुसरेत् ॥१०॥

११ अथ संवत्सरे पर्यवेते अध्यापयते श्रावयते वा ॥

पर्यवेते = समाप्ते ॥ अध्यापयते , शिष्यान् । श्रावयते = अधिकारिणां सम्मुखे पारायणं कुर्यात् ॥ ११ ॥

१२ अथ चन्द्रानुकूले दिने काण्डसमापनं कुर्यात् ॥

चन्द्रानुकूले = स्वजन्मनक्षत्रात् — द्वितीय - चतुर्थ - षष्ठाष्टमनवम तारासु एकस्मिन् शुभदिने । काण्डाध्ययनं समापयेत् ॥ तदा व्रतं च समापयेत् ॥ व्रतसमापनप्रयोगं अनुपदं वक्ष्यति ॥ १२ ॥

१३ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

१४ देवयजनोल्लेखनप्रभृति आग्निमुखात् कृत्वा, अव्रत्यप्रायश्चित्तं हुत्वा, सावित्र्या पक्वं हुत्वा यथोपदेशं प्रधानाहुतीर्जुहोति – "याज्ञिकीभ्यः ÷ इति चतस्रः ॥ काण्डर्षि – सदसस्पतिं ÷ सावित्रींच हुत्वा वेदाहुतीः जुहोति – ऋग्वेदायस्वाहेत्यादित्रयोदश ॥

अव्रत्यप्रायश्चित्तं = यन्मआत्मनः ÷ पुनरग्निरिति द्वे मिन्दाहुती ॥ १४ ॥

१५ अथ पालाशीश्चतस्रः समिधः, याज्ञिकानां वृक्षाणायन्यतमस्य वा – "अग्ने व्रतपते होतारं व्रतमचारिषं तदशकं तन्मेराधिस्वाहा, वायोव्रतपते०, आदित्य व्रतपते० व्रतानां व्रतपते० ॥ इति जुहुयात् ॥

१६ नात्रानुवाकाध्ययनम् ॥

अत्रव्रतविसर्गे पूर्वं सप्तमसूत्रे उक्तमनुवाकाध्ययनं नेत्यर्थः ॥ १६ ॥

१७ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

१८ व्रतं विसृज्य यथासुखं विहरेत् ॥

व्रतं = होतृव्रतं त्यक्त्वा यथासुखं = मनोऽनुकूलं यथा विहरेत् व्रतांतरारम्भं यावत् ॥ १८ ॥

॥ इति तृतीयप्रश्ने द्वितीयः खण्डः ॥

## * तृतीयः खण्डः *
## ( शुक्रिय व्रतम् )

१ अथ शुक्रियाणि ।।

बहुवचनमविवक्षितं ।। १ ।।

२ शुक्रियं व्रतं व्याख्यास्यामः ।।

३ उदगयने आपूर्यमाणपक्षे पुण्ये नक्षत्रे चन्द्रानुकूले दिवसे केशश्मश्रुलोमनखानि वापयित्वा , तीर्थं गत्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्मार्जयेत् ।।

सुरभिमत्या = दधिक्राव्णः ÷ इत्यनया ऋचा । अब्लिङ्गाभिः ÷ आपोहिष्ठाः ÷ इत्यादितिसृभिः । वारुणीभिः = यच्चिद्धिते विशो ÷ इति तिसृभिः । हिरण्यवर्णाभिः=हिरण्यवर्णाः शुचयः ÷ इतिचतसृभिः । पावमानीभिः=पवमानः सुवर्जन ÷ इत्यनुवाकेन ।। एवमुत्तरत्रापिज्ञेयं ।।३।।

४ ब्राह्मणान्नेन परिविष्य , पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ।।

५ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा सावित्र्या पक्वं हुत्वा यथोपदेशं प्रधानाहुतीर्जुहोति – सिद्धमेतत् ।।

होतृव्रते उक्तमित्यर्थः ।। अत्र यो विशेषस्तमाह - काण्डेति ।। ५ ।।

६ काण्डर्षि – " सोमाय काण्डर्षये स्वाहा इति ।।

विशेषः ।। याज्ञिक्यादिषु " होतृभ्यः० ,, इतिस्थाने " शुक्रियेभ्यः ,, इति योजनापि ।। ६ ।।

७ अथ मेखलादि पूर्वभुक्तमुत्सृज्य द्विराचम्य तत्तन्मन्त्रेण नवं नवं धृत्वा ब्रह्मयज्ञधर्मेण — " आप उन्दन्तु ÷ इत्याद्यानुवाकमधीयीत ।।

८ औदुम्बरीश्चतस्रः समिध आदधाति –
" अग्ने व्रतपते शुक्रियं व्रतं० इत्यादि समानम् ।।

९ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

( ९ शुक्रियव्रतोत्सर्जनम् )

१० संवत्सरमेतद्व्रतं चरेत् - इत्यादि सिद्धम् ॥

संवत्सराध्ययनादि ॥१०॥

११ अथैतस्मिन् व्रते नियमविशेषाः प्रसिद्धाः ॥

उत्तरखण्डे वक्ष्यन्ते इत्यभिप्रायः ॥ ११ ॥

१२ अथ चन्द्रानुकूलदिने ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वाऽऽग्निमुखात् कृत्वा सावित्र्या पक्वं हुत्वा यथोपदेशं प्रधानाहुतीर्जुहोति - याज्ञिक्यादयश्चतस्रः ॥ सोमाय काण्डऋषये० । सदसस्पत्यादयः पञ्चदश ॥ पूर्ववत् ॥ १२ ॥

१३ नात्रानुवाकः ॥ उत्सर्जनेऽनुवाकाध्ययनं नेत्यर्थः ॥

१४ स्विष्टकृत्प्रभृति सिद्धमतऊर्ध्वम् ॥

व्रतविसर्जनहोमात्परं ॥१४॥

सर्वेषु व्रतेषु सावित्र्या हुतशेषनिधानं सावित्र्या प्राशनंचैके समामनन्ति ॥

बलिप्राशनयोश्च सत्वात् आहुतानुकृतिरिति तदभिप्रायः ॥ १४ ॥

१५ चतस्रः औदुम्बरीः समिध आदधाति - अग्ने व्रतपते शुक्रियं व्रतमचारिषमित्यादिभिः ॥

१६ एवं व्रतं विसृज्य यथासुखं विहरेत् ॥

॥ इति तृतीयप्रश्ने तृतीयः खण्डः ॥

## * चतुर्थः खण्डः *

( १० शुक्रियव्रते विशेषाः )

१ अथ शुक्रियव्रतमध्ये सोमकाण्डाध्ययनस्य विशेषं व्याख्यास्यामः ॥ व्रतान्तरादिति वक्तव्यम् ॥ १ ॥

२ ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य,

[1]बिल्वेऽच्छदिदर्शेऽग्निमुपसमाधाय 'सम्परिस्तीर्य, मदन्तीरधिश्रित्य' सप्तभिर्दर्भैः कूर्चं कृत्वा तत्र निधायनमोवाचे या ÷ इति प्रथमानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्य देवताभ्यः प्रागादि दिक्षु आसनानि कल्पयति -

बिल्वे = बिल्ववृक्षवने । अखले इति पाठेतु, खलं = क्षेत्रं सस्यादिमत् तद्भिन्नमखलं, तत्रेत्यर्थः ॥ अच्छदिदर्शे – ग्रामगतगेहानामाच्छादनं यत्र न दृश्येत, तत्र । मदन्तीः = घटपूर्णा उष्णाआपः साक्षतपुष्पाः, "उष्णवारिपूर्णो घट„ इति सायणाचार्याः ॥

विस्तृतमण्डलंकृत्वा तत्र –

"प्रवर्ग्याय कल्पयामि । धर्माय० । महावीराय० । सम्राजे० इति । ऊर्ध्वं ब्रह्मणे कल्पयामि, प्रजापतये० ।

३ प्राचीनावीती – "यमायाङ्गिरस्वते पितृमते कल्पयामि । पितृभ्यो घर्मपेभ्यः० । इति दक्षिणे ॥

मण्डले एव ॥ अत्र जीवत्पितृकैः प्राचीनावीतं न विधेयं ॥ ३ ॥

४ उपवीती – उत्तरेणाग्निं "ऋषिभ्यः कल्पयामि । मन्त्रकृद्भ्यः० । मन्त्रपतिभ्यः० । मंत्रदर्शिभ्यः० । देवेभ्यो घर्मपेभ्यः० । रुद्राय० । रुद्रहोत्रे० । सर्वाभ्यः प्रवर्ग्यदेवताभ्यः कल्पयामि – इति ॥

अग्नेर्दक्षिणतः मण्डले एव ॥ ४ ॥

५ प्रदक्षिणमग्निं परिषिच्य वैकङ्कतीश्चतस्रः समिधः अप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति –

"पृथिवी समित् ÷ इत्यादि चतुर्भिर्मन्त्रैः ॥

अप्रतिशुष्काग्रा इत्यनेन समिध अग्रमपि न शुष्येदिति सूच्यते ॥५॥

६ मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयति – प्रवर्ग्यं तर्पयामि – इत्येवं त्रयोदश ॥

७ तैरेव नामधेयैः चतुर्थ्यन्तैः गन्धपुष्पाक्षतधूपदीपनैवेद्य-

---

१ ग. घ. ञ ठ. अखले ।

रर्चयित्वा ॥

८ अथाहतेन वाससा समुखं शिरो वेष्टयते " चितस्थ परिचितः ÷ इतिद्वाभ्याम् ॥

समुखं शिरः = मुखेन सह शीर्षम् ॥ ८ ॥

९ तूष्णीमग्निं परिषिच्य चतस्र औदुम्बरीः समिधः अभ्यादधाति – सिद्धमत ऊर्ध्वम् ॥

शुक्रिय व्रतं चरिष्यामीत्यादि रक्तं ॥ अनुवाकाध्ययनपर्यन्तमिति ज्ञेयम् ॥ ९ ॥

१० मासमेतद्व्रतं चरेत् । द्वौ मासौ वा यावदध्ययनं वा

११ यद्वा त्र्यहे द्व्यहे वा समापनम् ॥

विकल्पः आधिकारिकः ॥ ११ ॥

१२ तस्मिन्नेवरात्रौ जागरयन्त आसते, उपविशेत् । संविशेद्वा ॥

एतद्व्रतसमापनदिने रात्रौ ॥ जागरयन्तः अन्यानपीति आर्थिकोऽर्थः ॥ उपविशेत् = आसने तिष्ठति । संविशेत् = स्वपेद्वा ॥ यथानुकूलो विकल्पः ॥ १२ ॥

१३ अत्र "वयः सुपर्णा उपसेदुरिन्द्रं ÷ इति ऋचा आज्यं पुनः प्रवर्ग्यदेवताभ्यः तर्पयित्वा शिरोवेष्टनं " वयः सुपर्णा ÷ इति मन्त्रेण गुरवे दद्यात् ॥

१४ व्रतोत्सर्गः सिद्धः ॥ पूर्वमुक्तः ॥ १४ ॥

१५ " शन्नोवातः पवता–मिति उत्तमेनानुवाकेन मदन्तीभिः शान्तिं कृत्वा. अरण्येऽधीयीत । तपस्वी पुण्यो भवति, इति

शन्नोवातः – इत्यनुवाकः उत्तमानुवाक इति प्रसिद्धम् ॥ मदन्तीभिः प्रोक्षन् तद्देशमिति शेषः ॥ अरण्ये तद्दिनमात्रं ॥ १५ ॥

॥ इति बौधायनगृह्यसूत्रे तृतीयप्रश्ने चतुर्थः खण्डः ॥

### * पञ्चमः खण्डः *

### ( ११ सर्वव्रताङ्गनियमाः )

१ यावदध्ययनकालस्तावद्व्रत चर्यामुपदिशन्ति

शुक्रियव्रतविशेषकथनप्रसङ्गेन स्मृतां सकलव्रताङ्गचर्यां प्रक्रमते — यावदित्यादिना ॥ १ ॥

" न यानमारोहेत्, न वृक्षमधिरोहेत्, न कूपमवरोहेत्, न पादौ धावयेत्, न बाहुभ्यां नदीं तरेत्, नच्छत्रं धारयीत, नोपानहौ कामयीत, नो संध्यांशयीत, न शूद्रेण सह सम्भाषेत' यदिभाषेत सूर्यंदृष्ट्वा ब्राह्मणेन सह सम्भाषेत, न सायं भुञ्जीत, यदिभुञ्जीत , अज्योतिष्कृत्वा भुञ्जीत ॥

पादौ परस्परं न घर्षयेत् ॥ यद्यपि परस्परपादधावनं पुरुषार्थत्वेनैव निषिद्धं । तथापि व्रताङ्गत्वेनात्र उक्तम् ॥ कश्चित् पुरुषार्थमुल्लङ्घ्यापि तत्र प्रवर्तेत, तन्माभूदिति पुर्नविधानम् ॥ न बाहुभ्यां, नावातु तरेदेव । सन्ध्यां = संध्याकालं यावत् ॥ अज्योतिष्कृत्वा = ज्योतिर्निर्वाप्य ॥ १ ॥

२ तथाप्युदाहरन्ति —

" अस्नात्वाशी मलं भुङ्क्ते —
अजपी पूयशोणितम् ,,
अहुत्वा च कृमिं भुङ्क्ते —
अदत्वा विषमश्नुते ॥ इति ॥

अत्र निषेधमुखो विधिरूह्यः । " स्नात्वैव भुङ्क्ते = भुञ्जीत । अन्यथा मलभोजनदोषभाग्भवेत् ॥ इत्येवं सर्वत्र ॥ जपं=सावित्रीजपं कृत्वैव भुञ्जीत । औपासनं हुत्वैव भुञ्जीत । सिद्धमन्नं अतिथिभ्यो दत्वैव भुञ्जीते,, ति ॥ अन्यथा उक्तदोषाणां भागी स्यादित्यर्थः ॥२॥

३ अष्टम्यां पर्वणि पर्वणि चोपवसेत् , तदहर्न स्नायात् ॥ तस्यां रात्रौ उपविशेत् , संविशेत वा ॥

शुक्ल-कृष्णाष्टम्योः पर्वणि पर्वणि - दर्शे पौर्णमास्यां च ॥ उपवसेत्

उपवासोऽत्राभोजनम् ॥ तदहः = अष्टम्यादिषु दिवा न स्नायात्, किन्तु उदयात्पूर्वमेव स्नायात्, न मध्याह्ने ॥ ब्रह्मचारिणां मध्याह्न स्नानमपि प्रसक्तं निषेधति ॥ रात्रावित्याद्युक्तार्थम् ॥ ३ ॥

**४ लोहितमुत्पतितं दृष्ट्वा, चण्डालशव – श्मशान – अमेध्यादिकं दृष्ट्वा च "अबद्धं मनो दरिद्रं चक्षु ÷ इत्यमुं मन्त्रं पठेत् ॥**

लोहितं = रोहितं, ऋजुभूतमिन्द्रधनुः । अथवा लोहितं = शरीरे रक्तम् ॥ स्पष्टमन्यत् ॥ ४ ॥

**५ अथ यदेनमभिवर्षति – " उन्दतीर्बलं धत्त ÷ इति मन्त्रं जपेत् ॥**

प्रवाससमये इति शेषः । एनं = ब्रह्मचारिणं यत् = यदि, अभिवर्षति =अकाले सम्मुखं वर्षति मेघः –तदा उन्दतीर्बलमित्यादि पठेत् ॥५॥

**६ वेदाध्यायी अनध्याये नाधीयीत, नास्तमिते, न रात्रौ, नानुदिते, न वर्षति, न पर्यावृत्ते, नाभ्राडम्बरे, न श्लेष्मातकस्य छायायां, नाप्सु, नाध्वनि, न गृहे न गोष्ठे ॥**

वेदाध्यायी = व्रतपूर्वकमधीती । अनध्यायाः पूर्वमुक्ताः । नकाराणां अधीयीतेत्यनेनान्वयः ॥ अस्तमिते = अस्तमन समये वर्तमानेक्तः ॥ रात्रौ = मध्यरात्रात्परं । अनुदिते = उदयसमये । वर्षति अकाले । पर्यावृत्ते = वृष्टेः पुनः प्रारम्भदिनेऽकाले । अभ्राडम्बरे – अकाले मेघगर्जनवत्याकाशे ॥ श्लेष्मातको = वृक्षविशेषः, कल्याश्रितत्वेन पुराणेषु प्रसिद्धः ॥ स्पष्टमन्यत् ॥ ६ ॥

**७ न मांसमश्नाति, न कोशीधान्यं अन्यत्र तिलेभ्यः ॥**

कोशीधान्यं = माषमुद्गादि ॥ तानि च कोशेष्वेव भवन्ति ॥ अथवा कोशेषु सङ्गृहीतं कोशीधान्यमित्यपि । तिलानां सङ्गृहीतत्वेऽपि तदशनं न दोषाय ॥ ७ ॥

**८ न कुर्यात्क्रोधरोदने, न श्राद्धं भुञ्जीत, न लोमानि वापयीत, नाङ्क्ते, न दतो धावेत् ॥**

क्रोधं, रोदनं च न कुर्यात् । श्राद्धं = श्राद्धशेषं, मातृपितृ गुरुज्येष्ठ भ्रात्रादिभिन्नस्येति शेषः, तस्याभ्यनुज्ञानात् ॥ अन्यत्र तद्भुक्त्वा प्रायश्चित्तं कुर्वीतेति शास्त्रं ॥ दन्तधावनाऽभावसमये द्वादशगण्डूषैर्मुखं शोधयेत् ॥ अलाभे दन्तकाष्ठानां प्रतिषिद्धदिने तथा । अपां द्वादश गण्डूषैः मुखशुद्धिर्भविष्यति । इति स्मृतेः ॥ ८ ॥

**९ त्रिषवणमुदकोपस्पर्शनं, चतुर्थकालपानभक्तः स्यात् ॥**

त्रिषवणं = त्रिकालं, स्नानं । चतुर्थ – इति । अह्नः पञ्चधा विभक्तस्य चतुर्थः कालः अपराह्णः ॥ तदा पानभोजनादि कुर्यात् । न पूर्वं न परम् ॥ ९ ॥

**१० अहरहर्वा भैक्षमश्नीयात् ॥**

अहरहः = पतिदिनं ॥ वा शब्द एवार्थः, भैक्षमेवेत्यन्वयः ॥ १० ॥

**११ औदुम्बरीभिरग्निं परिचरेत् ॥**

समिद्भिरित्यर्थः ॥ ११ ॥

**१२ यदा यदा स्वाध्यायमधीयीत तदा तदा शान्तिं जपित्वा, निर्वर्ण्य उत्तरशान्तिं जपित्वा विसृजेत् ॥**

यदायदेत्यादिना पूर्णाध्ययनानन्तरं कदाचित् पुनरध्ययन काले पारायणकाले वा कर्तव्यं उक्तम् । शान्तिं = नमोवाचे इत्याद्यानुवाकं, उत्तरशान्तिं – शन्नो वातः प्रवतां ॅ इत्युक्तमानुवाकं च । निर्वर्ण्य = वेदमधीत्य ॥ १२ ॥

**१३ एवमेव वाऽऽरुणकेतुकं तत्रतत्रोक्तशान्तिं जपेत् ॥**

अरुणकेतुकं = नाम – अरुणमन्त्रात्मकं । तत्र तत्रोक्तं = नमो ब्रह्मणे ॅ, तच्छंयो ॅ भद्रंकर्णेभिरित्यादि शान्तिम् ॥ १३ ॥

**१४ पूर्ववत् व्रतोपक्रमविसर्जनं समापनमिति ॥**

उक्तशान्तिपठनमेव व्रतोपक्रमोऽपि विसर्जनमपि भवति तदेव समापनम् इति ॥ पूर्ववदित्यनेन पूर्वमुक्तस्य स्मरणम् ॥ १४ ॥

॥ इति तृतीयप्रश्ने पञ्चमः खण्डः ॥

## * षष्ठः खण्डः *

### ( १२ उपनिषद्व्रतम् )

१ अथोपनिषत्सु – ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

अथ = व्रतान्तरारम्भः। उपनिषत्सु। षष्ठ्यर्थे सप्तमी। उपनिषदो व्रतमारभ्यते इत्यर्थः ॥ १ ॥

२ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा, सावित्र्या पक्वं हुत्वा यथोपदेशं प्रधानाहुतीर्जुहोति – "याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा। इत्यादयश्चतस्रः ॥

३ अथ काण्डर्षि जुहोति–अग्नये काण्डऋषये स्वाहा,, इति।

४ अथ सदसस्पतिं – सावित्रीं च जुहोति ॥

५ अथ वेदाहुतीर्जुहोति – त्रयोदश ॥

६ मौञ्जी दण्डोपवीतादि सिद्धम् ॥

७ ब्रह्मयज्ञधर्मेण तस्य चैवैकस्य काण्डस्याद्यानुवाकं "उद्धन्यमानं ∴ इत्यधीत्य " नमोब्रह्मण इति परिधानीयां त्रिरन्वाह ॥

८ अथ पालाशीश्चतस्रः समिधोऽभ्याधापयन् वाचयति। वाटाश्वत्थापामार्ग खादिरशमीवृक्षाणामन्यतमस्य वा ॥ "अग्ने व्रतपते उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳस्वाहा – इत्यादि चतुर्भिः ॥

९ स्विष्टकृत्प्रभृति सिद्धम् ॥

१० सावित्र्या हुतशेषनिधानं प्राशनं च ॥

११ संवत्सरमेतद्व्रतं चरेदित्यादि सिद्धम् ॥

१२ अथ चन्द्रानुकूलदिने काण्डसमापनं कुर्यात् ॥

१३ पुण्याहपूर्वकं देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा अव्रत्यप्रायश्चित्तं हुत्वा सावित्र्या पक्वहोमादि सिद्धम् ॥

पक्वहोमादि वेदाहुत्यन्तं पूर्वमुक्तम् ॥ १३ ॥

१४ नात्रानुवाकः ॥

१५ अथ पालाशीः समिधोऽभ्यादधाति "अग्ने व्रतपते उपनिषदं व्रतमचारिषं तच्छकेयं तन्मे राधि स्वाहा । वायो व्रतपते० । आदित्य व्रतपते० । व्रतानां व्रतपते० ॥ इति ॥

१६ स्विष्टकृत्प्रभृति सिद्धम् ॥

१७ बलिप्राशने समाने ॥

१८ व्रतं विसृज्य यथासुखं विहरेत् ॥

॥ इति तृतीय प्रश्ने षष्ठः खण्डः ॥

* सप्तमः खण्डः *

( १३ गोदानव्रतम् )

१ षोडशे वर्षे गोदानम् ॥

वेदाध्येता षोडशे वर्षे प्राप्ते इदं व्रतं कुर्यात् ॥ ततः पूर्वं व्रतत्रयं काण्डत्रयाध्ययनं च समाप्योत्तराध्ययनाय सिद्धो भवेत् ॥ अत्र गोदानपदं केशखण्डनं वक्ति ॥ तत्प्रधानत्वात् व्रतस्य तत्संज्ञा ॥ १ ॥

२ तस्य चौलवत् तूष्णीं प्रतिपत्तिः अवसानं च ॥

व्रतारम्भे समापने च चौलवत् वपनं, परं अमन्त्रकम् ॥ २ ॥

३ एतावदेव नाना ॥

४ प्रतिपत्तौ सर्वान्केशान्वापयते ॥

इत्ययं विशेषः । समापने शिखावर्जं वपनम् ॥ ४ ॥

५ गामत्र गुरवे वरं ददाति ॥

६ अग्नि गोदानो वा भवति ॥

अग्निः = सुवर्णं तदेवगौः । गोप्रत्याम्नायत्वेन सुवर्णं वा व्यावहारिकद्रव्यं वा दद्यात् । अथवा अग्निपरिचर्यात्मकं गोदानं यस्य सः, अग्नि गोदानो वा ॥ साक्षात् गां दातुमसमर्थः त्रिशेषेणाग्निं परिचरेदित्यर्थः ॥ ६ ॥

७ तस्य काण्डोपाकरण–समापनाभ्यां प्रतिपत्तिरवसानं च ।
तस्य = गोदानव्रतस्य ॥ ७ ॥

८ तस्य नित्यमधिब्रह्मचर्यं, त्रिषवणमभिषेकः, उत्सन्न शय्याऽऽसनं च ॥
एतन्निमित्तमधिकृत्य कर्तव्यं बह्मचर्यमधिब्रह्मचर्यम् ॥
उत्सन्ने = परित्यक्ते शय्याऽसने ॥ तस्य शय्यासनत्यागः धर्मः ॥८॥

९ यन्मातुः दुश्चरितं तस्मादेनं त्रायते इत्युपदिशन्ति।
अनेन व्रताचरणेन मात्राऽस्य गर्भस्थितिकाले कृतं प्रलोभनादि दुश्चरितं । एनं कर्तारं तस्माद्रक्षति ॥ उपदिशन्तीत्यनेन श्रुतिसम्मतिमस्य वचनस्य सूचयति ॥ श्रुतिविदः उपदिशन्ति ॥९॥

१० ब्राह्मणानन्नेन परिविष्य पुण्याहाद्यग्निप्रतिष्ठापनान्तं अग्निमुखान्तं च समानम् ॥

११ सावित्र्या पक्वहोमादि प्रसिद्धम् ॥

१२ "विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा इत्येव नाना ॥

१३ मौञ्जीधारणादि (प्रसिद्धम्) ब्रह्मयज्ञधर्मेण "अनुमत्यै पुरोडाश –मित्यनुवाकमधीयीत ॥

१४ अथ पालाशीः समिधोऽभ्यादधाति–" अग्ने व्रतपते गोदानं तं चरिष्यामि तच्छकेयं तन्मे राध्यताᳪस्वाहा ॥ वायोव्रतपते॰आदित्य व्रतपते । व्रतानां व्रतपते इति चतस्रः ॥

१५ स्विष्टकृत्प्रभृति सिद्धम् ॥

१६ संवत्सरमेतद्व्रतं चरेत् । संवत्सरे पर्यवेते चन्द्रानुकूलदिने काण्डसमापनं कुर्यात् ॥

१७ पुण्याहादि सिद्धं अव्रत्यप्रायश्चित्तान्तम् ॥

१८ सावित्र्या पक्वहोमादि पूर्ववत् ॥

१९ नात्रानुवाकः ॥ अनुवाकाध्ययनं नेत्यर्थः ॥१९॥

२० अथ पालाशीश्चतस्रः समिधोऽभ्यादधाति " अग्ने व्रतपते गोदानं व्रतमचारिषं तदशकं तन्मे राधिस्वाहा । वायो व्रतपते० आदित्यव्रतपते० व्रतानांव्रतपते० इत्यादि ॥ स्विष्टकृदादि सिद्धम् ॥

२१ हुतशेषनिधानं प्राशनं च समानं सन्तिष्ठते ॥

२२ गोदानमिति गोदानम् ॥

द्विरुच्चारः समाप्तिं द्योतयति ॥ २२ ॥

इति तृतीयप्रश्ने सप्तमः खण्डः ॥

* अष्टमः खण्डः *

( १४ सम्मितं व्रतम् )

१ अष्टाचत्वारिंशत्समितं सम्मितमित्याचक्षते ॥

स्वायम्भुवकाण्डाध्ययने कारीरिव्रतादिकमुक्तम् ॥ सम्मितं व्रतन्तु वेदव्रतमध्ये न गणितम् । " चत्वारि वेदव्रतानि ,, इत्युक्तत्वात् ॥ एकैकवेदस्य साङ्गाध्ययने द्वादश द्वादश वर्षाणि अतियंति । तथाच साङ्गचतुर्वेदाध्ययने अष्टाचत्वारिंशद्वर्षाणि भवन्ति, अत एवास्य व्रतस्य अष्टाचत्वारिंशत्सम्मितं-इति नाम । " सम्मित ,, मिति संक्षिप्तं नाम ॥ तेन ( एकैक ) वेदाध्ययनसमाप्तौ व्रतमिदं कार्यमिति मन्यन्ते ॥ अत एव आचक्षते इत्युक्तम् ॥१॥

२ तस्य संक्षेपः संवत्सरः ॥

तस्याष्टाचत्वारिंशत्संवत्सरस्य संक्षेपः = संक्षिप्तः कालः संवत्सरः ॥ तथा च संवत्सरे एवेदं व्रतं समापनीयम् ॥ अत एव पूर्वोक्तव्रतानामपि संक्षिप्तकालपक्षाश्रयणेनैव संवत्सरे समापनं उक्तमिति ध्येयम् ॥२॥

३ तस्य द्वादशसंवत्सरान् एकादश, नव सप्त पञ्चत्रीन् संवत्सरं षण्मासान् चतुरो मासान् द्वौ मासौ मासंवा व्रतं चरेदिति ॥

ऋष्यन्तरमतेन संक्षेपस्य प्रकारान्तराणि दर्शयति ॥३॥

४ तस्योपदेशात् प्रतिपत्तिरवसानं च ॥

तस्य = सम्मितव्रतस्य, उपदेशात् = गुरूपदेशमाश्रित्य, प्रतिपत्ति-रवसानं च = आरम्भः समापनं च ज्ञेयम् ॥४॥

५ एतत्संवत्सरमनुव्याख्यास्यामः, स यदि ब्रह्मचारीस्या-न्नियममेव प्रतिपद्यते ॥

संवत्सरं = संवत्सरसाध्यंव्रतम् ॥ यदि शब्देन गृहस्थोऽपि अधीयीतेति गम्यते ॥ नियममेव = पूर्वोक्तं व्रताचरणनियमं, नियमेन व्रताऽऽ चरणमिति यावत् ॥ प्रतिपद्यते = कुर्यात् ॥५॥

६ अथ यद्यब्रह्मचारी स्यात् केशश्मश्रुनखलोमानि वापयित्वा तीर्थं गत्वा स्नात्वाऽऽचम्य सुरभिमत्याऽब्लिङ्गा-भिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिः इति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन सूक्तेन षोडशप्राणायामान् धारयित्वा देवर्षिपितॄन् तर्पयित्वोत्तीर्य वासः पीडयित्वा अन्यद्वासः प्रयतं परिधत्ते ॥

अब्रह्मचारी = गृहस्थः । वेदानधीयानो वा । "ऋतं च सत्यं च" इत्याद्यघमर्षणसूक्तम् ॥ प्रयतं = शुचि, वास इत्यनेनान्वेति ॥६॥

७ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

८ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वाऽव्रत्यप्रायश्चित्तं हुत्वा "कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा", "कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा" इति द्वाभ्यां हुत्वा ॥

९ अथ "कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता, एष ते काम कामाय-स्वाहा

"मन्युःकरोति नाहं करोमिमन्युः कर्ता नाहं कर्ता मन्युः

कारयिता नाहं कारयिता, एषते मन्यो मन्यवे स्वाहा,, इति च द्वाभ्यां स्रुवाहुती जुहोति ॥

१० " यन्म आत्मनः,, " पुनरग्निः० इति । पाहि त्रयोदशं च हुत्वा । सावित्र्या पक्वं हुत्वा यथोपदेशं प्रधानाहुतीर्जुहोति " याज्ञिकीभ्यो देवताभ्यः सम्मितीभ्यः स्वाहेत्यादि चतस्रः ।

११ अथ काण्डऋषिं– " स्वयम्भुवे काण्डऋषये स्वाहा ॥

१२ अथ सदसस्पत्यादयः पञ्चदश ।

१३ एवमेव सर्वव्रतेषु जुहुयात् ॥

प्रतिवेदाध्ययनस्यान्ते कर्तव्यसम्मितव्रतेषु सर्वेषु ॥१३॥

१४ मौञ्जीधारणादि समानम् ॥

१५ अथ ब्रह्मयज्ञधर्मेण स्वायम्भुवकाण्डस्याद्यानुवाकं " संज्ञानं विज्ञान,, मित्यधीयीत ॥

१६ चतस्र औदुम्बरीः समिधः–अग्ने व्रतपते सम्मितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां० स्वाहा ,, वायो व्रतपते० , आदित्य व्रतपते० , व्रतानां व्रतपते० ,, इत्यभ्याधाय ॥

१७ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

( १५ अध्ययनेकर्तव्यविधिः )

१८ अथाध्ययन विधिः ॥

नित्याध्ययने कर्तव्यमुपदिशति–अथेत्यादिना ॥१८॥

१९ अधोनाभि, उपरिजानु आच्छाद्य, त्रिषवणमुदकोपस्पर्शनं, अनग्निपक्ववृत्तिः, अच्छायोपयोगः, नागारं प्रविशेत् अन्यत्र गुरुनियोगात् ॥

नाभेरधः जानूपरिभागः आच्छादनीयः ॥ अग्निपक्वपदार्थं विना जीवनं, तदशक्तौ स्वयंकृतपक्वं न भुञ्जीत । छायायां = वृक्षछायायां न वसेत् । गृहं न प्रविशेत् । यदि गुर्वाज्ञा तदा प्रविशेत् ॥ १९॥

२० भैक्षं वा तत्कालं भुञ्जति, कामं कन्दमूलफलम् ।
तत्कालं = कालोपलब्धं । कन्दमूलफलभक्षणे इच्छैव नियामिका ॥ २० ॥

२१ अपराह्णे तदपि नोपयुञ्जीत ॥
पूर्वं ब्रह्मचारिणां अपराह्ण भोजन विहितं, तत्तु तद्व्रतचारिणामेव । इदन्तु अन्येषाम् ॥ २१ ॥

२२ स्त्रीशूद्र पतितरजकरजस्वलाभिश्च न सम्भाषेत ।

२३ कामं मातरमुपाध्यायिनीं भगिनीं च ॥
स्त्रीभिः सम्भाषणे काश्चिदभ्यनुजानाति, मातरं उपाध्यायिनीं भगिनींच स्वेच्छायां सत्यां सम्भाषेत ॥ यदि रजस्वला न भवेयुः ॥ २३ ॥

२४ याश्चान्या एवंयुक्ताः स्त्रियोऽशक्ताः पराक्रमे ॥
एवं युक्ताः = मात्रादि सदृशाः । अन्याः ताभिःसह संभाषेत ॥ तथा पराक्रमे = पराक्रमणे, वशीकरणे हावभावादिभिः अशक्ताः । वृद्धा इति यावत् । ताभिरपि सम्भाषेत ॥ २४

२५ सप्रणवव्याहृतयः प्राणायामाः ॥
प्रणवव्याहृतिगर्भाः प्राणायामाः त्र्यवरा नित्यं कार्याः ॥ प्राणायामाधिक्ये तपो वर्धते ॥ २५ ॥

२६ अग्नीन्धनानयन, भैक्षाचरण, योग्यस्थानाऽऽसनशयनोपस्पर्शनानि सुमनो निवेदनानि च ।
गुरोः स्वस्य चार्थे, अग्नीन्धनानां = समिदादीनां आनयनम् ॥ भैक्षाचरणं, तेनैव जीवनं, योग्ये देशकालार्हे स्थाने आसनादि । उपस्पर्शनं = स्नानादिकमपि योग्यस्थाने । सुमनोनिवेदनानि = पुष्पाण्यालीय गुरवेऽर्पणानि । अथवा गुरोः पित्रादीनांच पुरतः क्रोधादि वर्जसन्तोषमुखादिचर्ययाऽवस्थानं, तदपि तस्य कर्तव्यमेव ॥२६॥

२७ अहरहः सम्मितदेवतास्तर्पयति–ब्रह्माणं तर्पयामि । प्रजापति० । परमेष्ठिनं । स्थाणुं० । शिवं० । शर्वं० ।

विष्णुं० । नारायणं० । त्रिविक्रमं० । बहुरूपं० । स्कन्दं० । इन्द्रं० । अन्तकं० । यमं० । ऋषीन्० । पितॄन्० । सर्वाः सम्मितदेवतास्तर्पयामि-इति प्रसङ्ख्याय समापयेत् ॥

इदं तर्पणं सम्मितव्रतचारिणां नित्यं । प्रसंख्याय=ता देवता ध्यात्वा । समापयेत्, व्रतमितिशेषः ॥ २७ ॥

२८ गुरोः समानवृत्तिषु गुरुवत् वृत्तिः स्यात् ॥

वृत्तिरत्र अभिवादनसेवादिः ॥ गुरोःसमाना=सदृशावृत्तिः जीविका आचारादयश्च येषां समानाः तेषु गुरुवदेवाभिवादनादि कर्तव्यम् ॥ २८

२९ प्रेषितः तदेव प्रतिपद्येत, अन्यत्र पातकात् ॥

पापजनकं विना गुर्वाज्ञा अविचार्यैव निर्वहणीया ॥ २९ ॥

३० एवं द्वादश वत्सरान् । एकादश, नव, सप्त, पञ्च, त्रीन्,, षण्मासान्, चतुरो मासान् द्वौ, मासं वा व्रतं चरेत् ॥

३१ अपिवा योऽनूचानः श्रोत्रियः, स द्वादशरात्रं पराकं वा व्रतं चरेत्, न त्वेवासम्मिती स्यात् ॥

सकलकाण्डाध्ययनानन्तरं अनूचानोऽपि श्रोत्रियोऽपि सम्मितव्रतं न त्यजेत् । द्वादशदिनं यावत् पराककृच्छ्रात्मकं व्रतं वा तत्प्रतिनिधित्वेन कुर्यात् ॥ ३१ ॥

३२ स एष चरति-दशपूर्वान् दशापरान् आत्मानंचैकविंशं पंक्तिं च पुनाति ॥

व्रतस्य फलम् ॥ ३२ ॥

३३ यस्मा उपदिशति, यस्मै ददाति यस्माच्च प्रतिगृह्णाति तत्सर्वं पुनाति ॥

उपदेश-दान-प्रतिग्रहादौ तत्तत्प्रतियोगिनः सर्वान् पुनाति । सर्वमित्येकवचनं नपुंसकताच न विवक्षिता ॥ ३३ ॥

३४ व्रतसमाप्तौ वा गुरुदक्षिणामाहरेत् धर्मतो यथाशक्ति ॥

धर्मतः = धर्ममार्गेणैव ॥ असत्प्रतिग्रहादीनामपि निषेधः ॥ ३४ ॥

३५ विषमगतेस्त्वाचार्ये उग्रतः शूद्रतो वा हरेत् ॥

आचार्यः दारिद्र्यादिना विषमावस्थां गतः, तदा सर्वतः भिक्षाद्या-हरेत् ॥ तस्य कृते उग्रतः, शूद्रतो वा प्रतिग्रहं कुर्यात् ॥ "अशास्त्रवर्ती यः पुमान् तस्मात् यो धनप्रतिग्रहः,, उग्रप्रतिग्रह इति सायणाचार्याः ।३५।

**३६ सर्वतो वा उग्रतः शूद्रतोऽप्याचार्यार्थं स्यादाहरणं धर्म्यमित्येके ॥**

आचार्यसेवार्थं निषिद्धेभ्यो दातृभ्योऽपि निषिद्धपदार्थस्यापि आहरणं धर्म्यमेवेति ॥ ३६ ॥

**३७ अत्रोदाहरन्ति – "व्रतैर्युक्तस्तु योऽधीते क्रियावान् विदुषां मतः । श्रोत्रियोऽधीतवान् सार्थं शास्त्रं नाऽऽचरते परः ॥ १॥ अधीयानोऽनधीत्यापि शाखां श्रोत्रिय एव सः ॥**

प्रसङ्गात् — वेदव्रतस्य महत्वप्रतिपादनायारम्भः ॥ उदाहरन्ति- इति वचनस्यास्य प्रामाण्यार्थम् ॥ व्रतयुक्ताध्ययनं विदुषां सम्मतम् ॥ स च श्रोत्रियो भवति । सार्थं शास्त्रमधीत्यापि व्रतं यदि नाचरते सोऽसम्मत एव । स्वशाखामनधीत्याऽपि व्रतमधीयानः = कुर्वाणः, कृतवानिति यावत्, स श्रोत्रियो भवत्येव, अतो व्रताऽऽचरणं न त्याज्य मेवेति फलितोऽर्थः ॥ ३७ ॥

**"अनूचानः स एव स्यात् अधीतेऽङ्गैः सहैव तत् ।२। ऋषि-कल्पः स एव स्यादपि कल्पमधीतवान् । व्रतैर्युक्तस्तु योऽ-धीते श्रोत्रियो भवति द्विजः ॥३॥ व्रताऽऽचरणमात्रेण श्रोत्रियो भवति ध्रुवम् । व्रतैर्हीनः त्रिवेदी स्यात् श्रोत्रियत्वं न लभ्यते ॥ ४ ॥ इति ।**

अङ्गैः सहैव स्वशाखां व्रतवान् योऽधीते सोऽनूचानः ॥ कल्पेन सह षडङ्ग वेदाध्यायी ऋषिकल्पः ॥ व्रताचरणस्य प्राशस्त्य बोध-कोऽवशिष्टभागः ॥४॥

## ( १६ आचारमहत्त्वप्रतिपादनम् )

**"आचाराद्विच्युतो विप्रः न वेदफलमश्नुते ॥ आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत् ॥५॥**

" आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ॥
आचाराद्धनमक्षय्यं आचारो हन्त्यलक्षणम् ॥ ६ ॥

आभ्यां आचारस्य महत्वं प्रदर्श्यते । आचारो नाम=परम्परागतः शौच-स्नान-सन्ध्यादि. । तस्यावश्यानुष्ठेयत्वं विधित्सितम् । सम्पूर्णेति - वेदाध्ययनस्येत्यादिः । ईप्सिताः प्रजाः = सुप्रजाः । अलक्षणं = मुखाद्यङ्गगतं दुश्चिह्नं ॥६ ॥

" दुराचारो हि पुरुषो लोके भवति निन्दितः ॥
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ ७ ॥ "

अनेन दुष्फलजनकदुराचारः त्याज्य एवेति गम्यते ॥ लोके वेद-शास्त्रादिषु निन्दित आचारो दुराचारः ॥ लोकेऽस्य फलं सर्वापरोक्षम् ॥ तथापि जना मुह्यन्ति ॥ ७ ॥

" योऽन्यत्र कुरुते यत्नं अनधीत्य श्रुतिं द्विजः ॥
स वै मूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः ॥ ८ ॥
योऽनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वं चाशु गच्छति सान्वयः ॥ ९ ॥ ,,

" यस्य वेदश्च वेदीच विच्छिद्यते त्रिपुरुषम् ,, इति वचनसार-माहानेन श्लोकद्वयेन ॥ " सर्वथा द्विजेन वेदोऽध्येय एवेति ॥ अन्यत्र = वेदात् अन्यविषये लौकिकादौ ॥ ९ ॥

" न विद्यया केवलया तपसा चापि पात्रता ॥
यत्र वृत्तं इमे चोभे तद्धि पात्रं प्रचक्षते ॥ १० ॥

पात्रता = अर्हता, वैदिके लौकिके च ॥ अतः तल्लाभाय विद्यां तपः वृत्तं च साधयेदिति विधिः । वृत्तं = आचारः ॥ १० ॥

" कामात्मा न प्रशस्तः स्यात् नचै, वाऽकाम्यकामता ॥
काम्योहि वेदाधिगमः कर्मयोगश्च वैदिकः ॥ ११ ॥ ,,

कामात्मा = कामलम्पटः अधिकरागवान् इति यावत् न प्रशस्तः । अकाम्यं = परस्त्र्यादि, शास्त्रनिषिद्धं तत्र कामता = काम्यता न प्रशस्ता । वेदाभ्यासः, तदर्थानुष्ठानरूपकर्मयोगश्च सर्वैरपि काम्यः ।

एतादृशः कामात्मा प्रशस्तः ॥ ११ ॥

" सङ्कल्पमूलः कामो हि यज्ञः सङ्कल्पसम्भवः ॥
व्रतं नियमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः ॥ १२ ॥ „

सङ्कल्पेन कामो भवति । अतः यज्ञ-व्रतादीन् सङ्कल्पयेत् ॥ नतु पापमूलान् विषयात् ॥ १२ ॥

" अकामस्य क्रिया काचित् दृश्यते नेह[1] कर्हिचित् ॥
यद्यद्धि कुरुते किञ्चित् तत्तत्कामस्य चेष्टितम् ॥ १३ ॥ „

कामाभावे कर्तव्यं किमपि नास्ति ॥ कृतमपि न फलति । अतः निन्द्यं परित्यज्य श्लाघ्यमेव कामयेत ॥ १३ ॥

" तेषु सम्यग्वर्तमाना गच्छन्ति[2] मनुलोककम् ॥
यथा सङ्कल्पितांश्चेह सर्वान् कामान् समश्नुते ॥ १४ ॥ „

तेषु = यज्ञव्रतनियमादिषु, विद्यातपोवृत्तेषु च सम्यङ्गिरताः मनुलोककं = ब्रह्मलोकं । देहान्ते इत्यर्थसिद्धम् । इहतु यथासङ्कल्पितान सर्वान् कामान् लभन्ते ॥ समश्नुते इति एकवचनमार्षम् ॥ १४

" असद्वृत्तस्तु कामेषु कामोपहतचेतनः ॥
नरकं समवाप्नोति तत्फलं नैव चाश्नुते ॥ १५ ॥ „

चरित्रहीनस्तु कामाधीनः सन् काम्यकर्मसु प्रवर्तमानः तत्फलमपि न लभते, नरकं च गच्छति ॥ १५ ॥

" श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम् ॥
तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवि ॥ १६ ॥ „

आचारादि विधायिनीं श्रुतिं मुनयः समाधौ पश्यन्ति । उत्थान दशायां तदर्थं स्मरन्ति ॥ अतः तदुभमपि निर्दुष्टत्वात् प्रमाणत्वेन भुवि प्रमितं = निश्चितम् ॥ १६ ॥

" श्रुति द्वैधन्तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ॥
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ १७ ॥ „

---

१ क. ग. घ. ट. कस्यचित् २ ग. झ. ठ. गच्छन्त्यमरलोककम् ।

श्रुत्योः द्वैधं = अभिप्रायद्वयं यत्र विषये स्यात् । तदोभावपि प्रमाण-भूतौ, तदर्थावपि प्रमाणमेव । यथा - षोडशिग्रहणं ॥ "अतिरात्रे षोडशिनं गृह्णाति„ "नातिरात्रे षोडशिनं गृह्णाति„ इति श्रुतिद्वयं भिन्नाऽभिप्रायकमपि उभयस्यार्थस्यापि प्रामाण्यं सिद्धम् ॥ परन्तु-तत्र विकल्पो ज्ञेयः ॥ १७ ॥

" वेदोदितानि कर्माणि कुर्यादीश्वरतुष्टये । यथाश्रयं त्यक्त-कामः प्राप्नोति परमां गतिम् „ ॥ १८ ॥

ईश्वरप्रीत्यर्थमेव वेदोक्तकर्माणि यथावत् कुर्यात् न तु तत्र कामना-वान् भवेत् । तेन मोक्षं लभते ॥ ईश्वरानुग्रहलब्धचित्तशुद्धिद्वाराऽऽत्मज्ञानेनेति सिद्धम् ॥ १८ ॥

" पुण्यक्षेत्राभिगमनं पुण्यतीर्थनिषेवणम् ॥

यज्ञो वा विविधो ब्रह्मन् त्यक्ताचारं न रक्षति ॥ १९ ॥

वेदो वा हरिभक्तिर्वा भक्तिर्वापि महेश्वरे ॥

स्वाचारात्पतितं मूढं न पुनाति द्विजं नरम् ॥ २० ॥

पुनः प्रक्रान्तमाचारमहत्वमेव निगमयति ॥ स्पष्टोऽर्थः ॥ २० ॥

" श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लंघ्य वर्तते ॥

आज्ञाच्छेदी मम द्वेषी [1] भगवानाह तं नरम् ॥ २१ ॥ „

श्रुतिस्मृत्योः भगवदाज्ञारूपत्वं, तदुल्लंधनमश्रेयस्करं चेति श्रीभव-द्वचनमुदाजहार ॥ २१ ॥

एतेन धान्वन्तर-शैव - बहुरूप - पार्षद स्कन्द–इन्द्राणां व्रतानां प्रतिपत्तिः = समापनं" ॥२२॥

ब्रह्माभ्यासे ऋक्सामयजुषां छन्दसामनुसवनं च „ लभेत काममिति ह स्माह भगवान् बोधायनः ॥२३॥

एतेन = उक्तव्रतेनानुष्ठितेन धान्वन्तरादिव्रतानां आरम्भसमापनं च कृतं भवतीति शेषः । तथा ब्रह्माऽभ्यासे = वेदाऽभ्यासे ऋगा-

---

[1] ग. घ. ठ. मद्भक्तोऽपि न मे प्रियः ।

दिछन्दसां अनुसवनं च = कर्मविशेषश्च कृतमेव भवतीति ॥ तेन वेदाभ्यासेन सव्रतेन कामं लभेत = प्राप्नोतीत्याहस्म भगवान् = सर्वपूज्यो महर्षिः बोधायनः ॥ २३ ॥

॥ इति तृतीयप्रश्नेऽष्टमः खण्डः ॥

* नवमः खण्डः *

( १७ वास्तुशमनम् )

१ प्रहुतानुकृतिः वास्तुशमनम् ॥

अत्र होमो बलिश्च वर्तते अतः प्रहुतानुकरणम् ॥ १ ॥

२ स यत्र दश उषित्वा प्रयास्यन् भवति, तद्दशभ्यो वा ऊर्ध्वं, सदारः साग्निः तद्वास्तोष्पतीयं हुत्वा प्रयाति ॥

सः— कर्ता यत्र यस्मिन् कस्मिन्नपि गेहे दशदिनानि उषित्वा, ततः प्रयास्यन् ततः परं अन्यत्र गन्तुकामः, अथवा दशभ्यो दिनेभ्य ऊर्ध्वं उषित्वाऽन्यत्र गमनमनाः अपि तत्र वाससमये सुखापेक्षया वास्तुशान्ति कुर्यादित्यभिप्रायः ॥ २ ॥

३ सर्व एवाऽऽहिताग्निरित्येके ॥

सर्वोऽपि आहिताग्निः उक्तवास्तुशान्ति कुर्यादित्येके मन्यन्ते ॥ ३ ॥

४ यायावरा इत्येके ॥

यायावराः = ग्रामाद्ग्राममटन्तो भिक्षाजीविनः । ते एवोक्तशान्ति कुर्युरिति अन्ये मन्यन्ते ॥ परमेतादृश निमित्ते वास्तुशान्तिः न क्वाचद्दृढा विवक्षितमाह-यच्चेति- ॥ ४ ॥

५ यच्च अगारं कारयित्वा प्रथममध्यवस्येत् । तद्वास्तोष्पतीयेन शमयित्वाऽध्यवस्येत् ॥

अगारं = नूतनं गेहं विधाय तत्र प्रथमं = आदौ, नूतनतयेत्यर्थः । अध्यवस्येत् = वासाय इच्छति तत्रादौ वास्तोष्पतीयेन वक्ष्यमाणेन, शमयित्वा = भूखनन दारुच्छेदन पाषाणभेदनादि जन्यपापं घोराभिधानं परिहृत्य वसेत् ॥ इदन्तु सर्वत्र प्रसिद्धम् । तेन गेहे वास्तोष्पतिः स्थिरो भूतः सन् भूतप्रेतपिशाचादिबाधां दूरीक-

रोति ॥ इति ॥ ५ ॥

**६ तदुहैके यजुषा स्थूणा उच्छ्रयन्ति, यजुषा वंशान्, यजुषा छर्दीँषि, यजुषा अभ्रिणं, यजुषा तल्पदेशं, यजुषा वास्तुमध्यं, यजुषाऽग्निविधानम् ॥**

एके गेहनिर्माणसमये एव तत्तत्कार्यं समन्त्रकं कुर्वन्तीत्याह – तदुहैके इत्यादिना । स्थूणाः = स्तम्भान्, वंशान् = वेणुकाण्डान्, छर्दीँषि= आच्छादनानि, अभ्रिणं = भूखननादि साधनस्थापनगेहं, तल्पदेशं = शयनमन्दिरं, वास्तुमध्यं = द्वारं, अग्निविधानं = महानसदेशं ॥ ६ ॥

**७ स यद्युहैवं कुर्यात् – यथा यजुषोच्छ्रयन्ते सदसि ऋक्-सामयजूँषि अथर्वणाङ्गिरसानि मिथुनीभवन्ति, इति तत् यदध्यवस्येत् ॥ यथा मिथुनीभवन्त्यध्यवस्येत् तादृक् तत् । यद्यजुष्कृतं स्यात् । आधयो व्याधयो ग्रहा उपसर्गाश्चाप-हन्युः ॥**

पूर्वसूत्रोक्त विषये दोषमाहानेन । यदि मन्त्रवत् स्थूणोच्छ्रयणादिकं । तत् सदसि = बहुजनसमवाये ऋगादिमिथुनीकरणमिव भवति । तथा सदसि मिथुनीभावोऽन्याय्यः । अतो न युक्तं तत् ॥ किञ्च-तथाकरणे आधयो, व्याधयो, ग्रहाः = भूतप्रेतादयः, उपसर्गाश्च कर्तारं अपहन्युः = पीडयन्ति ॥ क्वचित् आद्यशिलान्यासः, वास्तु-स्थापनादि समन्त्रकं कुर्वन्ति । तत् सूत्रकृदसम्मतम् । यथाऽऽचारं व्यवस्था ॥ ७ ॥

**८ तस्मात्तूष्णीमगारं कारयित्वा, द्वारदेशमलङ्कृत्य, वास्तु-मध्यं विमाय, अभ्रिणं पूरयित्वा, तल्पदेशं कल्पयित्वा ॥**

पूरयित्वा० भूखनन साधन कुद्दालादिनेतिशेषन सर्वममन्त्रकं कार-यित्वा वास्तुशान्ति कुर्यात् ॥ ८ ॥

**९ उत्तरपूर्वदेशेऽगारस्य, ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा, गृह्याग्निमुपसमाधाय, सम्परिस्तीर्य, आग्निमुखात् कृत्वा, पक्वाज्जुहोति––**

"वास्तोष्पते प्रतिजानीहि ÷ इति पुरोऽनुवाक्यामनूच्य "वास्तोष्पते शग्मया ÷ इति याज्यया जुहोति ॥

गृह्याग्निरत्र गेहगतलौकिकाग्निः औपासनाग्निर्वा ॥ अगारस्य उत्तरपूर्वे = ईशानभागे वास्तुहोमः कार्यः ॥ ९ ॥

१० अथाऽऽज्याहुतीरुपजुहोति - " वास्तोष्पतेध्रुवास्थूणा॒ सत्रं सौम्यानाम् । द्रप्सो भेत्ता पुरा शश्वतीनामिन्द्रो मुनीना॒ सखा स्वाहा॰ ॥

" गृह्यं भयं यच्चेद्द्विपास्तु यदुचेच्चतुष्पात्सु भयं यदस्ति । अग्निर्यविष्ठ्यः प्रणुदतु तद्भयं शन्नः प्रजाभ्यः शमु नः पशुभ्यः स्वाहा॰ ॥

" अक्षिरस्पदेऽङ्गचले च यद्भयं यद्वाशिते यदुचेद्द्रुवते । अग्निर्यविष्ठ्यः ÷ ॥

" दुःस्वप्ने पापस्वप्ने च यद्भयं स्वप्नाशने यदमेध्यदर्शने । अग्निर्यविष्ठ्यः ÷ ॥

" वास्तोष्पते प्रतरणोन एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रतिनो जुषस्व स्वाहा॰ ॥

" अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः स्वाहा॰ ॥ इतिषड्भिः ॥

११ स्विष्टकृत्प्रभृति सिद्धम् ॥

इयं षण्मन्त्रवास्तुशान्तिः ॥ ११ ॥

१२ यद्वा नगर-देवतालय-प्रासादगोपुरेषु च त्र्युत्तरपञ्चाशद्वास्तुदेवतानां तत्तद्द्रव्यैः होमं कृत्वा, वास्तुमण्डलेऽगारस्य दिक्षु च बलिं दत्वा, प्रविश्य, ब्राह्मणान् भोजयेत् ॥

कल्पान्तरमाह - यद्वेति । नगरेत्यादि चकारात् वासगेहमपि उक्तं भवति ॥ त्र्युत्तरेति = ब्रह्मादयोऽदित्यन्ताः वास्तुदेवताः त्रिपञ्चा-

शत् । आभ्यो होमः बलिश्चकल्पान्तरे द्रष्टव्यः ।। १२ ।।

१३ अथाग्रेणाग्निं दर्भस्तम्भेषु हुतशेषं निदधाति – " ॐ० नमो रुद्राय वास्तोष्पतये । आयने विद्रावणे । उद्याने यत्परायणे । आवर्तने विवर्तने । योगोपायति तꣳहुवे " इति ।।

पूर्वतनकल्पेऽपि हुतशेषनिधानं अनेनैव मन्त्रेण ।। १३ ।।

१४ स्थालीसंक्षाळनमाज्यशेषमुदकशेषं च पात्र्यां समानीय हुतभस्मनाऽपामार्गरसेन च समुदायुत्य औदुम्बरशाखया, पलाशशाखया, शमीशाखया वा दर्भमुष्टिना वा सर्वतः पर्युक्षन् त्रिःप्रदक्षिणमगारं पर्येति – "त्वं विप्रस्त्वं कवि ÷ रिति ।।

स्थाली = चरुपात्रं ।। उदकशेषं = प्रणीताजलं शिष्टं । पात्र्यां= चमसादौ ।। पर्युक्षन् = सम्यक् प्रोक्षन् त्रिः पर्येति इत्य–न्वयः ।। १४ ।।

१५ रक्षोहणं "कृणुष्वयाजे" त्यनुवाकेन हुत्वा, शन्नोवातः पवतां ÷ इति घोषशान्त्या, गृहं सम्प्रोक्ष्य गहस्य त्रिः सूत्र वेष्टनं कलशोदकैः संप्रोक्षणंच कृत्वा शान्ति कृत्वा प्रविशति ।।

रक्षोहणं अग्नि । कृणुष्वपाजेत्यस्टादशर्चेन सूक्तेन । हुत्वा = आज्यं । शान्ति = घोरोपशमनं वाचयित्वा प्रविशेत् ।। रक्षोहणमित्यनेन राक्षोघ्नहोमः सूचितः ।। १५ ।।

१६ अन्नꣳसꣳस्कृत्य ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा "शिवं वास्तु शिवं वास्तु" इति च वाचयन् अगारं लिखेत् ।।

आशिषो वाचयित्वा = पुण्याहं वाचयित्वा, तच्च कृतगृहप्रवेशाङ्गं । अगारं = गृहे "शिवं वास्तु" इत्येवं लिखेत् । वाचयन् इत्यनेन तथा विप्रैः वाचनं कारयेदित्यर्थो लभ्यते ।। १६ ।।

१७ वास्तुशमनं व्याख्यातम् ।।

॥ इति तृतीयप्रश्ने नवमः खण्डः ॥

## * दशमः खण्डः *

### ( १८ अद्भुतशान्तिः )

गृहनिर्माणप्रवेशप्रसङ्गेन उत्पातानां वास्तुवैगुण्यहेतुत्वात् तन्निरसनस्य च प्रकृतत्वाच्च अद्भुतशान्ति प्रक्रमते – यदीत्यादिना—

१ यद्यगारे स्थूणा विरोहेत्, कपोतो वाऽगारमध्येऽधिवसेत्, वायसो वा गृहं प्रविशेत्, गौर्वाऽगां धयेत्, गौरात्मानं प्रतिधयेत् अनड्वान्वा दिवमुल्लिखेत्, अनग्नौ वा धूमो जायेत, अनग्नौ वा दीप्येत, अगारे मधु जायेत, वल्मीकं वा जायेत, निर्यासंवोपजायेत, छत्राकं वोपजायेत, मण्डूको वाऽभ्रिणे वाश्येत, स्वप्ने वा दन्तपतने, श्वानो गृहमारोहेत्, श्वानप्रसूतौ वा, सर्पो वा गृहपतिं जायां वोपतपद्विन्देत, अन्येषु वा दिव्यभौमान्तरिक्षोत्पातेषु ॥

गौः अन्यां गां धयेत् = स्तनं पिबेत् । स्वस्यैव वा । दिवं = आकाशं उल्लिखेत् = मुखेन लेखयेत् । निर्यासः = भूरसः । छत्राकं = वर्तुलाकारं श्वेतं वस्तु । अभ्रिणे = गेहमध्ये । उपतपत् = समीपे सञ्चरन् भयमुत्पादयेत् । दिव्यः उत्पातः-अशनि-उल्कापातादिः । भौमः = कूपे पूर्णो घटः पूर्वंनिमग्नः निर्निमित्तं कदाचित् उपरि उन्मज्जति, तादृशः । अन्तरिक्षोत्पातः = अकालेपर्जन्यगर्जनादिः ॥ १ ॥

२ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा – देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति – "यत इन्द्र भयामहे ÷ स्वस्तिदा विशस्पति ÷ रिति द्वाभ्याम् ॥

३ अथ समिदाज्यचर्वाज्यानि जुहोति – "शन्न इन्द्राग्नी

भवतां ÷ इति पञ्चदशऋग्भिः ॥

४ अथाऽऽज्याहुतीरुपजुहोति – "वास्तोष्पते प्रतिजानीहि÷ वास्तोष्पते शग्मया ÷, शन्नोदेवीरभिष्टये ÷ " इन्द्राग्नी रोचनादिवः ÷, कयानश्चित्रआभुवत् ÷, " को अद्ययुंक्ते ÷"भवतं नः समनसौ÷ इति सप्त ॥

५ स्विष्टकृत्प्रभृति सिद्धम् ॥

६ अग्रेणाग्निं शमीपर्णेषु हुतशेषं निदधाति - " शन्नो देवीः ÷ इति ॥

अतः इयमपि प्रहुतानुकृतिरेव ॥ ६ ॥

७ अथ दक्षिणां ददाति - धेनुमृषभमनड्वाहं हिरण्यं कांस्यं वासो वेति ॥

वा शब्दश्चार्थः ॥ यथाशक्ति वा ॥ ७ ॥

८ स्थाली संक्षाळनमाज्यशेषमुदकशेषं च पात्र्यामानीय तेषूत्पातस्थानेषु निनयेत् प्रोक्षेद्वा - "तच्छंयोरावृणीमहे ÷ इति ॥

९ अन्नꣳसꣳस्कृत्य ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा "शिवं वास्तु ÷ इति च वाचयति ॥

१० अद्भुतो व्याख्यातः ॥

अद्भुतशब्दः आश्चर्ये वर्तते लोके । यन्नकदापि भावि, तद्भावे, जनानामत्याश्चर्यं भवति, तच्च अशान्ति सूचकं, अतः शान्तिः कार्या । ॥ १० ॥

॥ इति तृतीयप्रश्ने दशमः खण्डः ॥

## * एकादशः खण्डः *

### ( १९ ग्रामोत्पातशान्तिः )

गेहोत्पातप्रसङ्गेन गेहसमूहात्मकग्रामस्यापि उत्पातशान्तिं प्रक्रमते - अथेति "इयमपि प्रहुतानुकृतिः ॥

१ अथातो ग्रामोत्पातशान्ति व्याख्यास्यामः –

२ अग्निदाहे, व्याघ्रादिभिरभिभूते, सृगालपीडने, ग्रामान्तश्चाण्डालाध्यवसिते, ग्रामे स्थूणारोहणे, मधुन उपवेशने वल्मीकपुष्करोत्पन्ने, देवगात्रस्वेदकम्पनयोः, ज्वराद्यभिभवेन बहुब्राह्मणमरणे, ग्राममध्ये श्मशाने वा बस्युपीडने, रात्रौ तटाकसेतुभङ्गे, जले विवर्णे वा, अशनिपाते, चिरकालशून्यग्रामप्रवेशे, तेष्वन्येषु चोत्पातेषु शान्ति विदधीरन् ॥

कस्यचिद्ग्रामस्य कोशादन्तः एषूत्पातेषु ग्रामीणाः मिलित्वा शान्ति कुर्युः ॥ अत एव विदधीरन्नित्युक्तम् ॥ स्थूणायाः=शुष्कवृक्षस्याङ्कुरेसति ॥ मधुनः=ज्येष्ठमधुकर कुलस्य ग्रामे उपवेशने । वल्मीकपुष्करं=वल्मीके जायमानं पद्माकारं छत्रं । चिरकालपर्यन्तं जनैः परित्यक्तग्रामस्य प्रवेशने = प्रविश्य वासेच्छायाम् ॥ २ ॥

३ शुभवारे शुभनक्षत्रे शुभलग्ने विष्णोः स्नपनार्थं महादेवाभिषेकार्थं द्वौ द्वौ ब्राह्मणौ कल्पयेत् ॥

४ नवग्रहशान्त्यर्थं चतुरो ब्राह्मणान्

५ तथैव संख्यया शान्तिहोमार्थं च कल्पयेत् ॥

तथैव संख्यया = चतुः संख्यया ॥ ५ ॥

६ ग्रामस्योत्तरपूर्वदेशे, देवागारे, चतुष्पथे वा शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य, तिलसर्षपलाजैः गन्धपुष्पाक्षतैश्चावकीर्य, स्थण्डिलं कल्पयित्वा कुम्भान् स्थापयेत् ॥

गोचर्ममात्रं = "अष्टाङ्गुलीभिः प्रादेशं, प्रादेशैकेन तत्पदं ॥ पदैर्द्वादशभिश्चैव "गोचर्म,, ऋषिभिः स्मृतम् ,, इति कारिकोक्तम् ॥ प्रथमस्थण्डिलपदं स्थलं वक्ति । द्वितीयन्तु होममण्डलं वक्ति ॥ कुम्भाः अर्च्यदेवतासमसंख्या ज्ञेयाः ॥ ६ ॥

७ अथाग्निमुपसमाधाय, सम्परिस्तीर्य, आप्रणीताभ्यः

कृत्वा, उपोत्थायाग्रेणाग्निं देवता आवाहयति व्याहृतिभिः "यज्ञपुरुषमावाहयामि, इति मध्ये ॥ दक्षिणतो ब्रह्माणं०, उत्तरतस्त्र्यम्बकं, अग्रे वास्तुपुरुषं, दिक्षु इन्द्रादीन् ॥

दिक्षु अष्टसु ॥ ७ ॥

८ पुरुषसूक्तेन विष्णुं। ब्रह्मसूक्तेन ब्रह्माणं। रुद्रसूक्तेन त्र्यम्बकं चाभ्यर्च्य, अन्येषां नाममन्त्रैः ॥

९ अपरेणाग्निं प्राङ्मुख उपविश्याग्निमुखात्कृत्वा पक्वा ज्जुहोति – "वास्तोष्पते ÷" वास्तोष्पते = इति द्वाभ्याम् ॥

१० तेनैव शमीसमिध अष्टोत्तरसहस्रं जुहुयात् ॥

तेनैव = ताभ्यां मन्त्राभ्याम् ॥ १० ॥

११ "वास्तोष्पते प्रतरणोन ÷ इत्यष्टोत्तरशतमन्नाहुती-र्जुहुयात् ॥

१२ "अमीवहा वास्तोष्पते ÷ इत्यष्टोत्तरशतमाज्याहुती-र्जुहुयात् ॥

१३ मृगारेष्टिवत् "अꣳहोमुचे" इत्यभिज्ञैः प्रत्यचम् ॥ "यावामिन्द्रावरुणा ÷ इति द्वादश। "पवमानानुवाकेन प्रत्यृचम्। पुरुषसूक्तेन ब्रह्मसूक्तेन रुद्रसूक्तेन च प्रत्यृचम्। "यतइन्द्र ÷ "स्वस्तिदा ÷ इति द्वाभ्याम्। "अग्निरायु-ष्मान् ÷ इति पञ्चभिः। "अग्नेनये ÷ ति षड्भिः। "योस्य कौष्ठ्यः ÷ "एषते निर्ऋते भाग ÷ इति च। "इमं मे वरुण ÷ "तत्वायामि ÷ इति द्वाभ्याम्। "समु द्रायत्वा वातायस्वाहा ÷ इति त्रयोदशभिः। आप्यायस्व ÷ "सन्ते ÷ इति द्वाभ्यां। "ईशानः सर्वविद्यानां ÷-इति। "त्र्यम्बक ÷ मिति च प्रत्येकमाज्याहुतीर्जुहुयात् ॥

मृगारेष्टिः श्रौते उक्ता। तत्रापि "अꣳहोमुचे-मुञ्चत्वंहस इति चिह्नितैर्मन्त्रैहोमः, तद्वदत्रापीति ज्ञेयम्।" मुञ्चतमꣳहसः, इत्येवमादिषु-तस्य अभिज्ञा वर्तते। तथाच "अग्नेर्मन्वे प्रथमस्य ÷ इत्यनुवाकेन प्रत्यृचं होमः॥ अग्नेर्मन्वे ÷ इत्यनुवाकस्य मृगार संज्ञा॥ १३॥

१४ "आसत्येनेत्यादि नवग्रहमन्त्रैः आज्यं हुत्वा,

१५ स्विस्टकृत्प्रभृति सिद्धम्॥

१६ अग्रेणाग्निं शमीपर्णेषु हुतशेषं निदधाति –
"यो रुद्रो अग्नौ ÷ इति॥

१७ अथ देवताभ्यो हविर्निवेदयेत्॥
आवाहिताभ्यः ।।१७॥

१८ अथोपतिष्ठते –

"हेतयो नामस्थ ÷ इतिषड्भिः यथाक्रमं दिश उपस्थाय, पुण्याहं वाचयित्वा उदकुम्भमन्वारभ्य पञ्चशान्ति पठित्वा हुतशेषं आज्यशेषं च पूर्णकुम्भे निक्षिप्य उदुम्बरशाखया शमीशाखया वा दर्भमुष्टिना वा "शिवं शिवं,, इति ब्रुवन्तः शन्नोदेवीः ÷ इति च शाकुनेन सूक्तेन च ग्रामं त्रिः प्रदक्षिणं परिषिच्य ब्राह्मणेभ्यो भूरिदक्षिणां दद्युः॥

यथाक्रमं = प्राच्यादिक्रमेण। पञ्च शान्ति = "भद्रं कर्णेभिः ÷ "नमोब्रह्मणेनमो ÷, "तच्छंयोरावृणीमहे ÷, "नमो वाचेया ÷, "शन्नोवातः पवतां ÷, इति पञ्चशान्तिः। शाकुनेन = "कनिक्रदत् ÷ इति सूक्तेन ऋग्वेदप्रसिद्धेन षडृचेन॥ १८॥

१९ एवं सप्ताहं द्वादशाहं वा कुर्यात्॥

उत्पातानां गुरुलघुभावेन विकल्पः ॥१९॥

२० समस्तोत्पातशान्तिरित्याह भगवान् बोधायनः॥

इति तृतीयप्रश्ने एकादशः खण्डः॥

* द्वादशः खण्डः *

( २० अशनिपाते विशेषः )

१ अथाशनिपाते जानुदघ्नं भूमिं खात्वा, मृदमुद्धृत्य, अद्भिः प्रोक्ष्य, तत्र सहस्रपत्राकारं पङ्कजं लिखित्वा,

अशनिपातेतु उक्तापेक्षया विशेषकर्तव्यं दर्शयति ॥ जानुदघ्नं = जानु प्रमाणं । अशनिपातक्षेत्रे इति शेषः । सहस्रदलं कमलं तत्र विलिख्य ॥ १ ॥

२ ब्राह्मणानन्नेन परिविष्य, पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

३ खातस्य पश्चात् स्थण्डिलेऽग्निमुपसमाधाय, आग्निमुखात्कृत्वा, "शन्नइन्द्राग्नी ÷ इत्यादि त्रिभिराज्यं हुत्वा, "सप्रत्नथा सहसा ÷ इति सूक्तेन चरुणा प्रत्यृचं जुहोति ॥

"सप्रत्नथा ÷ इति सूक्तं ऋक्संहितायाम् ॥ ३ ॥

४ "स्वस्तिनो मिमीतां ÷ इति स्वस्त्यात्रेयं पठित्वा ब्राह्मणान् सम्पूज्याशिषो वाचयीत ।

५ चरुं विद्यावन्तं ब्राह्मणं भोजयेत् ॥

६ दग्धभूमिसमं स्वर्णं ब्राह्मणाय जीवनायालं इति ददाति - इत्याह भगवान् बोधायनः ॥

समं = समतोलं ॥ अथवा जीवनायालं = पर्याप्तं दद्युः ॥ एतावान् विशेषः । अवशिष्टं पूर्वखण्डोक्तं कुर्युः ॥ ६ ॥

॥ तृतीयप्रश्ने द्वादशः खण्डः ॥

* त्रयोदशः खण्डः *

( २१ आयुष्यचरुः )

अथाऽऽहुतस्यानुकृतिं प्रस्तौति - अथेत्यादिना ॥

अत्रायुष्यचरुहोमे होमो बलिः प्राशनंच वर्तन्ते ॥

१ अथाऽऽहुतस्यानुकृतिरायुष्यचरुः ॥

आयुरभिवृद्धये प्राशनार्थं पायसात्मकश्चरुः संस्क्रियतेऽस्मिन् कर्मणि इत्यत आयुष्यचरुरित्यभिधानं कर्म ॥ १ ॥

२ संवत्सरे संवत्सरे, षट्सु षट्सु मासेषु, चतुर्षु चतुर्षु वा, ऋतौ ऋतौ, मासि मासि, कुमारस्य जन्मनक्षत्रे क्रियेत ॥

कुमारस्य जन्मनक्षत्रं मुख्यः कालः। शक्त्यभिप्रायेण संवत्सरादि विकल्पः ॥ कुमारस्येत्यनेन अयं होमः बालानां आयुरभिवृद्धयेऽतीवोपयुक्त इति ज्ञापितम् ॥ २ ॥

३ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा देवयजनोल्लेखनादि आप्रणीताभ्यः कृत्वा व्रीहीन निर्वपति – "देवस्यत्वेत्यनुद्रुत्य "अग्नये आयुष्मते जुष्टं निर्वपामि,, इति ॥ "तूष्णीं वा ॥

४ अथान्यान् निर्वपति – "प्राणाय जुष्टं निर्वपामि ,,इति।

५ तानभ्युक्ष्य अवहत्य त्रिष्फलीकृत्य त्रिःप्रक्षाळ्य निदधाति।

व्रीहिनिर्वापपक्षे – अभ्युक्षणादि कार्यम्। अवहत्य = उलूखले मुसलपातनं, अवहननं, तत्कृत्वा। त्रिष्फलीकृत्य = त्रिवारं तुषनिर्मोकं विधाय। निदधाति ॥ ५ ॥

६ तण्डुलान् वा निर्वपति ॥

७ तानभ्युक्ष्य निदधाति ॥ तण्डुलनिर्वापपक्षमाह ॥ ७ ॥

८ अथ तिरःपवित्रं स्थाल्यां अपः पयो वाऽऽनीय अधिश्रित्य तिरःपवित्रं तण्डुलानावपति ॥

तिरः = तिर्यङ्मुखं। अपः = जलानि। पयः = दुग्धं। वाशब्दश्चार्थे। आयुष्मदग्नये चरुः। प्राणाय पायसं च कार्यम् ॥ स्पष्टमन्यत् ॥ स्थाल्यां – पृथगित्यादिः ॥ ८ ॥

९ अथाज्यं निरुप्याधिश्रयति। उभयं पर्यग्निकृत्वा स्रुवं स्रुचं मेक्षणं च सम्मार्ष्टि ॥ स्रुचं = दर्वीं ॥

१० अथ चरुं पायसं च श्रपयित्वाऽभिघार्य उदञ्चमुद्वास्य

प्रतिष्ठितमभिघारयति ॥

११ एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः ॥

पूर्वमुक्तं स्मारयति, निर्वापाद्यधिश्रयणान्तं समानमित्यर्थः ॥ ११ ॥

१२ परिधानप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति — "आयुष्टे विश्वतोदधाद ÷ ति पुरोनुवाक्यामनूच्य "आयुर्दा अग्ने हविषो ÷ इति याज्यया जुहुयात् ॥

१३ अथाऽऽज्याहुतीरुपजुहोति — अन्तरेणाग्निमाज्यस्थालीं च स्थालीपाकं च निधाय तत्राष्टसहस्रं सम्पाताभिहुतं करोति ॥

स्थालीपाकं = पायसम् ॥ अग्न्याज्यस्थाल्योर्मध्ये परिस्तराद्बहिः पायसं निधाय तत्र होमशेषं आज्यं सम्पातयेत् । तदपि अष्टसहस्रं सम्पद्यते ॥ १३ ॥

१४ "योब्रह्मा ब्रह्मण उज्जभार ÷ इत्यष्टर्चं घृतसूक्तं" आवर्तयेत् षड्विंशतिशतकृत्वः, तदाऽष्टसहस्रं सम्पद्यते ॥

षड्विंशत्युत्तरशतवार अष्टर्चंघृनसूक्तमावर्तयेत् । तेन अष्टोत्तर-सहस्राहुतयो भवन्ति ॥ इदं घृतसूक्तं - सूक्तप्रश्ने वक्ष्यति ॥ १४ ॥

१५ इतरस्मात् पक्वात् सौविष्टकृतं जुहोति ॥

पायसादन्येन चरुणा स्विष्टकृद्धोमः कार्यः ॥ १५ ॥

१६ "यो ब्रह्मा ÷ ऋताषाड् ÷ अयं पुरो ÷ समीचीनामासि ÷ हेतयो नामस्थ ÷ इत्येतैः सानुषङ्गैःजपहोमबलिं च विहरेत् ॥

बलिरपि चरुणा न तु पायसेन ॥ १६ ॥

१७ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ॥

१८ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति- "मानो-महान्तं ÷ मानस्तोके ÷ इति द्वाभ्याम् ॥

१९ अपरेणाग्नि प्राङ्मुख उपविश्य वाग्यतः स्थालीपाकं

सगणः प्राश्नाति – "आयुरसि विश्वायुरसि ÷ इति ॥
स्थालीपाकं = पायसं ॥ १९ ॥

२० प्राश्याप आचम्य जठरमभिमृशति – "यत इन्द्र ÷ स्वस्तिदा विशस्पतिरिति द्वाभ्याम् ॥ अप उपस्पृशेत् ॥

२१ कुमाराणां स्त्रीणां वा ग्रहगृहीतानां ज्वरगृहीतानां भूतोपसृष्टानां आयुष्ट्वेन घृतसूक्तेन अहरहः स्वस्त्ययनार्थं स्वाध्यायमधीयीत, एतैरेव मन्त्रैराज्याहुतीर्जुहुयात्, एतैरेव बलीन् हरेत्, अगदो हैव भवति ॥

पिशाचादिभिः पीडितानां, ज्वरपीडितानां, भूतैः गणविशेषैः उपसृष्टानां एषां कुमाराणामित्यादिनान्वयः ॥ आयुष्ट्वेन = आयुर्वर्धकेन । अहरहः प्रतिदिनं स्वस्त्ययनार्थं = आरोग्याद्यभिवृद्ध्यर्थं । स्वाध्यायं = घृतसूक्तपठनं, अधीयीत = कुर्वीत ॥ केवलं सदा तन्मन्त्रपाठनेनापि आयुराद्यभिवृद्धिर्भवतीति भावः "यं यं क्रतुमधीते ,, इति न्यायात् "अगदः = नीरोगी ॥ २१ ॥

२२ तदेतदृद्धमयनम् ॥

तदेतत् – इति प्रत्यक्षत्वं वक्ति । तादृशमिदं आयुष्यचर्वाख्यं अयनं =कर्म । ऋद्धं = समृद्धं फलं ददाति - नात्र संशय इत्यर्थः ॥ २२ ॥

२३ भूतोपसृष्टानां राष्ट्रभृतः पञ्चचोडाः, सर्पाहुतीः, गन्धर्वाहुतीश्च अहरहःस्वस्त्ययनार्थं स्वाध्यायमधीयीत । एतैरेवाहुतीर्जुहुयात् । एतैरेव बलीन् हरेत् । अगदो हैव भवति ॥

घृतसूक्तोक्तमतिदिशति – भूतेत्यादिना । राष्ट्रभृतः = ऋताषाड् ÷ इत्यादि द्वाविंशतिमन्त्रान्; पञ्चचोडाः = अयं पुरोहरिकेशः इति पञ्च; सर्पाहुतीः = समीचीनामासि ÷ इत्यादिषट्; गन्धर्वाऽऽहुतीः =हेनयोनामस्थ इत्यादि षट् ॥ शिष्टोभागः व्याख्यापूर्वः ॥ २३ ॥

२४ हुतः प्रहुत आहुत अन्ये होमाः, बलिहरणानि, अनु-

कृतीनि, अभ्यर्चनानि, आश्रमाः अनुकृतयःसᳬश्रवा-इति ।
एतद्धुतादि सङ्कीर्तनमुत्तरार्थम् । अभ्यर्चनानि – अतिथि सत्कारादीनि उक्तानि वक्ष्यमाणानि च । आश्रमाः = वर्णाश्रम धर्माः, एवं सर्वे सᳬश्रवाः = प्रसिद्धाः, सम्यक सर्वैः श्रूयन्ते इति संश्रवाः ॥ २४ ॥

॥ इति तृतीयप्रश्ने त्रयोदशः खण्डः ॥

## * चतुर्दशः खण्डः *

### ( २२ विरूपाक्षपूजा )

१ शूलगवानुकृतिः अष्टमी पूजा ॥
इयं विरूपाक्षपूजेति प्रसिद्धा ॥ १ ॥

२ अथातोऽर्धमासेऽर्धमासेऽष्टम्यां ब्राह्मणा ब्रह्मचारिणश्च-स्त्रियश्चाहरुपवसेयुः ॥
अर्धमासे इति द्विर्वचनं सकलपक्षान् वक्ति । अनेनास्या नित्यत्वं प्रतीयते ॥ २ ॥

३ अथ प्रदोषे "रुद्रं विरूपाक्षं सपत्नीकं ससुतं सगणं सपार्षतमावाहयामि" इति व्याहृतिभिरावाह्य, आसनादि कल्पयित्वा, गन्धपुष्पधूपदीपैरभ्यर्च्य, प्रतिपुरुषं पैष्टिकान् दीपान् चतुरोऽष्टौ वा देवस्याऽऽयतने प्रतिदिशं प्रद्योतयति "उद्दीप्यस्व जातवेदः ÷ मानोहिᳬसीः इति द्वाभ्याम् । "हव्यवाहमभि ÷ स्विष्टमग्ने ÷ इति द्वाभ्याञ्च ।
प्रतिपुरुषं = एकैकस्य कर्तुः कृते । पैष्टिकान् — डमर्वाकृति पिष्ट विकारपात्रे, दीपान् ॥ ३ ॥

४ अथ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धि-मिति वाचयीत ॥

५ अथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा, ॥

६ "देवस्यत्वेत्यनुद्रुत्य "ईशानाय जुष्टं निर्वपामि" इति तण्डुलान्निर्वपति, त्रिर्मन्त्रेण तूष्णीं सकृत् ॥

७ तानभ्युक्ष्य त्रिः प्रक्षाल्य निदधाति ॥

८ तिरःपवित्रं चरुस्थाल्यां अप आनीयाधिश्रित्य, तिरः पवित्रं तण्डुलानावपति ॥ अधिश्रित्य=अग्नाविति शेषः ॥ ८ ॥

९ अथाज्यं निर्वपति, अधिश्रयति, उभयं पर्यग्निकृत्वा, स्रुवं स्रुचं दर्वीं मेक्षणं च सम्मार्ष्टि ॥

१० अथैतं चरुं श्रपयित्वाऽभिघार्य उदञ्चमुद्वास्य, प्रतिष्ठितमभिघारयति ॥ एतं = चरुं

११ परिधानप्रभृति आग्निमुखात् कृत्वाऽग्रेणाग्निं देवतमर्चयति– "आपोहिष्ठेति तिसृभिः, हिरण्यवर्णा इति चतसृभिः, पवमानः सुवर्जन इत्यनुवाकेन, "ब्रह्मजज्ञानं, कद्रुद्राय, "त्वरितरुद्रेण च तथा वामदेव्यर्चा, "यजुः पवित्रैश्च मार्जयति ॥

त्वरितरुद्रः = "यो रुद्रो अग्नौ ÷ इति मन्त्रः । वामदेव्यर्चा = "कनाश्चित्र आभुवत् ÷ इत्यनया । यजुः पवित्रैः=संहितादिषूक्तैः मन्त्रगुणैः पवित्रताधायकैः । तरत्समन्दीत्यादि सूक्तैरित्यर्थः ॥ ११ ॥

१२ अथाद्भिः तर्पयति – सद्योजातं तर्पयामि, वामदेवं, अघोरं, तत्पुरुषं, ईशानं तर्पयामीति । शिवं तर्पयामि विरूपाक्षं तर्पयामि, इति च ॥

१३ व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य, वस्त्रगन्धाक्षत धूपदीपनैवेद्यताम्बूलच्छत्रचामर दर्पण व्यजननीराजन मन्त्रपुष्पादिभिरर्चयित्वा,

१४ पक्वाज्जुहोति – "सहस्राणि सहस्रधा,, इतिपुरोनुवाक्यामनूच्य "ईशानं त्वा भुवनानामभिः,, इति याज्यया जुहोति ॥

१५ अथालोड्य चरुं मेक्षणेनोपघातं आज्याहुतिपुरःसरं पूर्वार्धे जुहोति– " भवाय देवाय स्वाहा, इत्यष्टभिः ॥

मेक्षणेन आलोड्य, मेक्षणेनोपघातं = विभज्य गृहीत्वा । पूर्वार्धेऽग्नौ प्रथमाज्याहुतिं ततश्चरुं हुनेत् ॥ उभयत्रापि मन्त्रः स एव ॥ १५ ॥

१६ अथ मध्ये जुहोति – " भवस्य देवस्य पत्न्यै स्वाहा, इत्यष्टौ ।

१७ अथापरार्धे जुहोति " भवस्य देवस्य सुताय स्वाहा, इत्यष्टौ ,,

१८ अथाज्याहुतीरुपजुहोति – " इमां रुद्राय स्थिरधन्वने गिरः,, इति षड्भिरनुच्छन्दसम् ॥

" परिणो रुद्रस्य हेतिः,, इति च षड्भिरनुच्छन्दसम् ॥

" मानो महान्तमुत, मानस्तोके तनये ,, इति द्वाभ्याम् ॥

" वास्तोष्पते प्रतिजानीहि, वास्तोष्पते शग्मया ,, इति द्वाभ्याम् ॥

" आर्द्रया रुद्रः प्रथमान, हेतीरुद्रस्य ,, इति द्वाभ्याम् ॥

" ये भूतानामधिपतयो त्रि꣡ꣳशस्त्रयश्च ,, इति द्वाभ्याम् ॥

१९ एतैरेवमन्त्रैः समिधोऽभ्यादधाति । विज्ञायते च वैष्णवा वै वनस्पतयः, विष्णोः सायुज्यꣳ सलोकतामाप्नोतीति ॥

शिव विष्णवोः भेदभावनामपनुदन्ति आचार्याः ॥ १९ ॥

२० रौद्रीभिर्ऋग्यजुःसामाथर्वस्तुतिभिः स्तुन्वन्ति,

२१ ब्रह्म वै ब्राह्मणः " ब्रह्मणः सायुज्यंꣳ सलोकतामाप्नोति – इति ॥

२२ अथ यः सौम्यः, सौम्यो हि ब्राह्मणः, रुद्रो वा

यदग्निः । आग्नेयो वै ब्राह्मणः, शिवस्य सायुज्यꣳसलोकता माप्नोति इति ॥

त्रीण्यपि सूत्राण्यर्थवादात्मकानि ॥ २२ ॥

२३ स्विष्टकृत्प्रभृति सिद्धम् ॥

२४ व्याहृतिभिः विरूपाक्षमुद्वासयेत् ॥

विरूपाक्षमिति, इदमुपलक्षणं – आवाहितदेवतानाम् ॥ २४ ॥

२५ अन्नशेषं सगणः प्राश्नाति – "यो रुद्रो अग्नौ" – इति

२६ प्राश्याप आचम्य जठरमभिमृशति - यतइन्द्र, स्वस्ति दा – इति द्वाभ्याम् ॥

२७ एवमेव सर्वप्रदोषेषु कुर्यात् ॥

अष्टमीषु सर्वासु प्रदोषकाले कुर्यादिति नित्यत्वमुक्तम् ॥ अस्य काम्यत्वमपि । उत्तरसूत्रेण तथोक्तत्वात् ॥ २७ ॥

२८ सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां, अपपुनर्मृत्युं जयतीत्याह भगवान् बोधायनः ॥

इति गृह्यसूत्रे तृतीयप्रश्ने चतुर्दशः खण्डः

॥ * पञ्चदशः खण्डः * ॥

२३ उत्सर्गबलिः (उत्सर्जनम्)

१ अथ बलिहरणानुकृतिरुत्सर्गबलिः ॥

प्रतिवर्षं क्रियमाणं उत्सर्जनं बलिप्रधानम् ॥ अत एव उत्सर्गबलिरिति नाम निर्दिष्टम् ॥ १ ॥

२ तैष्यां पौर्णमास्यां क्रियेत अपि वा माघ्याम् ॥

इदं पुष्यमाघयोः पौर्णमास्यां (अन्यतरस्यां) कर्तव्यम् ॥ परमिदानीं बहोःकालादारभ्य श्रावण्यां उपाकर्मणः प्राक् क्रियते । तत्र कारणं कृषिकर्माऽकरणमिति स्पष्टमेव ॥ बौधायनानां उत्सर्गहोमो नास्ति ॥ २ ॥

३ सहान्तेवासिभिः ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रापः सुतीर्थ्याः सुखावगाहाः स्रवन्त्योऽवतीरिण्यः शङ्खिन्यः, तासामन्तं गत्वा स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिः वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्मार्जयित्वा ॥

सुतीर्थ्याः, तीर्थाय योग्याः, पवित्रा इति यावत् । अवतीरिण्यः= अवतरणार्थं कृतसोपानाः, सुखेनावगाहा = अवगाह्याः पाषाणकण्टकादिरहिताः, स्रवन्त्यः - मन्दप्रवाहवत्यः नद्यः । अनेन प्रवाहरहिता वर्ज्याः इति सूचयति । शङ्खिन्यः शुक्तिमत्यः, समुद्रगामिन्यो वा सरितः, शङ्खिनं = समुद्रं नयन्ति = गच्छनतीति शङ्खिन्यः ॥ प्रसन्नसलिला वा ॥ ३ ॥

४ तज्जलगतोऽघमर्षणेन त्रीन् प्राणायामान्धारयित्वा उत्तीर्य वासःपीडयित्वा अन्यदहृतं वासःपरिधाय आचामेत् ॥

अघमर्षणसूक्तं तै० आ० " ऋतं च सत्यंचेत्यादि प्रसिद्धम् ॥ ४ ॥

५ अपां समीपे चत्वारि स्थण्डिलानि कृत्वा, दर्भान् अन्यो-न्यस्मै सम्प्रदाय मध्यम मण्डले – दर्भैरासनानि कल्पयति-

मध्ये देवमंडलं, पञ्चत्रिंशत्कोष्टम् ॥ तत्समीपे एवैकं कोष्ठम् ॥ तदुत्तरे ऋषिमण्डलं, एकोनपञ्चाशत्कोष्ठं । तृतीयं दक्षिणं वैशम्पायनादि पितृमण्डलं, एकविंशति कोष्ठम् । तद्दक्षिणे स्व-स्व पितॄणां मण्डलं चतुर्थं, द्वादशकोष्ठम् ॥ एवंचत्वारि ॥ ५ ॥

" ब्रह्मणे कल्पयामि । प्रजापतये० । बृहस्पतये० । अग्नये० । वायवे० । सूर्याय० । चद्रमसे० । नक्षत्रेभ्यः० । ऋतुभ्यः० । संवत्सराय० । इन्द्रायराज्ञे० । सोमायराज्ञे० । यमायराज्ञे० । वरुणायराज्ञे० । वैश्रवणायराज्ञे० । वसुभ्यः० । रुद्रेभ्यः० । आदित्येभ्यः० । विश्वेभ्यो देवेभ्यः० ।

साध्येभ्यो देवेभ्यः० । सर्वेभ्यो देवेभ्यः० । सर्वाभ्यो देवताभ्यः० मरुद्भ्यः० ऋभुभ्यः० भृगुभ्यः० । अथर्वभ्यः० । अङ्गिरोभ्यः० । विश्वामित्राय० । जमदग्नये० । भरद्वाजाय० । गौतमाय० । अत्रये० । वसिष्ठाय० । कश्यपाय० अरुन्धत्यै० । इति ॥

एते पञ्चत्रिंशद्देवताः

६ तद्दक्षिणतोऽगस्त्याय कल्पयामि - इत्येकम् ॥

७ अथोत्तरतः ऋषिमण्डले - निवीतिनः —

"कृष्णद्वैपायनाय कल्पयामि । जातूकर्ण्याय० । तरुक्षाय० तृणबिन्दवे० । सोमशुष्मिणे० । सोमशुष्मायणाय० । वाजिने० । वाजश्रवसे० । बृहदुक्थाय० । वर्मिणे० । सनत्कुमाराय० । भरद्वाजाय० । वामदेवाय० । वाजरत्नाय० । हर्यश्वाय० । उदमाय० । ऋणञ्जयाय० । अनृणञ्जयाय० । कृतञ्जयाय० । धनञ्जयाय० । सत्यञ्जयाय० । बभ्रवे० । त्रियक्षणाय० । त्रियक्षृषये० । त्रिधातवे० । अश्वज्ञाय० । पराशराय० । इन्द्राय० । मृत्यवे० । कर्त्रे० । विकर्त्रे० । सुकर्त्रे० । त्वष्ट्रे० । धात्रे० । विधात्रे० । सुधात्रे० । सुश्रवसे० । सत्यश्रवसे० । सवित्रे० । सावित्र्यै० । छन्दोभ्यः० । ऋग्वेदाय० । यजुर्वेदाय० । सामवेदाय० । अथर्ववेदाय० । अथर्वाङ्गिरोभ्यः० । इतिहासपुराणेभ्यः० । - सर्वदेवजनेभ्यः । सर्वभूतेभ्यः कल्पयामि - इति ॥

उत्तरतः=देवमण्डलात् उत्तरदिशि । एते एकोनपञ्चाशदृषयः ॥ ७ ॥

८ अथ दक्षिणतः प्राचीनावीतिनः —

"वैशम्पायनाय कल्पयामि । पलिगवे । तित्तिरये० । उखाय० । उख्याय० । आत्रेयाय० । पदकाराय० । कौण्डिन्याय० ।

वृत्तिकाराय० । कण्वाय० । बोधायनाय० । प्रवचनका- राय० । आपस्तम्बाय । सूत्रकाराय० । सत्याषाढाय० । हिरण्यकेशाय० । आचार्येभ्यः० । ऊर्ध्वरेतोभ्यः० । वान प्रस्थेभ्यः० । वंशस्थेभ्यः० । एकपत्निभ्यः० । इति ॥

दक्षिणतः = देवमण्डलाद्दक्षिणे । एते एकोनविंशतिः । अत्र बौधायना पस्तम्बसत्याषाढादि ऋषयः पितरः । - एतत्सूत्रकर्तृबोधायनाद्य पेक्षया प्राचीनतमाः ॥ ८ ॥

९ अथ यथास्वं – पितृभ्यः कल्पयामि । पितामहेभ्यः० । प्रपितामहेभ्यः० । मातृभ्यः० । पितामहीभ्यः० । प्रपिता महीभ्यः० । मातामहेभ्यः० । मातुः पितामहेभ्यः० । मातुः प्रपितामहेभ्यः० । मातामहीभ्यः० । मातुः पितामहीभ्यः० । मातुः प्रपितामहीभ्यः० । इति ॥

दक्षिणतः प्राचीनावीतिन इत्युभयमनुवर्तते । यथास्वं इत्यनेन अधिकारिणः सर्वे स्वस्वपितृणामेवासनादि कल्पयेयुः ॥ ९ ॥

१० एतैरेव नामधेयैः अर्चयति ॥ आवाहन - पाद्य अर्घ्य आचमन – स्नान – वस्त्रो – पवीत गन्धपुष्प - धूपदीपैः "अमुष्मै नमोऽमुष्मै नमः„ इति ॥

११ त्रिवृताऽन्नेन "अमुष्मै स्वाहा अमुष्मै स्वाहा„ इति बलिं॰हरति ।

"भक्ष्यं भोज्यं च पेयं चेत्येतत् समुदितं त्रिवृत्„ इत्युक्तेनान्नेन ॥ ११ ॥

१२ अथ फलोदकेन "अमुं तर्पयामि अमुं तर्पयामि„ इति तर्पयति ॥

१३ ब्रह्मयज्ञधर्मेण "विद्युदसि विद्य मे ÷ इत्यपः स्पृष्ट्वा, द्विराचम्य, सावित्रीं पच्छोऽर्धर्चशोनवानमुक्त्वा, वेदादौ ञ्जपित्वा, त्रीनादितोऽनुवाकानधीयीरन् ॥

आदितः = वेदारम्भे - । "इषेत्वा ÷ यज्ञस्य ÷ शुन्दध्वं ÷ इति त्रीन

नुवाकान् – इत्यर्थः ॥ १३ ॥

"काण्डादीन्वा, "नमो ब्रह्मणे नमो ÷ इति परिधानीयां त्रिरन्वाह । "वृष्टिरसिवृश्चमे ÷ इत्यपः स्पृष्ट्वा – "काण्डात्काण्डात्प्ररोहन्तीः ÷ "या शतेन प्रतनोषि ÷ इति द्वाभ्यां उपोदके दूर्वामारोपयन्ते ॥

काण्डादीन् । वेति चार्थः । यथाशक्ति वा ॥ उपोदके = जलसमीपे । दूर्वामित्येकवचनमविवक्षितं । आरोपयन्ते यथा ताः प्ररोहेयुः ॥१३॥

१४ अथाधीप्सन्तोऽन्योन्यं "अमुष्मा अमुष्मा„ इति

उत्तरसूत्रे वक्ष्यमाणं जलावगाहनं अधिकृत्य तत्र कर्तव्यं शंसते अथेति ॥ अधीप्सन्तः – अन्योन्यं प्राप्तुमिच्छन्तः । निमज्जनसमये तत्रैव यं गृहीतुं इच्छन्ति, तस्य नाम चतुर्थ्यन्तं गृह्णीयुः ॥ इयं जलक्रीडा ॥ १४ ॥

१५ अथावगाह्य, सम्परिगृह्य, ऊर्मिमन्तमुदधिं कृत्वा, त्रिरुद्धृत्य आरात्तामितो राजिं धावयन्ति ॥

सम्परिगृह्य - अन्योन्यमित्यनुकृष्यते । ऊर्मिमन्तं = तरङ्गवन्तं उदधिं = जलाशयं । त्रिरुद्धृत्य = त्रिवारं निमज्योन्मज्य । इतः = जलाशयात् । आरात् = समीपे । तां राजिं = जलरेखां धावयन्ति = उत्पादयन्ति ॥ इत इति पञ्चमी आरादित्यनेनान्वेति ॥ १५ ॥

१६ प्रत्येत्य गृहान् अथ ब्राह्मणांस्तर्पयति अपूपैर्धानाभिः सक्तुभिरोदनेनेति । यद्युवैतेभ्यो भवति ॥

यदि उ वा एतेभ्यो ब्राह्मणेभ्यो भवति = रोचते ॥ अत एव चतुर्थी । अपूपादिषु मध्ये यत् रोचते तदेव दत्वा तर्पयेत् ॥ १६ ॥

१७ एवमेवोत्सृष्टेः कल्पानाम् ॥

उत्सृष्टेः = उत्सर्जनस्य कल्पानां = प्रयोगाणां एवमेव ॥ अध्ययनाङ्गव्रतोत्सर्जनार्थमिदं वचनम् ॥ विशेषस्तत्र तत्रोक्तः ॥ १७ ॥

१८ एवमेव पारायणसमाप्तौ ॥

वेदपारायणसमाप्तावपि अयं प्रयोगो विधेयः ॥ १८ ॥

१९ काण्डादि दूर्वारोपणोदधिधावनवर्जम् ॥

वेदपारायण समाप्तौ अयं भेदः-यत् काण्डाद्यध्ययनं, जलसमीपे दूर्वा-रोपणं जलाशयक्रीडाचेति न कार्याणि ॥ १९ ॥

॥ इति तृतीयप्रश्ने पञ्चदशः खण्डः ॥

* षोडशः खण्डः *

( २४ सर्पबलिः )

उत्सर्गबलिप्रसङ्गेन बलिहरणानुकृतिं सर्पबलिं प्रस्तौति बलिहरणेति

१ बलिहरणानुकृतिरेव सर्पबलिः । अत्रापि बलिः प्रधानम् ।

२ संवत्सरे संवत्सरे, षट्सु षट्सु मासेषु, चतुर्षु चतुर्षु वा, ऋतौ ऋतौ, मासि मासि वा, वर्षासु आश्लेषासु वा क्रियेत ॥

अत्र उत्तरोत्तरासमर्थस्य पूर्वः पूर्वः कालो विकल्पितः श्रावणमासे आश्लेषा नक्षत्रे ॥ यथाकामं व्यवस्था ॥ २ ॥

३ अपां समीपे वल्मीकाग्रे वा पचनं ॥ चरोरितिशेषः ॥

४ गन्धोदकैः वर्णोदकैश्चाभ्युक्ष्य, चित्राः सुमनसः सम्प्र कीर्य, यवपिष्टानि, व्रीहिपिष्टानि, श्यामाकपिष्टानि वाऽऽ ज्येनेक्षुरसेन वा पक्त्वा, पायसं, घृतपक्वांश्च अपूपान्, ओदनं, धानाः, सक्तून्, करम्भान्,दधि, मधु, क्षीर, लाजान् इत्युपकिरन्ति - "नमो अस्तु सर्पेभ्यः ÷ इति त्रिभिः ॥

वर्णोदकैः = विविधवर्णजलैः । चित्राः = नानावर्णाः । व्रीहिपिष्टानि = तण्डुलपिष्टानि । धानाः = भ्रष्टा यवाः । सक्तून् = यवपिष्टान् । करम्भान् आज्यसंयुक्तान् यवान् । लाजान् = व्रीहिजन्यान् ॥ ४ ॥

५ ब्राह्मणानन्नेन परिविष्य, पुण्याहं, स्वस्ति ऋद्धिमिति वाचयित्वा ।

६ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जु-

होति—"नमो अस्तु सर्पेभ्य ÷ इति द्वे पुरोऽनुवाक्यामनूच्य „या इषव ÷ इति याज्यया जुहुयात् ॥

७ अथाज्याहुतीरुपजुहोति - "सर्पेभ्यः स्वाहा, आश्रेषाभ्यः ÷, दन्दशूकेभ्यः स्वाहा — इतित्रयः स्वाहाकाराः ॥

स्वाहाकारेण युक्ता एव एते पठिता वेदे। अतो होमे नान्यं स्वाहाशब्दं योजयेत् ॥ ७ ॥

८ सर्वरः, गृहपतिः, धृतराष्ट्रः, ऐरावतः, ब्रह्मदत्तः, तापसः होता, पृथुश्रवाः, दूरश्रवाः, उद्गाता, ग्लावः, अजगरः, प्रस्तोतृ-प्रतिहर्तारौ, शिपिविष्टः, मैत्रावरुणः, तक्षकः, वैशालेयः, ब्राह्मणाच्छंꣳसी, उपनीतिः, शिखाऽतिशिखौ, नेष्टापोतारौ, सुब्रह्मण्यः, अर्बुदः, ग्रावस्तुत्, साण्डः, उन्नेता, वरुणः, अच्छावाकः, चक्र-पिशङ्गौ, आग्नीध्रः, अजिरः, माहेयः, पशुगः, ध्रुवगोपः, कौस्तुतः, अध्वर्युः, अरिमेजयः, जनमेजयश्चेति द्विचत्वारिंशत्नामधेयैः आज्याहुतिं जुहुयात् । पृथगिति शेषः ॥

अत्र केषुचित् पुस्तकेषु देवतान्यूनाधिक्यं दृश्यते । परं आचार्यैरेव स्पष्टमुक्ता संख्या द्विचत्वारिंशदिति । एते नागदेवताः ॥ ८ ॥

९ तैरेव नामधेयैर्बलिं हरेत् ॥

चतुर्थ्यन्तैरिति शेषः ॥ ९ ॥

१० "समीची नामासि ÷ इति षड्भिः । "हेतयो नामस्थ ÷ इति षड्भिश्च त्रिमध्वक्तौदनं धानाः सक्तूꣳश्च हुत्वा ॥

दधिमधुघृतमिति, घृतमधुशर्करेति वा त्रिमधु ज्ञेयम् ॥ १० ॥

११ "इदꣳसर्पेभ्यो हविरस्तु ÷ इति द्वाभ्यामुप[1]स्थानम् ॥

१२ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

---

१ छ. स्विष्टकृतम् ॥

१३ त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयीत ॥
१४ सर्पबलिर्व्याख्यातः ॥

॥ इति तृतीयप्रश्ने षोडशः खण्डः ॥

### * सप्तदशः खण्डः *
### ( २५ यक्षितमाबलिः )

१ अथेमे यक्षितमेऽप्रबाधिनी उद्वाहकाले भवतः ।
यक्षि – तमे, इमे देवते । आभ्यां बलिदानेन विवाहसमये ते अप्रबाधिन्यौ = अविघ्नकारिण्यौ भवतः ॥ आर्षो वचनव्यत्ययः ॥ १ ॥

२ तयोस्तदुपक्लृप्तं भवति – यत्सर्पबलौ ॥
सर्पबलौ अपेक्षितानि सर्वाणि द्रव्याणि अत्रापि आवश्यकानि भवन्ति ॥ २ ॥

३ अपां समीपे द्वे स्त्रीप्रतिकृती कृत्वा, गन्धैर्माल्यैश्चालङ्कृत्यैवमेवाभ्यर्चयति ॥
एवमेव = सर्पानिव ॥ ३ ॥

४ त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वाऽग्निमुपसमाधाय सम्परिस्तीर्याऽऽग्निमुखात्कृत्वा, देवते अर्चयति – "ते सूनवः स्वपसःसुदंससो महीजज्ञुर्मातरा पूर्वचित्तये । स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ॥

"ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा । नव्यं नव्यं तन्तुमातन्वते दिवि समुद्रे अन्तः कवयः सुदीतयः– इति द्वाभ्याम् ॥
इमौ मन्त्रौ ऋ० सं० १-१५९. सूक्ते तृतीय-चतुर्थौ ॥ ४ ॥

५ एताभ्यामेव पक्वं जुहुयात् ॥

६ व्याहृतिभिः उपहुत्य, स्विष्टकृत्प्रभृति सिद्धम् ॥

७ गन्धाक्षतपुष्पादिभिः पुनरभ्यर्च्य, एताभ्यामेव बलिं दद्यात् ॥

एताभ्यां = उक्तमन्त्राभ्याम् ॥ ७ ॥

८ अथैते उपसङ्गृह्य पार्श्वे दत्वा, प्रवाह्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयीत ॥

उपसङ्गृह्य =हस्तेनोत्थाप्य । पार्श्वे =अन्योन्यं सन्निहिते । दत्वा = नाविसंस्थाप्य । प्रवाह्य = जले - वाहयित्वा, विशेषत उत्सवपूर्वक मिति शेषः । उत्सवान्ते जले प्रक्षिपेत् ॥ ८ ॥

९ व्याख्यातो यक्षितमा बलिः ॥

॥ इति तृतीयप्रश्ने सप्तदशः खण्डः ॥

## * अष्टादशः खण्डः *

### (२६ अष्टकानुकृतिर्मासिकम्, नान्दीश्राद्धं च ॥)

१ अष्टकानुकृतिर्मासिकम् । तत्पुरस्ताद्व्याख्यातम् ॥

द्वितीयप्रश्नान्ते अतिदेशेन व्याख्यातं = कथितम् ॥ १॥

२ अथाभ्युदयेषु प्रदक्षिणमुपचारः, यज्ञोपवीतम्, प्रागग्रा दर्भाः, युग्मा ब्राह्मणाः यवैस्तिलार्थः, पृषदाज्यं हविः, सोप यामेन पात्रेण "नान्दीमुखाः पितरः प्रीयन्ताम् इत्यपां प्रतिग्रहणं विसर्जनं च ॥

अभ्युदयेषु = मङ्गलकार्येषु । तत्रकर्तव्यं नान्दीश्राद्धं । तत्र विशेषं दर्शयति — प्रदक्षिणमित्यादिना । प्रादक्षिण्यैनैवोपचारान् कुर्यात् । तथा उपवीतिनैव सर्वकार्यम् । प्रागग्रादर्भाः नतु दक्षिणाग्राः । युग्माः, न तु विषमाः । तिलार्थः =तिलस्थाने यवाः इत्यर्थं ॥ पृषदाज्यं =दधि मिश्रितमाज्यं । एतदेव हविः न तु अष्टकोक्तम् । सोपयामः = परिशुद्धपात्रविशेषः । अथवा उपयामः = पृथिवी; तेन सह = सोपयामः । पृथिवीस्थ इतियावत् ॥ तेन सर्वोऽपि उपचारः कार्यः । अपां प्रतिग्रहणं = धारणं, विसर्जनं = सेचनंच ॥ अनेनावाहन

विसर्जने उपलक्षिते ॥ २ ॥

**३ "नान्दीमुखेभ्यः पितृभ्यः स्वाहा,, इत्यग्नौकरणम् ॥**

**४ अनुदेशनमाशयेषु ॥**

भोजनपात्रेषु पृषदाज्यपरिवेषणम् ॥ नात्राङ्गुष्ठस्पर्शादिः ॥ ४ ॥

**५ परिसमूहनेषु प्रागग्रेषु दर्भेषु पृषदाज्येनानु प्रदानम् ॥ सर्वं द्विर्द्विरिति ॥**

परिसमूहनेषु कृतेषु सत्सु प्रागग्रदर्भस्थपात्रेषु अनुप्रदानं = विप्रेभ्यो निवेदनम् ॥ सर्वमत्रनान्दीश्राद्धे द्विर्द्विवारं कार्यम् ॥ अवशिष्टं अष्टकावत् ॥ अयं विप्रोपवेशनपूर्वकं होमादिः पिण्डप्रदानादिश्च प्रत्यक्षनान्दीश्राद्धविधिः । हिरण्येन नान्दीश्राद्धविधिशेषे वक्ष्यते ॥ ५ ॥

(२७ एकोद्दिष्टे विशेषः)

**६ अथैकोद्दिष्टेषु नाग्नौ करणं, नाभिश्रवणं, न पूर्वनिमन्त्रणं, न दैवं, न धूपः, न दीपः, न स्वधानमस्कारौ नात्रापूपम् ॥**

अपूपं = अपूपहोमः ॥ ६ ॥

**७ सर्वं सिद्धं समानीय अयुग्मान् ब्राह्मणान् सुप्रक्षालित पाणिपादान् अप आचमय्य सदर्भक्लृप्तेष्वासनेषूपवेशयति ॥**

अत्रार्चनादि सिद्धम् ॥ ७ ॥

**८ सकृदवदायाभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान् निरुह्य तेषु जुहुयात् "प्रेतायामुष्मै यमायच स्वाहा इति ॥**

दक्षिणतः, अग्नेरिति शेषः । "अमुष्मै,, इति स्थाने सम्बन्ध - नाम गोत्राणि चतुर्थ्यन्तेन ऊह्यानि ॥ ८ ॥

**९ तद्धुतमहुतं भवति ॥**

एकोद्दिष्टे नाग्नौ करणमिति निषेधात् कथमयं होमः इति माशङ्किष्ठाः । स्थण्डिलाद्बहिरङ्गारे होमः न होमोभवति ॥ केवलं होमफलं ददाति । अतो न दोषः ॥ ९ ॥

१० "अमुष्मै तृप्तिरस्तु" इत्यपां प्रतिग्रहणं विसर्जनं च
"तृप्तिरस्तु उपतिष्ठतु" इति शब्दाभ्यां अञ्जलि दानेन प्रेतो विशेषतस्तृप्यतीति विज्ञायते ॥ १० ॥

११ अमुष्मै उपतिष्ठत्वित्यागमानुदेशनम् ॥ शास्त्रस्याज्ञा ।

१२ आशयेष्वेव पिण्डदानम् ॥
आशयेषु = दर्भास्तरणेषु ॥ १२ ॥

१३ "तृप्यतु" ३ इति संक्षालनेनापसव्यम् ॥

१४ "तृप्यतु" इति विसर्जनम् ॥

१५ "अस्तु तृप्तिः" इतीतरेषां प्रतिवचनम् ॥

(२८ प्रेतश्राद्धे विशेषः)

१६ प्रेतस्य द्वितीयाहःप्रभृति ब्राह्मणैरेकोत्तरवृद्धिः आदशाहात् ॥

श्राद्धप्रसङ्गेन प्रेतश्राद्धे विशेषमाह प्रेतस्येति ॥ प्रेतश्राद्धं नाम सपिण्डीकरणात् प्राक् प्रेतमुद्दिश्यकर्तव्यम् ॥ एकोत्तरवृद्धिः; तिलोदकस्येति अर्थसिद्धम् । सूत्रस्यास्य स्वयमेव व्याख्यास्यमानत्वात् ॥ एकस्य = एकत्वसंख्याया अव्यवहितं उत्तरं = द्वित्वसंख्या । तया वृद्धिः तिलोदकस्य कार्या ॥ तथाच प्रथमदिने एकं, द्वितीये त्रीणि, तृतीये पञ्च-इत्येवंक्रमेण शताञ्जलयो भवन्ति । नाम गोत्राद्युच्चारणपूर्वकं "एतत्ते तिलोदकमुपतिष्ठतु" इति तिलोदकं प्रेतशिलायां दद्युः ॥ अत्र सर्वेऽपि पुत्रा अधिकारिणः, दिनात्ययेऽपि मातापितृमरणे आशौचनिवृत्तये शतांजलिः कार्यः ॥ ब्राह्मणैरित्युपलक्षणं त्रैवर्णिकानाम् । आदशाहात् = दशदिनपूर्तिपर्यन्तम् ॥ १६ ॥

१७ अत्र नवं न विच्छिद्येत ॥

अत्रैषु दिनेषु नवं = नवश्राद्धं न विच्छिद्येत = न लोपयेत् । नवश्राद्धानि षोडश भवन्ति । प्रतिदिनमेकैकमिति दशसु दिनेषु दश; प्रथमादि विषमदिनेषु षट्, इत्येवं षोडश । इदं मलिनषोडशमिति कथ्यते ॥ एतत्सर्वं आचार्यैरेव पितृमेधे सविवरणं वक्ष्यते । प्रसङ्गा-

दत्र सूच्यते ॥ १७ ॥

**१८ एकादश्यां श्राद्धं ॥ द्वितीये प्रथमं, तृतीये द्वितीयं, द्वादशे तृतीयं, चतुर्विंशतितमे चतुर्थम् ॥**

प्रसङ्गात् मध्यमषोडशं वक्ष्यमाणं मनसि निधाय उत्तमषोडश-मासिकानां कालं निर्दिशति ॥ एकादश्यां = एकादशतमे दिने श्राद्धं = आद्यानुमासिकं; परन्तु सपिण्डीकरणात्प्राक् पुत्राणां आशौचसद्भावात् उत्तमषोडशान्तर्गतमाद्यानुमासिकं एकविंशतितमे दिने कर्तव्यमिति वक्ष्यते ॥ द्वितीये इत्यादिषु पक्षे इतिशेषपूरणे-नान्वयः । द्वितीयपक्षे = सप्तविंशतितमे दिने प्रथमं = ऊनाद्यानु मासिकं ॥ तृतीये पक्षे = एकचत्वारिंशद्दिनमारभ्य पञ्चसु दिने-ष्वेष्वेकस्मिन् दिने द्वितीयं = द्वितीयोनानुमासिकम् ॥ द्वादशे पक्षे तृतीयं = तृतीयोनानुमासिकम् ॥ चतुर्विंशतितमे - पक्षे चतुर्थं = चतुर्थोनानुमासिकम् ॥ एते चत्वारि नामान्तरैरप्यभिधीयन्ते ॥ एवं व्याख्याने पितृमेधसूत्राण्येव निदानानि ॥ १८ ॥

**१९ सन्ततमेकैकेन एकादशमासान् गमयन्ति ॥**

द्वितीयमासप्रभृति एकादशमासान्, अर्थात् द्वादशमासं यावत् प्रति मासं प्रथमदिने एकैकमिति एकादशानुमासिकानि सन्ततं = अप्र मादेन गमयन्ति, वर्षमिति शेषः ॥ आद्यानुमासिकं एकादशे एक-विंशतितमे वा दिने, तत प्रतिमासारम्भे एकादश, ऊनानि चत्वारि-इत्याहृत्य षोडश मासिकानि ॥ इदं च द्वादशे दिने सपिण्डी-करणपक्षे ॥ १९ ॥

**२० प्रेतदीक्षया दीक्षितो न द्वादशमासमभ्यारोहति ॥**

द्वादशमासं = पितृसङ्गमश्राद्धं यावत् मातापितृदीक्षायामेव तिष्ठेयुः । तत्र नियमान् सूचयति — अभ्यारोहतीति, न खट्वामधिशेते इति ॥ इदमुपलक्षणं सकलव्रतोक्तनियमानाम् ॥ २० ॥

**२१ संवत्सरे सपिण्डीकरणं, तच्च साग्नौकरणं, साभि श्रवणं, सपूर्वनिमन्त्रणं, सदैवं, सधूपं, सदीपं, सस्वधा,**

सनमस्कारं, सापूपम् ॥

सपिण्डे विशेषः साग्नौकरणमित्यादि० अस्योक्त प्रायोऽर्थः ॥२१॥

२२ अथाप्युदाहरन्ति

"एकोद्दिष्टे नवश्राद्धे नाग्नौकरणमिष्यते ।

न चाभिश्रवणं कुर्यात् न च पूर्वं तु कारयेत् ॥ १ ॥

प्रणामं न च कुर्वीत स्वधाकारं तथैव च ।

ऊर्ध्वं संवत्सरात्प्रेतः पितृत्वमुपपद्यते ॥ २ ॥

स्पष्टार्थोऽयं श्लोकः । उदाहरन्तीत्यनेन प्रामाण्यमाचष्टे ॥ इदंतु सूत्रं पूर्वं एकोद्दिष्टप्रकरणान्ते एव सूत्रयितव्यम् ॥ अथवा एकोद्दिष्ट प्रकरणं न समाप्तं मन्यन्ते ॥ २२ ॥

२३ एकं प्रेतपात्रं त्रीणि पितृपात्राणि ॥

सपिण्डीकरणे पात्रं = अर्घ्यपात्रम् ॥ २३ ॥

२४ प्रेतपात्रं पितृपात्रेष्वासिञ्चति – "ये समानाः समनसः ÷ "ये सजाताः ÷ इति द्वाभ्याम् ॥

प्रेतपात्रं = पात्रस्थं जलम् ॥ आसिञ्चति = योजयति ॥ २४ ॥

२५ एवं पिण्डेष्वासञ्जति – "सङ्गच्छध्वं संवदध्वं ÷ इति त्रिभिः ।

प्रेतपिण्डं त्रिधाकृतं पितृपिण्डेषु आसंञ्जयति योजयति ॥ दृढमिति शेषः ॥ २५ ॥

प्रसङ्गागतं सपिण्डीविशेषं समाप्य प्रकृतमुदाहरति –

२६ अत्रोदाहरन्ति –

"एकादशे त्रिपक्षे च षण्मासे मासिकानि च ।

आब्दिके च तथा कुर्यात् एकोद्दिष्टानि षोडश ॥ १ ॥

इदञ्च संवत्सरे सपिण्डीकरणे ज्ञेयम् ॥ एकादशे आद्यमासिकम् त्रिपक्षे - ऊनम् । षण्मासे ऊनषण्मासे, ऊनमेव । मासिकानि एकादश मासारम्भे कर्तव्यानि एकादश । आब्दिके=ऊनाब्दिके । सप्तविंशे

कर्तव्यमेकमूनं, आहृत्य षोडशैकोद्दिष्टानि ॥

"एकविंशे भवेदाद्यं सप्तविंशे तदूनकम् ।
त्रिपक्षे द्वादशे पक्षे चतुर्विंशति पक्षके ॥ २ ॥

अस्यार्थं उक्त एव ॥

"पक्षं त्रिपक्षकं कुर्यादन्त्यमध्यादिषु क्रमात् ॥ ३ ॥

अस्यार्थं भाव:- त्रिपक्षे, द्वादशे पक्षे चतुर्विंशति पक्षे च प्रतिपक्षं त्रिभागं कुर्यात् । तेषु पञ्चकेषु त्रिपक्षे अन्त्यभागमाहृत्य तत्र एकचत्वारिंशत्तमदिनमारभ्य पञ्चचत्वारिंशत्तमदिन पर्यन्तेषु पञ्चसु दिनेषु मध्ये एकस्मिन् दिने त्रैपक्षिकमासिकं कुर्यात् । एवं द्वादश पक्षे मध्यभागमाहृत्य तेषु पञ्चसु दिनेषु एकस्मिन् दिने ऊन षाण्मासिकं कुर्यात् । एवं चतुर्विंशपक्षे आदिपञ्चकदिनं भाग-माहृत्य तेष्वेकस्मिन् दिने ऊनाब्दिकं कुर्यादिति ॥ अत एव "कत्रि: (४१) कथय (१७१) तन्वङ्गी (३४६),, इति तत्तत्पञ्चकादिम दिन मुद्धृत्य कारिका ॥ एवमुक्तदिने कर्तव्ये दिनशोधो न कार्य: । अन्यथा ऊनाब्दिके कुजभार्गवादिवासरा: छिद्रादितिथयश्च केचन योगाश्च वर्ज्या: ॥ २६ ॥

( २९ पत्न्यै सुतार्थिना मध्यमपिण्डप्राशनम् )

२७ अपिच -

"स्वस्या वा श्वशुरश्राद्धे तस्य ज्येष्ठकनिष्ठयो: ।
मध्यमं च तत:पिण्डं अद्यात्सम्यक् सुतार्थिनी ॥ इति ॥

श्राद्धप्रसङ्गात् वार्षिक श्राद्धे पिण्डविशेषस्य काम्यप्रतिपत्तिमाह अपि चेति ॥ स्वस्या: सुतार्थिन्या: श्वशुरस्य श्राद्धे, अथवा तस्य=श्वशुरस्य ज्येष्ठकनिष्ठयो: भ्रात्रो: श्राद्धे सुतार्थिनी मध्यमं पिण्डं सम्यक् = शुद्धभावनया अद्यात् ॥ तत: इति; तेषु त्रिषु पिण्डेषु मध्ये मध्यमं इत्यन्वय: ॥ अत्र पिण्डोद्वाहनात्पूर्वं भर्त्रा पुत्रार्थं सङ्कल्प्य दत्तं पिण्डं पूर्वोक्तराचमनपूर्वकं पत्नी प्राश्नीयादिति शिष्टाचार: ॥ तदा भर्त्रा निवीतिना भाव्यम् ॥

"आयुष्मन्तं सुतं विन्देत् यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं धार्मिकं सात्विकं तथा ॥ २ ॥

पिण्डप्राशनस्य फलं कथ्यते ॥ प्रजावन्तं = उत्पत्स्यमानः पुत्रोऽवन्ध्यो भवतीत्यर्थः ॥

"मातृ – मातामहश्राद्धे न दद्यात् मध्यमं स्त्रियाः ॥
स्त्रीप्रधानादन्यगोत्रात् पिण्डाऽऽशनं न विद्यते ॥ ३ ॥

मातुः मातामहस्य च श्राद्धयोः पिण्डभक्षणं न कुर्यात् । स्त्रीत्वप्राधान्यात्, परगोत्रत्वाच्चेति क्रमेण हेतुः ॥

"अज्ञानाद्यदि वा दद्यात् वृथा श्राद्धन्तु तद्भवेत् ।
पितृश्राद्धे पितृव्यस्य श्राद्धे दानं विशिष्यते ॥ ४ ॥

अज्ञानात् = तत्वानवगमेन मात्रादिश्राद्धे = पत्न्यै पिण्डप्राशने तत् श्राद्धं निष्फलं भवति । तु शब्देन पिण्डप्राशनमपि वृथाभवतीति सूचितम् ॥ अतो दाढ्र्यार्थं पुनर्वचनं – पितृश्राद्धे – इत्यादि ॥ अनेन स्वगोत्रेऽपि पुरुषश्राद्धेऽपि एतद्भिन्नश्राद्धे पिण्डदानं न कर्तव्यमिति ज्ञाप्यते । विशिष्यते इत्यनेन सफलत्वं सुफलत्वं च दर्शितम् ॥

"अन्यस्य मध्यमं पिण्डं नाश्नीयात् स सुखी भवेत् ।
यद्यश्नीयात्पशून् रुद्रो घातुकः स्यात्सुतानपि ॥ ५ ॥

उक्तनिषेधमुल्लङ्घ्यापि अन्यश्राद्धे पिण्डप्राशने तेनोत्पन्नसुतान् रुद्रो घातयति, तदीय पशूंश्च घातयति अतो नान्यश्राद्धे पिण्ड प्राशनं कार्यम् ॥ २७ ॥

२८ अनुकृतयो व्याख्याताः ॥ इत्यष्टादशः खण्डः ॥

इति बौधायनगृह्यसूत्रे अनुकृतिर्नाम तृतीयः प्रश्नः ॥

इति श्री रामचन्द्रसूरिणा विरचितायां सूत्रसञ्जीविन्यां
तृतीयः प्रश्नः समाप्तः ॥

## अथ बौधायनगृह्यसूत्रे चतुर्थः प्रश्नः ।
## (प्रायश्चित्तात्मकः)

### * तत्र प्रथमः खण्डः *
### (१ ऋतुसंवेशनाद्यतिक्रमे प्रायश्चित्तम्)

१ अथ ऋतुसंवेशनादि जन्मप्रभृति वा कुमारः क्रियाभिर्लुप्तः स्यात्, उपनयनं चैकं स्यात्, तासां पृथक् पृथक् क्रियाणां करणम् । अर्थलुप्तेषु अनादरः ॥

### * सूत्र सञ्जीविनी *

विघ्नाद्रिभेदवज्रं विबुधशिरोवज्रभासिताङ्घ्रियुगम् ॥
वज्रधरार्चितचरणं नमामि भुवनैकवारणं सगणम् ॥

"किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः,, इति गीतावचनम् । तथा "स्वयं करणवेलायां मुनयोऽपि न पण्डिताः,, इति साम्प्रदायिकं च वचनम् ॥ अत एव उक्तेषु हुतादिषु संस्कारकर्मसु प्रमादो मानवसुलभः । तत्र नानाविधया रीत्याऽपराधाःसम्भवेयुः । तत्पापप्रशमनाय प्रायश्चित्तोपदेशः क्रमप्राप्तः ॥ अतस्तदेवारभ्यते । अतः "प्रायश्चित्तप्रश्न,, इत्यस्याभिधानम् ॥ अथेति = प्रकरणान्तरारम्भद्योतकः । ऋतुसंवेशनपदं गर्भाधानपरम् ॥ जन्मपदं जातकर्मपरम् । क्रियाभिः = संस्कारैः । लुप्तः = रहितः कुमारः चेत् । तदेतिशेषः । उपनयनं चैकं स्यात् ते सर्वे संस्काराः उपनयनेन सह कार्याः । पृथक् पृथगेवेत्यस्य करणमित्यनेनान्वयः । होमादिः सर्वोपि कार्य इत्यर्थः ॥ अर्थलुप्तेषु - इति । यथा जातकर्मणि-स्तन - तद्धयतोरभिमन्त्रणं, कर्णवेधे कर्णवेधनं इत्येवं प्रयोजनशून्येषु-कर्मसु, अनादरः = तदकरणमेवेति भावः ॥ १ ॥

२ न चैकहोमे सर्वाणि कर्माण्युपपातयेत् ॥

अनेन निषेधेन सर्वेऽपि संस्काराः अन्यानि वा कर्माणि पृथक्

पृथगेव कार्याणीति विधित्सितम् ।। निषेधमुखो विधिः । अथवा स्खालित्यस्य मनुष्यधर्मत्वात् केनापि कारणेनालस्येन वा तत्तत्कालेऽकृतानि सर्वाणि संस्कारकर्माणि कालान्तरे कर्तव्यतया प्राप्तानि एकस्मिन्नेवाग्नौ उत्तरेण संस्कारेण सह तेषां करणप्राप्तौ निषेध एव वा ज्ञेयः ।। कामतः प्राप्तस्यनिषेधोऽयम् ।। २ ।।

३ यद्येकहोमे सर्वाणि कर्माण्युपपातयेत्, तदा प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती व्याहृतिपूर्वकं जुहुयात् ।।

निषेधस्य प्रतिप्रसवेनाभ्यनुजानाति यदीति ।। यदीत्यनेन अनायत्या तत्प्राप्तिं दर्शयति तदा - व्याहृतिचतुष्टयं मिन्दाद्वयं च प्रति-प्रधानारम्भे जुहुयात् ।। तेनैकहोमेऽनेकानपि संस्करान् समानतन्त्रेण कुर्यादित्यर्थः ।। अयं न्यायः शान्तिकपौष्टिककर्मस्वपि योजनीयः ।। अयं होमः न प्रायश्चित्तम् ।। किन्तु विभिन्नकर्मणां सन्धायकः तन्त्राङ्गः ।। ३ ।।

४ कालातिक्रमे - "यन्म आत्मनो ÷ पुनरग्निः ÷ मनो-ज्योतिः ÷ मिन्दाहुती, महाव्याहृतयो व्याहृतयश्च प्रायश्चित्तम् ।।

कालातिक्रम इति ।। संस्काराणामिति शेषः ।।
यन्म आत्मन ÷ पुनरग्निः ÷ इति मन्त्रद्वयस्य मिन्दासज्ञा ।।
भूरग्नय ÷ इत्यादिचतस्रः महाव्याहृतिसंज्ञाः ।। ४ ।।

५ मिन्दाहुती [जयाख्या] अभ्यातानारुद्राहुत्यन्ताश्चेतिपूर्वम्

पूर्वसूत्रोक्ताहुतिभ्यः पूर्वं एता [आहुतयः कार्या इत्यर्थः । चित्तं च स्वाहा इत्यादयो जयाख्याः । अग्निर्भूतानामित्यादयोऽभ्यातानाः ।। नेऽत्र रुद्रः पशूनामित्यन्ता एव होतव्याः ।। एताः कालाति - क्रमे एव ]।। ५ ।।

६ विज्ञायते च - " रुद्रो वै क्रूरो देवानां, सोऽस्य स्या-त्तुष्टः प्रीतो भवति " इति ।।

रुद्राहुत्यन्तहोमेऽर्थवादोऽयम् ॥ रुद्रः क्रूरोऽपि तुष्टोऽनेन — भवतीत्यर्थः ॥ ६ ॥

( २ छेदनभेदनादौ प्रायश्चित्तम् )

**७ सर्वत्र छेदन – भेदन – खनन – निरसन – आत्माभि-मर्शन – विस्रंसनेषु अप उपस्पृशेत् ॥ विज्ञायते च "आपो वै शान्ताः शान्ताभिरेवास्य शुचꣳशमयति, इति ब्राह्मणम्**

यश्छेदनादि करोति स एवाप उपस्पृशेत् ॥ विज्ञायते इत्यर्थवादः ७॥

( ३ त्रैवर्णिकानामुपनयनकालावधिः
तदतिक्रमे प्रायश्चित्तं च )

**८ आषोडशाद्ब्राह्मणस्य [1] नात्ययः । आद्वाविंशात्क्षत्रि-यस्य । आचतुर्विंशाद्वैश्यस्य ॥**

आहुते उपनयनप्रकरणेऽयं विषय उक्तोऽपि तदतिक्रमे प्राय-श्चित्तविधानार्थमनुवादः ॥ गर्भाष्टमादिकालः प्रथमोऽपि तदति-क्रमहेतुना आलस्यादिना गर्भषोडशवर्षपर्यन्तमपि गौणकाले वा कार्यमुपनयनम् ॥ ततोऽप्यतिक्रमो न कार्यः ॥ अतिक्रमे प्राय—श्चित्तं विधत्ते ॥ ८ ॥

**९ अत ऊर्ध्वं पतितसावित्रीका भवन्ति ।**

पतितेति = गायत्र्युपदेशानर्हा भवन्तीत्यर्थः ॥ ९ ॥

**१० नैनानुपनयेयुः, नाध्यापयेयुः, न विवहेयुः, न याजयेयुः ।**

उपनयननिषेधेनैव - अध्यापनादि निषेधसिद्धावपि वक्ष्यमाणप्राय-श्चित्तेनापि अध्यापनादि प्राप्तिनिषेधाय पुनर्वचनम् ॥ १० ॥

**११ तान् त्रिवृता व्रात्यस्तोमेन याजयित्वा विवहेयुः ।**

**"यच्च किञ्चित्सगोत्राणां सर्वेषां च सुशान्तिकम् ।,, इति ॥**

यदि तेषां संस्कारः कार्यस्तदा त्रिवारं "व्रात्यस्तोम ,, नामकेन श्रौतप्रायश्चित्तेन प्रथमं याजयेत् । व्रात्यानां शुद्धयर्थमेव स

---

[1] ज. अनात्ययः ॥

तत्रोक्तः। अयं पित्रादिभिः स्वाग्नौ कार्यः। उपनयनमपि तद्विधानेन पठितक्रमेण कार्यः। ततो विवहेयुः। विवाहः प्रति—प्रसवेन विहितः॥ तेन सगोत्रज्ञाति बान्धवानां शान्तिर्भवति। अन्यथोपघातः स्यात्॥

"कन्यानां चैव जन्मादि कर्तव्यं कर्म मङ्गलम्। क्रियामयं हि ब्राह्मण्यं नाक्रियो ब्राह्मणोच्यते" इति॥

न केवलं कुमाराणां, अपितु कन्यानामपि जन्मादि संस्काराः कार्या एव॥ जन्मादि – इति जात्येकवचनम्॥ ते च संस्काराः मङ्गलात्मका। जन्मान्तरीयदोषान् अमङ्गलाधायकान् अपनुद्य मङ्गलमादधते ते संस्काराः। अक्रियः = संस्कारहीनस्तु ब्राह्मण इति नोच्यते। सन्धिरार्षः। यतो हि ब्रह्मण्यं क्रियामयम्। ब्राह्मणपदं त्रैवर्णिकोपलक्षकम्॥ ११॥

१२ नाक्रियो ब्राह्मणो भवति॥

खण्डसमाप्तिद्योतनाय पुनर्वचनम्॥ १२॥

॥ इति चतुर्थ प्रश्ने प्रथमः खण्डः॥

## * अथ द्वितीयः खण्डः *

## ( ४ सर्वपापक्षय – सूक्तम् )

१ सर्वपापक्षयसूक्तं प्रसिद्धम्॥

षष्ठे सूक्तनामके प्रश्ने वक्ष्यते इत्यर्थः॥ तत्र "तरत्समन्दी धावति" ÷ "एतोन्विन्द्रं" ÷ "इन्द्र शुद्धोन ÷, इन्द्रशुद्धो हिनो ÷, शुचीवो हव्या ÷ इति अष्टौमन्त्राः। तथा "पुनर्मा मैतु ÷ इति अनुवाकश्च प्रविष्टाः॥ १॥

२ सर्वपापक्षयार्थाय जपेत्सूक्तं निरन्तरम्॥

अन्यस्त्रीसङ्गदोषाच्च दुरन्नस्य च दोषहम्॥ इति॥

उक्तसूक्तस्य फलं निर्दिशति – सर्वेति। निरन्तरं जपेदित्यन्वयः। अन्येति, दोषाच्च विमुक्तिकामः जपेदित्यन्वयः॥ किञ्च दुरन्नस्य

= निन्द्यान्नस्य, दुष्टात् गृहीतान्नस्य वा भोजनेन उत्पन्नदोषं हन्ति, एतत्सूक्तजपः इति ॥

"जलमध्ये स्थले वापि दुष्प्रतिग्रहदोषहृत्" इति च ॥

अयं खण्डः केषुचिदेव पुस्तकेषु दृश्यते ॥ युक्तत्वादादृतः॥ दुष्प्रतिग्रहदोषापनोदनार्थं एतत्सूक्तजपं जलमध्ये स्थित्वा, स्थले वा कुर्यादिति यावत् ॥ २ ॥

॥ इति चतुर्थप्रश्ने द्वितीयः खण्डः ॥

* अथ तृतीयः खण्डः *

( ५ सप्तपाकयज्ञप्रायश्चित्तानि )

१ अथातः पाकयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः ॥

पाकयज्ञानां मध्ये सम्भावितदोषाणां निर्हरणानि इत्यर्थः ॥ १ ॥

२ तत्र आदित एवोपलिप्ते श्वा वैडको वा यदि गच्छेत्, कीटो वा पिण्डकारी स्यात्, तत्पुनरुपलिप्य प्रोक्षति – "देवस्यत्वा ÷ इत्यनुद्रुत्य "अग्नेस्तेजसा प्रोक्षामि" इति प्रोक्ष्य स्थण्डिलमुद्धरेत् ॥

आदितः कर्मारम्भात्पूर्वम् । उपलिप्ते = गोमयादिलेपिते । श्वा = भषकः। एडकः = मेषः । कीटः = क्रिमिविशेषः । पिण्डकारी = मृत्पिण्डकृत् ॥ २ ॥

३ स्थण्डिलमुद्धृतं गौरश्वो वा विहरेत्, अन्यद्वा श्वापदमधितिष्ठेत्, "शन्नोदेवीः ÷ इति तत्पदमभ्युक्ष्य, जपति– "पृथिवि देवयजन्योषध्यास्ते मूलं माहिँसिषम्" इति । कर्मान्तमेव प्रतिपद्यते ॥

स्थंण्डिलमिति, अत्र स्थण्डिलपदं होमादिस्थानं विशालं वक्ति । विहरेत् = गमनागमनादिना दूषयेत् । श्वापदं = ग्राम्यं महिषादि आरण्यं जम्बूकादि ॥ अधितिष्ठेत् = वसेत् । कर्मान्तमेव = आरब्धकर्मणोऽन्तं, समापनमिति यावत् ॥ प्रतिपद्यते = निर्वहेत् ॥ समापयेत् न तु विरमेदितिभावः ॥ ३ ॥

४ यदि प्रणीतापात्रं भिद्येत, – "अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुनः ,, इति तदभिमन्त्रयते ॥

५ अथान्यदाहरति – "घर्मो देवा॑अप्येतु ,, इति ॥

पात्रान्तरे जलं पूरयित्वाऽभ्यर्च्य प्रणीतादेशे स्थापयेत् ॥ ५ ॥

६ पूरयित्वोपतिष्ठते, – व्याहृतिभिः ॥

समस्तैर्व्याहृतिभिः उपस्थानं कुर्यात् ॥ ६ ॥

७ अथ यदि प्रणीतानां प्रणीयमानानां वा विप्रुषो बहिः पतेयुः, स्रुवेद्वा चमसः – "आपोहिष्ठा ÷ इति तिसृभिः पूरयित्वा स्रुतमभिमन्त्रयते – "अक्षितोऽस्यक्षित्यै त्वा मामेक्षेष्ठा अमुत्रामुष्मिन् लोके ,, इति ॥

प्रणीतानां जलानां, प्रणीयमानानां जलानां वा, विप्रुषः = बिन्दवः प्रणीतापात्राद्बहिः पतेयुः ॥ पूरयित्वा, पुनरितिशेषः ॥ ७ ॥

८ पूरितमुपतिष्ठते – "भूरायुर्मे धारयत प्राणान्मे धारयत प्रजा मे धारयत पशून्मे धारयत माम आयुः प्राणाः प्रजाः पशवः परासिच्येरन् ,, – इति ॥ पूरितं जलमिति ॥ ८ ॥

९ "ततम्म आपः ÷ इति स्रुवाहुतिं जुहुयात् ॥

१० अथ कन्या उपसाद्यमाना वोह्यमाना वा पतेत्, तामुत्थापयेत् – "उदस्थाद्देव्यदितिर्विश्वरूपा । आयुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागम् । मित्राय वरुणाय च ,, इति ॥

अथेति प्रकरणान्तरारम्भे । उपसाद्यमाना = पत्या सह गेहं प्रति गच्छती । उह्यमाना = रथादिना नीयमाना, भयेन लज्जया वा अवतारणसमये ससम्भ्रमा वा पतेत् यदि, तामुत्थापयेदनेन – मन्त्रेण ॥ १० ॥

११ अथ कन्या उपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्, तामनुमन्त्रयते – "पुमांसौ मित्रावरुणौ पुमांसा

वर्चस्विनौ ॥ पुमानिन्द्रश्च सूर्यश्च पुमांसं वर्धयेताम् - इति ॥
अत्रानुमन्त्रणं दृष्ट्वैव, नतु स्पृष्ट्वा ॥ ११ ॥

१२ अथ कन्या उपसाद्यमाना वोह्यमाना वा अश्रु कुर्यात्, तामनुमन्त्रयते – "जीवां रुदन्ती विमयन्ते ÷ इति ।
बन्धुवियोगत्रस्ताऽश्रुजलमुद्गिरेत् ॥ अत्र सर्वत्र कन्या पदं नववधूवाचकम् । उत्थापनानुमन्त्रणादि सर्वं पतिरेव कुर्यात् ॥ १२ ॥

१३ अथ सर्वत्र स्रुवदर्वीकूर्चप्रस्तरबर्हिःपवित्रेध्म परिधिद्रव्यसम्भाराणां छेददाहोपघातेषु नाशे विनाशे वा, अन्यं यथालिङ्गमाहृत्य, यथालिङ्गमुपसाद्य, "त्वन्नो अग्ने ÷, "सत्वन्नो अग्ने ÷, "त्वमग्ने अयासि ÷, "प्रजापते नत्वत् ÷ इत्येतैः स्रुवाहुतीर्जुहुयात् ॥
अथ: विषयान्तरारम्भे एवमुत्तरत्रापि । अत्र छेदादीनां स्रुवादिषु यथायोगमन्वयः । उपघातः = अपहरणं । नाशः = ध्वंसः । विनाशः = अदर्शनम् ॥ यथालिङ्गं = तत्तदाकारं, अन्यं स्रुवादिकं आहृत्य यथास्थानं स्थापयेत् ॥ १३ ॥

१४ अथ यदि परिस्तरणदाहे - अग्नये क्षामवते स्वाहा " इति हुत्वा पुनः परिस्तृणाति - "इन्द्रं वो विश्व तस्परि ÷, "इन्द्रं नरोने ÷, इति द्वाभ्याम् ॥
यस्यां कस्यां दिशिस्थस्य परिस्तरणस्य दाहेऽयमेव प्रायश्चित्तक्रमः ॥ पुनः परिस्तरणं सर्वास्वपि दिक्ष्विति केचित् । दग्धस्य दिश्येवेति बहवः ॥ १४ ॥

१५ परिस्तीर्य जुहुयात् – "इन्द्राय स्वाहा " इति ॥ ततः कर्मान्तमेव प्रतिपद्यते ॥
अत्रापि प्राग्दिशि परिस्तरणदाहे एन्द्रेयमाहुतिः । दिगन्तरेतु तत्तद्देवताभ्य इति केचित् ॥ परन्तु तथा न सम्प्रदायः ॥ १५ ॥

१६ परिधिदाहेऽन्यं यथालिङ्गमुपसाद्य - 'परित्वाग्नेपुरं

÷ इति जुहुयात् ॥

१७ अथ वस्त्राणां प्रोक्षितानां छेददाहोपघातेषु नाशे विनाशे वा अन्यद्यथालिङ्गमुपसाद्य "सोमाय स्वाहा" इति स्रुवाऽऽहुतिं जुहुयात् ॥

वस्त्राणां इति ॥ कर्मानुष्ठानाय योक्तव्यानां पुण्याहजलेन प्रोक्षितानां कर्माङ्गतां प्राप्तानां, यजमानादिभिर्धृतानां वा, न तूदासीनानाम् नाशः = अदर्शनम् । विनाशः = अपहरणम् ॥ १७ ॥

१८ अथ चाभिघातः स्यात्, तदभिमन्त्रयते – "सिगसि ÷ इति तस्य दशासूत्रमादाय मुखवातेन प्रध्वंसयेत् ॥

अभिघातः = अशुचिद्रव्यस्पर्शः ॥ वस्त्राणामित्यनुकृष्यते । दशागतं सूत्रमेकमादाय मुखवातेन = "हुःफ्" इति निस्सारयेत् ॥ १८ ॥

१९ अथ यदि गौरश्वो वा श्वमृगमहिषमेषवराह नखवन्तो दंष्ट्रावन्तो वाऽन्यद्वा श्वापदमपसव्यं गच्छेत्, "शन्नो देवीः ÷ इति तत्पदमभ्युक्ष्य, जपति – "तद्विष्णोः परमं ÷ इति ॥

अपसव्यमिति । यजमानादीनां यागमण्डपस्य वा इत्यध्याहार्या-न्वयः ॥ १९ ॥

२० एतयैव जुहुयात् ॥

तद्विष्णोरिति मन्त्रेणैवाज्यं जुहुयात् सकृत् ॥ २० ॥

२१ अथ यदि पुरुषो रथोऽश्वो महिषो वराहोऽहिर्मृगः श्वा वा अन्यद्वा श्वापदमन्तराग्निं गच्छेत्, एतावदेव नाना पादान् भस्मना - "इदं विष्णुः ÷ इति मन्त्रेण ध्वंस येत् । मनोज्योतिः ÷ इति स्रुवाहुतिं जुहुयात् ॥

अन्तराग्नि = अग्नियजमानयोः, यजमानऋत्विजां, ऋत्विगग्न्योः मध्ये गच्छेत् ॥ तस्य प्रत्येकान्वयः । तेन समुच्चयनिरासः । "शन्नोदेवीरिति तत्पदाभ्युक्षणं पूर्ववत् कर्तव्यमेव । परं एता-

वानेव विशेषः । भस्मना तत्पदचिह्नमार्जनं, मनोज्योतिरिति स्रुवाहुतिश्च ॥ अनेन तद्विष्णोरिति स्रुवाहुतिर्निवर्तते ॥ २१ ॥

**२२ अथ यद्यग्नेरेकदेशमपहरेयुः ॥ एतदेव ॥**

एकदेशं = अङ्गारादिकं, दीपान्तरप्रज्वालनं च तेन द्योत्यते ॥ अपहरेयुरित्यनेन होमार्थमेव कुण्डान्तरनयने न दोष इति सूच्यते । एतदेव = मनस्वत्याऽऽहुतिः प्रायश्चित्तम् ॥ २२ ॥

इदानीं प्रसङ्गात् मनस्वत्या प्रायश्चित्तं अतिदिशति- ॥

**२३ सर्वास्वेवार्तिषु मनस्वत्या प्रायश्चित्तिः क्रियते । "इष्ट्वा वसीयान् भवती,, ति ब्राह्मणम् ॥**

उक्तासु सर्वासु आर्तिषु = अपराधेषु ॥ मनस्वत्या होमः प्रायश्चित्तम् ॥ ब्राह्मणोदाहरणं तस्यावश्यकर्तव्यतां प्रतिपादयितुम् ॥२३॥

**२४ अथ यदि रौद्रमभिव्याहरेयुः, रौद्रीयावृचौ जुहुयात् त्वमग्ने रुद्रो ÷ "आवो राजानं ÷ , इति । जपेद्वा ॥**

रौद्रं = भयकारकं शब्दं । अभि = परितः । व्याहरेयुः, मनुष्याः पक्षिणो वा, ॥ २४ ॥

**२५ अथ यदि शकुनो व्याहरति – तां वाचमभिमन्त्रयते – "द्विपच्चतुष्पदस्माकं ÷ इति ॥**

शकुने विशेषमाह - अथेति ॥ शकुनः = पक्षिविशेषः । व्याहरणमत्र अपस्वरेण कूजनम् ॥ तां वाचमभि = सम्मुखम् ॥ द्विपदमित्यादि – मन्त्रद्वयमत्र बोध्यम् ॥ २५ ॥

**२६ अथ यदि सालावृकी वाश्येत, तामनुमन्त्रयते – "दीर्घमुखि ÷ इति ॥**

इदं सर्वं कर्ममध्ये प्राप्ते एव ॥ सालावृकी = भषकी, सृगाली वा । तां = सालावृकीमनु ॥ दृष्ट्वा जपेत् ॥ २६ ॥

**२७ अथ यद्यार्तो स्यात्, परिहवे परिखा[1]सेऽप उपस्पृश्य**

---

१ ग ङ ञ. परिकासने । अयं हरदत्तभाष्यसम्मतः पाठः ॥

**जपेत् – "अनुहवं परिहवं ÷ इति ॥**

अर्थी = कर्मप्रयोजनवान्, यजमान इति यावत् ॥ जपेदित्यन्वयः ॥ स्यादिति वाक्यालंङ्कारे । तस्येति शेषः उत्तरान्वयी । परिहवः = सर्वतआह्वानं । परिखासः = परितः क्षवथुः ॥ तेषु निमित्तेषु तन्मन्त्रजपःप्रायश्चित्तम् ॥ अर्थीत्यनेनैतत्प्रायश्चित्तं यजमानः कुर्यादिति गम्यते ॥ अत्र मन्त्रे – अनुहवादिपदानि दृश्यन्ते ॥ अनुहवः = पृष्ठत आह्वानं । सर्वत आह्वानं परिभवः । परिहव पदस्यापि स एवार्थः । निन्दितो वादः परीवादः "छिन्धि भिन्धि" इत्यादिः । परिक्षपः = परितः क्षवथुः । परिकासोपि तदर्थ एव ॥२७॥

**२८ अथ यदि नदीनां धन्वनां च व्यतिक्रमे पुरस्तादुप स्थानं जपति – "या ओषधयो या वनस्पतयो ÷ इति ॥**

अग्निना सार्धं गच्छतः प्राप्त प्रायश्चित्तमिदम् ॥ धन्वनां = निरुदक-प्रदेशानां, ऊषरदेशानामित्यर्थः । व्यतिक्रमः=उल्लङ्घनम् । पुरस्तात् उपस्थानं = गृहं गत्वाऽग्न्युपस्थानं विहितं, ततःप्राक् अस्य मन्त्रस्य जपः ॥ नववध्वा सह गमनेऽपीदं ज्ञेयम् ॥ २८ ॥

**२९ अथ शकृद्व्यतिक्रमे पुरस्तादुपस्थानं जपति – "नमः शकृत्सदे ÷ इति ॥**

अग्निना सह गच्छत एव ॥ शकृत् गवादीनां पुरीषम् ॥ तदु-ल्लङ्घने प्रायश्चित्तमिदम् ॥ २९ ॥

**३० अथ तीर्थ-स्थाणु चतुष्पथव्यतिक्रमे पुरस्तादुप-स्थानं जपति – "कृतं तीर्थं" ÷ इति ॥**

पूर्ववदग्निना गमनसमये एवेदं प्रायश्चित्तमपि ॥ ३० ॥

**३१ (पित्र्याणां लक्षण्यानां) चित्रियाणां लक्षण्यानां व्यति क्रमे पुरस्तादुपस्थानं जपति – "ये देवा याश्च देवीः ÷**

चित्रियाणां = नानाविधानां वृक्षाणां व्यतिक्रमे = लङ्घने । क्वचित् "पित्र्याणां लक्षण्यानां" इत्यधिकमादौ दृश्यते । तत्र पित्र्याणां = पितृसम्बन्धानां माषादिसस्यक्षेत्राणामित्यर्थः । लक्षण्यानां =

शुभलक्षणवतां वृक्षाणाम् ॥ एषु सर्वेषु वर एव कर्ता ॥ ३१ ॥

॥ इति चतुर्थप्रश्ने तृतीयः खण्डः ॥

* अथ चतुर्थखण्डः *

( ६ व्रतस्थदीक्षितानां प्रायश्चित्तम् )

१ अथ व्रतस्थानां दीक्षितानां प्रायश्चित्तानि व्याख्यास्यामः ॥

व्रतस्थाः = कस्मिंश्चिद्व्रते तिष्ठन्तः ॥ दीक्षिताः = यागादिषु कृत सङ्कल्पाः ॥ तेषां व्रतलोपे प्रायश्चित्तविधानम् ॥ १ ॥

२ व्रतस्थो दीक्षितः चेदनृतं वदेत् । "इमं मे वरुण ÷, "तत्वायामि ÷ "त्वन्नो अग्ने ÷ "सत्वन्नो अग्ने ÷ इति चतस्रो वारुणीर्जपेत् ॥

व्यवहारेऽगत्याऽनृतवदनं प्राप्तं चेत् ॥ तत्रेदं प्रायश्चित्तम् ॥ २ ॥

३ कृष्णाजिनाद्व्यवच्छिन्नो दण्डाद्वा- "देवाञ्जनमगन् ÷ इति जपेत् ॥

व्यवच्छिन्नो = वियुक्तः ॥ ३ ॥

४ अमेध्यमनिष्टं वा दृष्ट्वा जपति - "अबद्धं मनोदरिद्रं ÷ इति ॥

अमेध्यं = अशुचिद्रव्यं पुरीषादिकम् ॥ अनिष्टं मनसो अनभिमतंमांसादि ॥ ४ ॥

५ अथ यद्येनमभिवर्षति - "उन्दतीर्बलं धत्त ÷ इति जपेत् ॥

एनं = दीक्षितं व्रतस्थं वा अभिवर्षति = अभितः पतति । अकालिकी वृष्टिः, कर्त्री ॥ ५ ॥

६ अथ व्रतयित्वाऽप आचम्य जपति "शि[1]वाः पीताभवथ जीवसे वः„ इति ॥

---

१ ग. च. ठ. शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः । अनागसः स्वस्ति नो भवथ जीवसे„ ॥

अभिवर्षणानन्तरं पुनः व्रतं गृहीत्वा उक्तमन्त्रं जपेत् ॥ ६ ॥

**७ छर्दयित्वा निष्ठीव्य वा जपति – "पात्रापीरसस्य मे ÷ इति ॥**

इदमपि व्रतस्थस्यैव । छर्दनं = वमनं, निष्ठीवनं = मुखलालाजलक्षेपणम् ॥ ७ ॥

**८ जञ्जम्यमानो जपति – "मयि दक्षक्रतू", इति ॥ हृदयमभिमृशति ॥**

जञ्जम्यमानः = गात्राणि विनामयमानः । आलस्यपरिहाराय गात्रं विनामयतीति प्रसिद्धम् ॥ "गात्रविनामेन विदारितमुखः पुरुषः जञ्जम्यमानः", इति सायणभाष्यम् ॥ ८ ॥

**९ रेतः स्कन्नमनुमन्त्रयते – "पुनर्मामैत्विन्द्रियं ÷ इत्यनुवाकेन ॥ अथ हृदयं - "यन्मे रेतः परितोषात् ÷ इति ॥**

स्कन्नं रेतो दृष्ट्वा, हृदयं स्पृष्ट्वाऽनुमन्त्रयते ॥ स्वप्ने वा, जाग्रति अवातुर्येग वा रेतः सेके प्रायश्चित्तम् ॥ ९ ॥

**१० मूत्रं करिष्यन् पुरीषं वा, लोष्टं पृथिव्यां प्रति निदधाति – "इयन्ते यज्ञिया तनूरितिकरोत्यपोमुञ्चामि न प्रजामꣳहोमुचः स्वाहा । "पृथिव्यास्सम्भवेति बीभत्स्या नामोपस्थ स्वाहा । "स्वाहा कृताः पृथिवी माविशत यशस्या नाम ÷ "कृताः पृथिवी माविशत तपस्या नाम ÷ कृताः पृथिवी माविशतेति" ॥**

॥ स्पष्टोऽर्थः ॥

**११ स्वेदं दुःस्वप्नं वा दृष्ट्वा जपति – "अभिर्वा वर्तते दुःस्वप्न ÷ इति ॥**

**१२ स्वप्नेऽन्नं भुक्त्वा जपति ÷ "यदन्नमद्यते नक्तं ÷ इति ॥**

स्वप्नेऽन्नभोजनं रोगोत्पत्तिसूचकम् ॥ एतन्मन्त्रपठनेन तच्छान्तिः ॥

दीक्षितादन्येषामपीदं समानमिति ज्ञेयम् ॥ १२ ॥

१३ लोहितमुत्पादितं दृष्ट्वा जपति – "नमो रुद्रियाभ्योऽद्भ्यः स्वाहा ,, इति ॥

उत्पादितं = कण्डूयनादिना स्वयमेवोत्पादितं रक्तम् ॥ १३ ॥

१४ वर्षति न धावेत्, यदि धावेत् – "नमो रुद्राय वास्तोष्पतये ÷ इत्येतामृचं जपेत् ।

धावनं=त्वरितगमनं, वस्त्रक्षाळनं, कमानं वा ॥ वर्षति सति ॥१४॥

१५ नान्येन दीक्षितेन समेयात्, यदि समेयात् - "कयानश्चित्र आभुवत् ÷ इत्येतामृचं जपेत् ॥

समेयात् = सम्मुखं गच्छेत् ॥ १५ ॥

१६ देवयजनागारादन्यत्र अभ्युदितो निर्मुक्तो वा सूर्यः, "सूर्यो मा देवो देवेभ्यः पातु ÷ इत्येतामृचं जपेत् ॥

यज्ञालयादन्यत्र स्थितस्य दीक्षितस्य सूर्यो यदि उदेति अस्तमेति वा - तदा उक्तामृचं जपेत् ॥ अनेन सूर्योदयास्तसमययोः दीक्षितो देवयज्ञगेहे एव तिष्ठेदिति विधिः ज्ञाप्यते ॥ १६ ॥

१७ इतीमानि सर्वेषु व्रतेषु सर्वासु दीक्षासु प्रायश्चित्तानि भवन्तीति बोधायनः ॥

इदमतिदेशार्थं सूत्रम् ॥ स्वनामग्रहणं प्रामाण्यदार्ढ्यार्थम् ॥ १७ ॥

॥ चतुर्थप्रश्ने चतुर्थः खण्डः ॥

## * पञ्चमः खण्डः *

### (७ व्रतस्थानां दीक्षितानां चान्तरालव्रतानि)

एतावता व्रतस्थानां दीक्षितानां च निषिद्धान्युक्त्वा इदानीं कर्तव्यान्याह - अथात इत्यादिना ॥ प्रायश्चित्तप्रकरणे एतदभिधानं कर्तव्यत्यागे प्रायश्चित्तद्योतनाय ॥

१ अथातो व्रतिनां दीक्षितानां (च) अन्तरालव्रतानि व्याख्यास्यामः ॥

अन्तरालेति । अन्तराले – मध्ये कर्तव्यानि व्रतानि ॥ अवश्यमनुष्ठेयानीति यावत् ॥ १ ॥

**२ तिस्रो रात्रीर्व्रतं चरेत्, संवत्सरमेतद्व्रतं चरेत् इति ॥**

पूर्वोक्तानुवादः । अवरं त्रिरात्रं, श्रेष्ठं संवत्सरं व्रतम् ॥ "तन्मध्यपतितानि तद्ग्रहणेन गृह्यन्ते „ इति न्यायेन षड्रात्रादिव्रतानि गृहीतानि भवन्ति ॥ २ ॥

**३ तस्यैतद्व्रतं – नानृतं वदेत्, न मांसमश्नीयात्, न स्त्रियमुपैति, नास्य पल्पूलनेन वासः पल्पूलयेयुः ॥**

तै० सं० १. ३. ७ सायनभाष्ये "अथैनं पशुं पल्पूलितं ÷ इति बौधायन श्रौत सूत्रव्याख्याने "पल्पूलितं = स्नापितं „ इत्युक्तम् ॥ अत्रतु लक्षणया मलापनयनाय वस्त्रस्य शिलादिषु ताडनं उच्यते । व्रतिनो वासः न तथा क्षालयेयुः । केवलं जलेन क्षालनमभिमतमेव ॥ ३ ॥

**४ मृण्मयपायी, अशूद्रोच्छिष्टी, न स्वयं पादौ प्रक्षाळयते, न लवणमश्नाति, न कोशीधान्यं, अन्यत्र तिलेभ्यः ॥**

मृण्मयपात्रेण जलादिपानं, न शूद्रभोजनानन्तरोच्छिष्टभोजनं, पूर्वमेव भोजनमिति यावत् । अन्येनैव पादक्षालनं, लवणासंसृष्टान्नभोजनं, कोशीधान्यं = माषादि, तद्विनाभोजनं, सर्वत्र कुर्यादिति शेषः ॥ अत्र सर्वत्र "नानृतं वदेत् „ इत्यादिनिषेधानां विधिपर्यवसायित्वं ज्ञेयम् ॥ "अनृतमिश्रं विना वाक्यं वदेत्„ इत्येवम् ॥ अन्यत्र तिलेभ्य इति कोशीधान्यत्वेऽपि तिलानामभ्यनुज्ञा ॥ ४ ॥

**५ न सन्ध्यां शयीत, न स्त्रियमुपेयात्, काममृतौ जायामुपेयात् यद्यजातपुत्रः स्यात् । उभयोः कालयोः मधुपूर्वं व्रतमुपदिशन्ति । "मध्वश्नाति „ इति ब्राह्मणम् ॥**

सन्ध्यामिति द्वितीयाऽत्यन्तसंयोगे, तेन पूर्णः सन्ध्यासमयः प्रोच्यते ॥ यदि शयीत तदा सन्ध्याकालादन्यत्र शयीत । एवं यद्यजातपुत्रः तदा जायामेव ऋतावेवोपेयात् । काममिति अजातपुत्रस्यापि

स्वेच्छायां सत्यामिति ध्वनितम् । पूर्वसूत्रोक्त "न स्त्रियमुपैति-इत्यस्य प्रतिप्रसवोऽयम् ॥ मध्वश्नातीति । अत्र मधुशब्दो घृतवाची ॥ ५ ॥

**६ संवत्सरादूर्ध्वं घृतमित्येवेत्युक्तं भवति "एतद्वै दैव्यं मधु,, "अञ्जन्ति त्वा मध्वरे देवयन्तः,, इति विज्ञायते ॥**

संवत्सरादूर्ध्वमपि यदि व्रतमनुवृत्तं, तदेति शेषः । घृतमिति = घृतप्राशनरूपं । व्रतं कुर्यादिवेत्युक्तं भवति ॥ तत्र प्रमाणं - एतद्वै इत्यादि ॥ ६ ॥

**७ नाञ्जितं, नाभ्यञ्जितं, न श्राद्धं भुञ्जीत, न लोमानि वापयीत, न दतो धावयते, न नखान्निकृन्तति ॥**

घृतेनाक्तं, अभ्यक्तं वा भुञ्जीत, श्राद्धभोजननिषेधस्तु - माता-पितृश्राद्धभोजनाभ्यनुज्ञापरः । सूत्राणां सर्वतोमुखत्वात् ॥ पुन-रुक्तदोषप्रसङ्गाच्च ॥ तत्तद्व्रतादिषु पूर्वं तन्निषेधात् ॥ लोम-वापनादि निषेधोऽपि उतरसूत्रस्थविध्यनुग्राहकः ॥ ७ ॥

**८ कामं दीक्षान्ते व्रतान्ते श्मश्रु - उपकुक्षि - केशानां क्रमेण वापयीत ॥**

कामं = यथाभिलाषम् ॥ केशानामिति कर्मणि षष्ठी ॥ वपने क्रमः श्रुत्युक्तः "श्मश्रूण्येवाग्रे वपते, अथोपकुक्षी । अथ केशान् काममितराण्यङ्गानि,, इति ॥ ८ ॥

**९ प्रायश्चित्तानि पूयन्ते विहितातिक्रमे इति बोधायनः ॥**

विहितस्यातिक्रमे कृते तद्दोषं पूयन्ते = निर्हरणपूर्वकं कर्तारं पवित्रीकुर्वन्ति ॥ ९ ॥ **चतुर्थप्रश्ने पञ्चमः खण्डः ॥**

*** षष्ठः खण्डः * - ( ८ स्वयं प्रज्वलितेऽग्नौ )**

**१ अथ सर्वत्र स्वयं प्रज्वलितेऽग्नौ समिधावादधाति- "उद्दीप्यस्व जातवेदो ÷ "मानो हिꣳसीज्जातवेद ÷ इति द्वाभ्याम् ॥**

स्वयं = धमनादिकं विनैव ॥ एकैकमन्त्रेणैकैकां समिधम् ॥ १ ॥

( ९ श्मशानादिव्यतिक्रमे )

२ अथ श्मशानादिव्यतिक्रमे तमेवाग्निमुपसमाधाय, सम्परिस्तीर्य, आग्निमुखात् कृत्वा पक्वाज्जुहोति – "अङ्गिरोभिरागहि ÷ इति पुरोनुवाक्यामनूच्य, "अङ्गिरसोनः ÷ इति याज्यया जुहुयात् ॥

साग्निरेव सन् श्मशानाद्युल्लङ्घने । तमेव = औपासनाग्निं । अतिक्रमणानन्तरं गृहं प्राप्योक्तप्रायश्चित्तं कुर्यात् ॥ २ ॥

३ अथाज्याहुतीरुपजुहोति – "अग्निर्भूतानामधिपतिः ÷ इति सप्तदशस्रुवाहुतीर्हुत्वा वाचयति "पितरः पितामहा ÷ इत्यान्तादनुवाकस्य ॥

एते सप्तदशमन्त्राः प्रसिद्धाः । पितरः पितामहा ÷ इत्यान्तं अनुवाकस्य जपः । जपश्च प्राचीनावीतिना कार्य इति साम्प्रदायिकाः ॥ यथाऽधिकारं व्यवस्था ज्ञेया ॥ ३ ॥

४ स्विष्टकृत्प्रभृति सिद्धम् ॥

( १० वध्वा सह प्रयाणे कर्तव्यम् )

५ अथैनत् गोमिथुनमभिमन्त्रयते– "इदं मिथुनमायुष्मदस्तु ÷ इति ॥

वध्वा साकं प्रयास्यन् अनसि गोमिथुनं योजयेदिति पूर्वमुक्तम् ॥ तदभिमन्त्रणमिदानीं कथ्यते ॥ एवं रीत्या प्रयाणे प्राप्स्यमानं निमित्तं, प्रायश्चित्तं च वक्तुं प्रयाणाद्धतिवचनं, अतो नास्य अप्रसक्तता ॥ मिथुनमत्र युगलं, न तु स्त्रीपुंसौ ॥ ५ ॥

६ अथ "उदुत्यं जातवेदसं ÷ इति दक्षिणमनड्वाहं युनक्ति ॥ "चित्रं देवानां ÷ इति सव्यं युक्त्वा प्रयाति ॥

७ अथ तीर्थव्यतिक्रमे, नावा सन्तारः स्यात् तामनुमन्त्र-

**यते – "अयं नो मह्याः पारमेत[१]ऽस्वस्तिनेर्बद्वनस्पतिः" इति ॥**

उक्तरीत्या प्रयाणे तीर्थव्यतिक्रमे प्राप्ते । तीर्थपदमत्र प्रभूतजलां नदीं वक्ति । नावा = नौकया सन्तारः स्यात् = प्राप्तः स्यात् ॥ तदातां = नावम् ॥ अनुमन्त्रणानन्तरं नावारोहणं प्रयाणं च ॥७॥

**८ नावा तरन्तीं वधूं न पश्यति ॥ कूलमुत्तीर्य पश्यन् जपति – "समुद्राय वयुनाय – इति ॥** न पश्यति=न पश्येत् ॥८॥

**९ दुर्गमध्वानं (प्राप्य) प्रपद्य "जातवेदसे – इति सहस्रेण आदित्यमुपतिष्ठते । असपत्नो भवेत् ॥**

दुर्गं = कष्टतरं, भीकरमिति यावत् । भयनिवृत्तये सहस्रवारं जातवेदसे – इति मन्त्रं पठेत् ॥ सहस्रपदं अनेकवाचि । यावत् दुर्गाध्वसमाप्तिः तावत् पर्यन्तं जपेदित्यर्थः ॥ असपत्नः = निर्भयः ॥९॥

**( ११ भयादिप्राप्तौ दुःस्वप्ने च कर्तव्यम् )**

जातवेदसे – मन्त्रप्रसङ्गेनाह – आसन्नेत्यादि ॥

**१० आसन्नभये, छलद्यूतव्यवहारे, राजकुलव्यसने, बद्धो वा निरन्तरमेतदुपांशु शतं जपेत् ॥**

सप्तम्यन्तेषु त्रिष्वपि "प्राप्ते" इत्यध्याहृत्य योजनीयम् । छलद्यूते, छलव्यवहारे इति छलशब्दः प्रत्येकमन्वेति । राजकुलात् व्यसने । बद्धः कारागृहादिषु नियन्त्रितः । एतत् = जातवेदसेमन्त्रं । नपुंसकमतन्त्रम् ॥ निरन्तरं=अविच्छिन्नम् संख्याऽविवक्षिता ॥१०॥

**११ एतदेव दुःस्वप्नेषु शतं जपेत् ॥**

निरन्तरमित्यपि अनुवर्तते । संख्यापुनर्वचनमादरार्थम् ॥ ११ ॥

**॥ इति चतुर्थप्रश्ने षष्ठः खण्डः ॥**

*** अथ सप्तमः खण्डः ***

**( १२ औपासनाग्न्युपघातादौ प्रायश्चित्तम् )**

नदीतरणप्रसङ्गेनाह – अथेत्यादिना ॥

---

१ – पारऽस्वस्ति इति भाष्यसम्मतः पाठः ॥

१ अथाप्सु अभ्याघातः स्यात्, अग्निश्चोद्वातः स्यात् - "अपहता असुरा रक्षाꣳसि ÷ इति प्रोक्ष्य ।

अभ्याघातः = अप्सेकादिना उपहतिः । उद्वातः = निर्वाणः । एतदुभयस्मिन् प्रत्येकं निमित्तम् ॥ १ ॥

२ "अयं ते योनिर्ऋत्वियो ÷ इति क्षिप्रं भस्म समिधि समारोप्य स्थण्डिलमुद्धरति ॥

क्षिप्रं = शीघ्रं । नौ मध्ये चेत् तरणानन्तरमेवेति सूच्यते । समिधि = काष्ठे । केवलमुपहतौ भस्मारोपणादि नास्ति । अग्नेरनुद्वात स्यात् ॥ केवलं वक्ष्यमाणप्रायश्चित्तमेव ॥ इदं गेहे विद्यमानेऽग्नावपि प्राप्ते निमित्ते कर्तव्यमिति ज्ञेयम् ॥ २ ॥

३ लौकिकमग्निमाहृत्य "आजुह्वान ÷ उद्बुध्यस्वाग्ने ÷ इति द्वाभ्यामुपसमाधाय, सम्परिस्तीर्य, आग्निमुखात् कृत्वा, त्रिः पक्वाज्जुहोति - "ये देवा यज्ञहनः ÷ इति पुरोनुवाक्यामनूच्य, "आगन्म मित्रा वरुणा ÷ इति याज्यया जुहुयात् ॥ "द्वे द्वे पुरोनुवाक्ये कुर्यात्" इति ब्राह्मणम् ॥

अत्रेदं बोध्यम् - पुरोनुवाक्यार्थं द्वौ मन्त्रौ, याज्यार्थमेकः इति प्रतिपक्वं त्रयो मन्त्राः आवश्यकाः । अतः मन्त्रगतपदे - "यज्ञहनः, "यज्ञमुषः" इति द्वे विभज्य मन्त्रेषु योज्ये । तेन नव मन्त्राः सम्पद्यन्ते ॥ योजनप्रकारस्तु अन्तेनिविष्टे मन्त्रकोशे द्रष्टव्यः ॥३॥

४ अथाऽऽज्याहुतीरुपजुहोति - "ये देवा यज्ञहन ÷ इति षड्भिरनुच्छन्दसम् ॥

आज्याहुतौतु यथाऽध्ययनं षडेव मन्त्राः ॥ ४ ॥

५ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥

( १३ अनस अक्षभेदे )

६ अथ यद्यक्षभेदः स्यात्, तमेवाग्निमुपसमाधाय सम्परि-

स्तीर्याऽऽग्निमुखात् कृत्वा प्रधानाहुतीर्जुहोति – "इह धृतिः स्वाहा ÷ इति चतुर्भिः ॥

७ अथान्यमक्षमाहरति – "अक्षितोऽस्यक्षित्यैत्वा ÷ इति ॥

८ अथैनं रथं योजयति – "आतिष्ठवृत्रहन्रथं ÷ इति ॥

एनं = अक्षं । रथं = रथस्य योजयति । युनिर्द्विकर्मकः । सर्वत्र अक्षशब्दः चक्राधारं रथाङ्गं काष्ठं वक्ति ॥ ८ ॥

९ अथ रथे मिथुनं प्रतिष्ठापयति – "प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे ÷ इति ॥

मिथुनं = अनडुद्युगलम् ॥ प्रतिष्ठापयति = रथसमीपमानयति ॥९॥

१० पूर्ववदनड्वाहौ युनक्ति – "उदुत्यं ÷ चित्रं देवानां ÷ इति ॥

पूर्ववत् = दक्षिण – वामक्रमेण ॥ १० ॥

११ अथ मिथुनं प्रतिष्ठापयति –

प्रतिष्ठापयति = प्रेरयति ॥ मिथुनं = अनडुद्युगलम् ॥ ११ ॥

१२ यदि बलवता समरथः स्यात् पथाद्रथं प्रसर्पति – "अनृणा अस्मिन्ननृणाः परस्मिन् ÷ " इति ॥

बलवता = स्वापेक्षया बलिष्ठेन । समरथः = प्रतिमुखरथः ॥ पथात् = मार्गात् । अत्रोत्तरत्र च "पथ" शब्दोऽकारान्तः ॥ प्रसर्पति = प्रसर्पयति ॥ १२ ॥

१३ अथ पथमवस्थाप्य यानाय जपति – "मिथुनस्य स्वस्त्ययनमस्यपि ÷ इति ॥

अथ = तद्रथादेः गमनानन्तरं । पुनः पथं = मार्गे स्वं रथंआनीययानाय गमनाय, जपति = जपन् प्रेरयति ॥ अत्र मन्त्रे – "मिथुनस्य" इति स्थाने "यजमानस्य" इति संहिता पाठः ॥ आचार्यास्तु प्रकृतानुगुण्याय व्यत्यर्यामासुः । अथवा शाखान्तरे तथा स्यात् ॥१३॥

१४ अथ रथमभिप्रैति – "पथस्पथः परिपतिं ÷ इति ॥
अभिप्रैति = वेगेन गेहाभिमुखं प्रेरयति ॥ १४ ॥

१५ अथ यदि विद्युत्स्तनिते सन्त्रासः स्यात् तमसि ऐन्द्रियावृचौ जपति – "यत इन्द्र ÷ "स्वस्तिदा ÷ इति ॥

१६ सिद्धमत ऊर्ध्वम् ॥
सिद्धं = गेहं प्रविश्य कर्तव्यं पूर्वोक्तम् ॥ १६ ॥

॥ इति चतुर्थप्रश्ने सप्तमः खण्डः ॥

## * अष्टमः खण्डः *

( १४ सप्तपाकयज्ञानामन्यानि प्रायश्चित्तानि )

१ अथातः पाकयज्ञानां प्रायश्चित्तिः ।
अनुवर्तते इति शेषः ॥ १ ॥

२ द्रव्यहविर्मन्त्रकर्मादीनां अतिपन्ने स्कन्ने भिन्ने भग्ने नष्टे दुष्टे विपरीते दग्धेऽभृतातिभृतेषु च मिन्दाहुती जुहुयात् ॥
द्रव्यादीनां अतिपन्नत्वादौ यथा योगमन्वयः ॥ २ ॥

३ द्विज श्व बिडाल मृग पशु पक्षि सरीसृपाणामन्यतमः, कीटो वाऽग्नीन् ऋत्विजोऽन्तरागच्छेत्, द्वादशगृहीतेन स्रुचं पूरयित्वा दुर्गां मनस्वतीं महाव्याहृतीश्च विग्राहं जुहोति । व्याहृतीस्तिस्रस्तन्तुमतीश्च ॥
अत्र पुरुष श्वादिषु केषुचित् पूर्वमुक्तेष्वपि पुनरत्रग्रहणमादरार्थम् ॥ पूर्वं सामान्येनोक्तं अत्र ऋत्विगग्न्योः मध्ये इति विशेषः ॥ केवलं तत्र मनस्वत्याहुतिः, अत्र तया सार्धमनेकाहुतय इति च ॥ विग्राहं = पूरितमाज्यं विभज्य विभज्य ॥ व्याहृतीरित्यादि पृथग्ग्रहणं पुनरपि द्वादशगृहीतेन स्रुक्पूरणेन होमार्थम् ॥ ३ ॥

४ सर्वत्र अनाम्नातेषु – "मनोज्योतिः ÷ "अयाश्चाग्नेः "यदस्मिन् कर्मणि ÷ "स्वस्तिन इन्द्रः ÷ इति जुहुयात्

व्याहृतिभिश्च ॥

अनाम्नातेषु = अनुक्तप्रायश्चित्तेषु दोषेषु ॥ अत्र द्वादश गृहीत-पूरणं निवृत्तम् ॥ ४ ॥

५ व्याहृतीनां प्रयोगे अयथाकृतं यथावद्भवतीति आचार्या ब्रुवते ॥

व्याहृतयश्चतस्रः । येन केन प्रकारेण ज्ञानादज्ञानाद्वा न्यूनं अति-रिक्तं वा कृतं अयथाकृतमित्युच्यते । कृते तु व्याहृतिहोमे तद्यथा वद्भवतीति आचार्या वदन्ति ॥ आचार्यग्रहणं पूजार्थम् ॥ अत एव क्वचित् उपहोमार्थं नियुक्ता अपि ऋत्विजः स्वस्वकर्तव्यान्ते व्याहृतिहोमं कुर्वन्ति । धर्ममीमांसाऽनुसारेण ऋत्विजामपि क्षुते आचमनवत्, रौद्रादिषु अपउपस्पर्शनमिव स्वकृतापराधे स्वैरेव प्रायश्चित्तानुष्ठानं युक्तमेव । परन्तु स होम आज्येनैव कार्यः ॥ अत्र प्रकरणे प्रायश्चित्ते आज्यस्यैव हौम्यत्वविवक्षणात् ॥ समि-त्तिलान्नादिभिः स होमो न कार्यः ॥ ५ ॥

६ तत्रोदाहरन्ति – "भूरिति वा ऋचः, भुव इति सामानि, सुवरिति यजूꣳषि" इति ॥

अनेन व्याहृतीनां सकलवेदात्मकतया तैर्होमः सकलान् दोषान् हन्तीति ज्ञाप्यते । सोऽयमर्थवादः ॥ ६ ॥

( १५ प्रायश्चित्तहोमानां समयः )

७ प्रवृत्ते कर्मणि प्रधानादौ जुहुयादिति बोधायनः ॥ प्रधानान्ते इति शालीकिः ॥ पुरस्तात् स्विष्टकृत इत्यौ-पमन्यवः ॥ कर्मान्ते इति शाटचायनः ॥

अनेन प्रसङ्गात् उक्तवक्ष्यमाणप्रायश्चित्तानां कालः कथ्यते ॥

प्रवृत्ते = वर्तमाने । कर्मान्ते = स्विष्टकृदन्ते । विकल्पोऽयमैच्छिकः । उत्तरोत्तरकाल एव प्रशस्त इति भाति । पुनः निमित्तसम्भवाभा-वात् ॥ यथोपदेशं व्यवस्था ॥ ७ ॥

( १६ गर्भाधानादीनां कालातिक्रमे )

८ अथ गर्भाधान पुंसवन सीमन्तोन्नयन विष्णुबलि जात कर्म नामकरणोपनिष्क्रमणान्नप्राशन कर्णवेधन चौलोपनयनानि न सन्निपातयेत् । यदि सन्निपातयेत् तदा प्रायश्चित्तम् ॥

समानं कर्म न सम्मिश्रयकुर्यादित्युक्तम् ॥ गर्भाधानादीनां तु तत्प्रति प्रसवः कथ्यते। यद्यपीदं सामान्यतया पूर्वमुक्तं, तथापि गर्भाऽऽधानादिसंस्काराणामेव विशेषः प्रायश्चित्तहोमपूर्वकं निर्दिश्यते ॥८॥

९ कालातिक्रमे – ततम्मआपो ÷ "यत्पाकत्रा ÷ "मनस्वती ÷ "मिन्दाहुती ÷ "महाव्याहृतयः ÷ व्याहृतयश्च प्रायश्चित्तम् ॥ "मिन्दाहुती जया अभ्याताना रुद्राहुत्यन्ताऽश्चेति ॥

अत्र अन्ते चेतिकरणात् – द्वितीयभागोक्तं प्रायश्चित्तं हुत्वा ततः प्रथमभागोक्तं कुर्यादिति ज्ञापितम् ॥ अत एव भागद्वयेऽपि मिन्दाद्वयं प्रविष्टम् ॥ ९ ॥

१० विज्ञायते च "रुद्रोवै क्रूरो देवानां सोऽस्य तुष्टो भवति „ इति ॥

११ प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती व्याहृतिपूर्वकं चेति सर्वेषां समानमित्याचार्या ब्रुवते ॥

उक्तप्रायश्चित्तानन्तरं कर्माणि सन्निपात्य कुर्यात् । तदा प्रतिप्रधानं आदौ मिन्दा-व्याहृतीः जुहुयात् ॥ इदं पूर्वमुक्तमपि "न सन्निपातयेत् „ इति निषेधोल्लङ्घनपरिहारार्थं पुनर्वचनम् ॥ सर्वेषामिति । शान्तिकपौष्टिकादीनामपि परस्परमिश्रणार्थं वचनम् ॥११॥

सम्मिश्रचैकाग्नौ करणे विशेषमाह – तत्रेत्यादिना –

१२ तत्रोदाहरन्ति - यद्येतानि सन्निपातयेत्, पक्वं सौविष्टकृतं आज्यं प्रणीता ब्रह्मेध्माबर्हिरेकमिति विज्ञायते ॥

समानतन्त्रे पक्वं = चरोः सिद्धिः । न तु पक्वहोमः असङ्गतेः । सौविष्टकृतं = स्विष्टकृद्धोमः ।। आज्यं = आज्यसंस्कारः । प्रणीता तत्संस्कारः । ब्रह्मोपवेशनादि च एकमेव कुर्यत् ।। न तु प्रतिप्रधानं गुणावृत्तिः ।। अङ्गयावृत्तौ नाङ्गानामावृत्तिः ।। १२ ।।

।। इति चतुर्थप्रश्नेऽष्टमः खण्डः ।।

* अथ नवमः खण्डः *

( १७ विपरीतदर्भास्तरणादौ )

**१ अथ विपरीतदर्भास्तरणे, पवित्रकरण - प्रोक्षणीसंस्कार ब्रह्मोपवेशन – प्रणीताप्रणयन - हविर्निर्वाप - आज्यसंस्कार – पर्यग्निकरण – स्रुक्स्रुवसम्मार्जन - परिधिपरिधान – परिषेचनेध्माधानादीनां विपरीतेषु चे प्रायश्चित्तं - ततम्म आपो ÷ "यत्पाकत्रा ÷ " मनस्वती, मिन्दाहुती, महा– व्याहृतयो व्याहृतयश्चेति ।।**

अत्र पवित्रकरणादि इध्माऽऽधानपर्यन्तं उक्तक्रमविपरीते पूर्वापरी भावे प्रायश्चित्तम् ।। दर्भास्तरणे वैपरीत्यं तु दक्षिणपश्चिमाग्रादि, परिस्तरणादिषु प्रागादिक्रमत्यागः, अपवर्गव्यत्ययश्च ।। १ ।।

**२ सर्वत्र रौद्रराक्षस - नैर्ऋत - यम - पैतृकेषु, छेदन – भेदन - खनन - विस्रंसन - निरसनात्माभिमर्शनेषु आभि- चाराणि च कृत्वा अप उपस्पृशेत् ।।**

रौद्रादि पैतृकान्त - पदघटित मन्त्राणां उच्चारणे, तन्नाममात्रो- च्चारणे वा । छेदनादि क्रियासु कृतासु । आभिचाराणि = मारण – मोहनादिकर्माणि ।। २ ।।

( १८ हविर्दोषाः )

**३ अथ हविर्दोषान् व्याख्यास्यामः, यथा – एतन्नीतं मक्षिका - पुत्तिका - मद्गुः कीटो वा पिण्डकारी स्यात् ।।**

**क्षुद्रकीट - मक्षिका - पिपीलिकावर्जम् । श्व - मार्जार - नकुल - कर्कट - ध्वांक्ष - कुपुरीष - मृतनख - कुनख - पूति-**

**द्रव्यं - स्वेद - असृक् अश्रु - कास - क्षवथु - आर्द्रान्नणैर्वोपहतं, अन्यैर्वोपहतं, रजस्वलया स्पृष्टं, अप्रयतेन भ्रूणघ्नेन वा दृष्टं, चण्डालेन वा, अमेध्ये वा देशे स्कन्नं दुष्टं हविरपोऽभ्यवहरन्ति ॥**

एतत् = चर्वाज्यादिकं हविः, नीतं = पात्र्यामानीतं संस्कृतं असंस्कृतं च उक्तकारणैर्दुष्टं तत् अप्सु क्षिपेयुः ॥ मक्षिका = मधुसरघा । पुत्तिका = अल्पीयसी मधुमक्षिका । मद्गुः = जलवायसः, सर्पविशेषो वा । पिण्डकारी = चर्वादिषु पिण्डकारं करोति चेत् ॥ एषु क्षुद्राः अत्यल्पाः कीटादयो वर्ज्याः, तेषु हविरुपघ्नत्स्वपि न दोषः । तद्भागमात्रं त्यजेत् । श्वमार्जारेति - श्वादि ध्वांक्षान्तान्तैरुपहतं भक्षितमवघ्रातं वा तथा कुपुरीषादिना वा उपहतं = स्पृष्टं ॥ कुपुरीषं = स्वभावदुष्टं वस्तु । मृतनखं = अङ्गुलेरुद्धृतं । कुनखं = सरोगिनखं । पूति = दुर्गन्धि द्रव्यं । स्वेदादि प्रसिद्धं । अन्यैः उक्तभिन्नैः दुष्टद्रव्यैः । अप्रयतः = अशुचिः । भ्रूणघ्नः = गर्भघाती शिशुघाती, भ्रूणसंज्ञक विप्रघाती वा ॥ एतैर्दृष्टमात्रं हविर्दुष्यति ॥ अमेध्ये देशे = अशुचिस्थले । अपः = अप्सु । अभ्यवहरन्ति = क्षिपेयुः ॥ ३ ॥

**४ सित - भस्मनि वा निधापयन्ति ॥**

समीपेऽभावे तु इत्यादिः ॥ ४ ॥

**५ भिन्दाहुती हुत्वाऽन्यं निर्वपेत् ॥**

निर्वापानन्तरं सति दोषे प्रायश्चित्तमिदम् ॥ ५ ॥

**६ आज्येन वा प्रचरेत्, क्षिप्रसंस्कारतममाज्यं ब्रुवते ॥**

हविरन्तरकरणाशक्तौ, कालाभावे वा आज्येन प्रचरेत् होमादि कुर्यात् । अल्पदोषे प्रभूतमाज्यं हविष्षु सिक्त्वा तेन शुद्धेन होमादि कुर्यात् ॥ उभयथापि अर्थोज्ञेयः ॥ सूत्राणां विश्वतो मुखत्वात् ॥६॥

**७ स्कन्देद्धविर्गृहीतं तु चरुर्वा परिधेर्बहिः । तत् भूपते**

इत्यादिभिः मन्त्रैः स्कन्नन्तु मन्त्रयेत् ।। सुरभिमत्या तन्तुमत्या आभ्यां च जुहुयात्ततः । प्रणवं व्याहृतीर्हुत्वा पुनः शेषं समाचरेत् ।। इति ।।

गृहीतं = स्रुचा दर्व्या वा अवदानेन स्वीकृतम् ।। तत् स्कन्नमित्यन्वयः ।। स्पष्टमन्यत् ।। ७ ।।

।। इति चतुर्थप्रश्ने नवमः खण्डः ।।

* अथ दशमः खण्डः *

( १९ प्रायश्चित्तसमुच्चयः )

१ अथ सप्तपाकयज्ञानां प्रायश्चित्तसमुच्चयं व्याख्यास्यामः ।

अत्र समुच्चयपदेन विविधप्रायश्चित्तानि कथ्यन्ते ।। १ ।।

२ सर्वत्र स्कन्ने, भिन्ने, छिन्ने, क्षामे, विपर्यासे, उद्दाहे, ऊनातिरेके, पवित्रनाशे, पात्रभेदे, द्वे भिन्दाहुती जुहोति ।।

स्कन्दनादौ क्वचित्पूर्वमुक्तेऽपि प्रायश्चित्ते, प्रायश्चित्तान्तरकथनात् न पौनरुक्त्यम् ।। एवमग्रेऽपि ।। तेन उभयोर्विकल्पः प्रतीयते ।। क्षामे क्षये ।। २ ।।

३ मक्षिकैः मशकैः रोमभिः पिपीलिकाभिर्वा व्यापद्येत हविः प्रजापतये होमं कुर्यात् ।। व्यापद्येत = दूष्येत । हविः = हविराज्यादि, प्रजापतेनत्वदितिमन्त्रेण होमं कुर्यात् ।। ३ ।।

४ व्यापन्नमाज्यं, अव्यापन्नमन्तर्हितं वा अनाज्ञातं प्रायश्चित्तम् ।।

व्यापन्नं = दुष्टं । अदुष्टमपि अन्तर्हितं = अदर्शनं गतं, नष्टं वा ।। अनाज्ञातं = "अनाज्ञातं यदाज्ञातं" इति मन्त्रेण होमः ।.४।।

५ इष्टेभ्यः स्वाहा, वषडनिष्टेभ्यः स्वाहा, इत्यष्टौ यज्ञसमृद्धीः जुहुयात् ।।

तासां यज्ञसमृद्धिरिति नाम ।। अवश्यं ताः ।। ५ ।।

**६ अन्तरागमे - प्रायश्चित्तं दशहोतारमनुख्यां च जुहोति ॥**

अष्टमखण्डे पूर्वमुक्तमपि इदानीमन्यदपि तदुच्यते ॥ होतृमन्त्रेषु सर्वत्र रूपकेण तथाव्यवहारः। यथा "चित्तिः स्रुक् ÷ इतीदं दश होतृमन्त्रः। तत्र चित्तिः = ज्ञानं, स्रुक् = स्रुक्त्वेन विभावनीया इत्येवं दशरूपकाणि सन्ति। होतृशब्दः यज्ञाङ्गानि वक्ति। एवं सर्वत्र होतृमन्त्रा ज्ञेयाः। अत्रेदं ध्येयं - चतुर्भिः पञ्चभिः षड्भिः सप्तभिः दशभिश्च रूपकवाक्यैः उपलक्षिताः तत्तदनुवाका एव तत्तद्धोतृमन्त्रत्वेन गणिताः ॥ "चित्तिः स्रुक् ÷ इत्ययं दशहोतृ-मन्त्रः ॥ अन्वग्निः = अनुख्या नाम ॥ ६ ॥

**७ अन्तर्हिते प्रायश्चित्तं चतुर्होतारमनुख्यां च जुहुयात् ॥**

अन्तर्हिते हविरादौ, मध्ये नीते - इत्यर्थः। "पृथिवी होता ÷ इति चतुर्होतृमन्त्रानुवाकः ॥ ७ ॥

**८ मण्डूकसर्पमूषकाद्यन्तरागमने प्रायश्चित्तं पञ्चहोतार मनुख्यां च जुहोति ॥**

अग्निर्होता ÷ इति पञ्चहोतृमन्त्रानुवाकः ॥ ८ ॥

**९ विकृतरूपे, विकृतशब्दे, विस्फुटे च प्रायश्चित्तं षड्ढो-तारं शंयुवाकमनुख्यां च जुहोति ॥**

विकृतरूपे दृष्टे, विकृतशब्दे श्रुते, होमाग्नेः सकाशात् विस्फुटेऽङ्गारादौ ॥ षड्ढोतृ मन्त्रः = सूर्यन्ते चक्षुः ÷ इत्यनुवाकः ॥ शंयुवाकः = तच्छंयोरावृणीमहे ÷ इति द्वे ऋचौ ॥ ९ ॥

**१० पतित - चण्डाल - सूतक्युदक्या - रजकादिवाक्यश्रवणे सप्तहोतारमनुख्यां च जुहोति ॥**

पतितः संस्कारहीनः, महापातकादिना वा पतितः। सूतकी = सूतिका। उदक्या = रजस्वला। रजकादिः प्रसिद्धः ॥ सप्तहोतृ मन्त्रः = महाहविर्होता ÷ इत्यनुवाकः ॥ १० ॥

**११ अनादिष्टं सर्वप्रायश्चित्तं व्याख्यातं, वारुणीमिति वा निर्दिशेत् ॥**

व्याख्यातं = अष्टमखण्डे कथितम् ॥ अथवा वारुणीमिति = तत्वायामि ÷ इत्येकां वा जानीयात् ॥ ११ ॥

**१२ संस्कारान्तेऽग्नावुत्सन्ने, समिधं वा यदि नोपविन्देत प्रायश्चित्तिं महाव्याहृतीः प्रणवं मनस्वतीं च जुहोति ॥**

संस्कारकर्मसमाप्तौ अग्नौ नष्टे, समिधं = समारोपिताग्नि - समिधं वा न लभते । तदा प्रकृत्या पुनः अग्निं समाधाय तदग्नौ एताः जुहुयात् ॥ १२ ॥

**१३ स्वराक्षरपदभ्रेषेष्वाभिर्गीर्भिरिति ॥ सर्वत्रानाज्ञातेषु "अनाज्ञातं ÷ पुरुषसम्मित ÷ इति ॥**

( इति चतुर्थप्रश्ने दशमः खण्डः )

❀ एकादशः खण्डः ❀

( २० अथ चरुप्रायश्चित्तम् ॥

**१ श्रप्यमाणे चरौ यस्यै यस्यै दिश उत्सिच्येत, तस्यै तस्यै देवतायै स्रुवाहुतिं जुहुयात् । यदि प्रागिन्द्राय, यदि दक्षिणतो यमाय, यदि पश्चाद्वरुणाय, यद्युत्तरतः सोमाय, यद्याग्नेय्यामग्नये, यदि राक्षस्यां निर्ऋतये, यदि वायव्यां वायवे, यदीशान्यामीशानाय ॥**

उत्सिच्येत = बहिः पतेत् ॥ तस्यै तस्यै देवतायै = तत्त - द्दिग्देवतायै ॥ १ ॥

**२ यदि सर्वत एवोत्सिच्येत, ताभ्यः सर्वाभ्यो देवताभ्यः स्रुवाहुतीर्जुहुयात् । तमाज्येनाप्यायनीयाभ्यामाप्याययति ॥**

सर्वत उत्सेकः अथवा एकदिशि, इत्यजानानः सर्वोत्सेकप्राय- श्चित्तमेव कुर्यात् ॥ तं = चरुं पात्रस्थं । आप्यायनीये = "आप्या यस्व ÷ सन्ते ÷ इति ऋचौ ॥ २ ॥

**३ सर्वत्र पाकयज्ञानां सदस्येभ्यो धेनुमृषभमनड्वाहं वा दद्यात् ॥**

सदसि अर्हाः सदस्याः । कर्मविधिदर्शकत्वात् प्रथमं पूज्या इत्यर्थः ।३।

**४ सदस्याः सर्वप्रायश्चित्तानि प्रतिनिधींश्च बोधयन्ति, ते सदस्या इत्युच्यन्ते इति प्राहस्म भगवान् बोधायनः ॥**

चकारेण कर्मविधानमपि गृह्यते ॥ प्रायश्चित्तकथनप्रसङ्गेन मध्ये तद्बोधकस्मरणात् एतत्कथनम् ॥ प्रतिनिधीन् = शक्त्यनुसारेण द्रव्यान्तराणि कर्मान्तराणि वा, बोधयन्तीत्यन्वयः ॥ ४ ॥

( २१ अग्न्युद्वात - प्रायश्चित्तादि ) –

**५ अथ यदि होमकालेऽग्न्युद्वातःस्यात् - सर्वं तत् - " अपहता ÷ इति प्रोक्ष्य, क्षिप्रं भस्म समिधि समारोपयेत् ÷ अयन्ते योनिः ÷ इति ॥**

होमान्ते उद्वातप्रायश्चित्तमुक्तं, होममध्ये आह - अथेति ॥ सर्वं तत = कुण्डे स्थण्डिले वा स्थितं सर्वमपि प्रोक्ष्य ॥ तद्भस्म किञ्चित् समिधि उद्धृत्य निधापयेत् ॥ ५ ॥

**६ स्थण्डिलं कृत्वाऽग्निमुपसमाधाय सम्परिस्तीर्य, " आजुह्वानः ÷ उद्बुध्यस्व ÷ इति द्वाभ्यां समिधमाधाय मध्येऽग्नि प्रायश्चित्तं जुहोति – " अयाश्चाग्ने ÷ पञ्चहोतारं ÷ " ब्राह्मण एकहोता ÷ इति दश, मनस्वती, मिन्दाहुती महाव्याहृतीर्व्याहृतीश्चेति ॥**

स्थण्डिलं = अन्यत् । तस्मिन्नेव वा स्थण्डिले । अग्नि = लौकिकाग्नि । उपसमाधाय = प्रतिष्ठाप्य । समिधं = तां भस्मवतीं आधायाग्नौ प्रक्षिप्य ॥ ततः प्रायश्चित्तहोमानन्तरं आरब्धं कर्म पुनरादितः कुर्यात् - इति शिष्टाः ॥ ६ ॥

**७ अथ यद्युपनयनाग्निः, विवाहाग्निः, जातकर्माग्निः, श्मशानाग्निः, आचतुर्थात्, आदशाहात्, आसंचयनात्, उद्वातः स्यात्, प्रसिद्धमेतत् प्रायश्चित्तं जुहुयात् ॥**

प्रोक्षणभस्मसमारोपणादि प्रसिद्धं, एतत् = अयाश्चाग्नेरित्यादि-

होमरूपं पूर्वोक्तं प्रायश्चित्तं ॥ आचतुर्थादित्येतत् उपनयन- विवाहा ग्न्योरन्वेति ॥ जातकर्माग्निरादशाहात् । श्मशानाग्निरासञ्चयनात् उद्वातः स्यात् ॥ ७ ॥

**८ सर्वत्र वितते यज्ञकर्मणि यदि जन्यं भयमागच्छेत् – "यत इन्द्र ÷ "स्वस्तिदा ÷ इति द्वाभ्यां जुहुयात् ॥**

जन्यं = युद्धं, लक्षणया तत्सम्भवः सूच्यते ॥ ८ ॥

**९ अन्वाधानेष्टिमध्ये सोमसूर्योपरागे प्रायश्चित्तं – "उद्वयं तमसः ÷ "उदुत्यं जातवेदसं ÷ "चित्रं देवानां ÷ "आप्यायस्व ÷ "सन्तेपयांꣳसि ÷ "त्वन्नः सोमो ÷ "याते धामानि ÷ ; मिन्दाहुती व्याहृतीश्च जुहुयात् ॥**

अत्र इष्टिशब्दः स्थालीपाकपरः । अन्वाधानं = दर्शे पूर्णमास्यां च सायं क्रियमाणः इष्टिसङ्कल्पः । सूर्योपरागे उद्वयं तमसः - इत्यादि तिसृभिः । चन्द्रोपरागेतु आप्यायस्व ÷ इत्यादि चतसृभिः । मिन्दा व्याहृतिभिरुभयत्राप्याहुतीः - इति विभज्य ज्ञेयम् ॥ ९ ॥

**१० चरुश्रपणेऽर्धे विदग्धे, निर्ऋत्यै यदिदं दग्धं स्यात् अन्यत्र शृतं स्यात्तेन प्रचरेत् ॥**

होमाग्नौ चरुश्रपणसमये चरौ अर्धदग्धे सति दग्धांशं "निर्ऋत्यै नमम" इति जले क्षिपेत् । अवशिष्टेन चरुणा कर्म कुर्यात् । अवशिष्टं अपर्याप्तं चेत् अन्यत्र महानसादौ शृतमानीय तेन होमं कुर्यात् ॥ महानसादावपि दग्धे चरौ अयमेव कल्पः ॥ अत्रार्ध शब्दो भागवाची ॥ १० ॥

**११ अथ यदि सर्वमेव दग्धं स्यात्तदपोऽभ्यवहृत्य मिन्दाहुती हुत्वाऽन्यं निर्वपेत् ॥ आज्येन वा प्रचरेत् ॥ "क्षिप्रसंस्कारतममाज्यं" ब्रुवते ॥**

अपोऽभ्यवहृत्य = जलेक्षिप्त्वा ॥ अर्धदग्धेऽपि मिन्दाहुती होतव्ये एव । आज्येनेति - आज्येन वा कर्म कुर्यात् ॥ चरुप्रतिनिधी

करणे आज्यस्य क्षिप्रसंस्कार्यत्वं निदानम् ॥ पुनश्चर्वन्तरकरणे महान् कालो व्यतीयात् । तेन कर्मणः समयात्ययः स्यात् ॥ ११ ॥

**१२ मिन्दाहुती व्याहृतीश्च हुत्वा मनस्वतीं जुहुयात् सैव ततः प्रायश्चित्तिः ॥**

अनया चरुनाशादिदोषः शाम्यति ॥ १२ ॥

**१३ अथ यदीध्माधानात्पुरो बहिःपरिधि अङ्गारा अभिपर्यावर्तेरन् चतुर्दिक्षु ब्राह्मणोक्तप्रायश्चित्तं कृत्वा "इमं जीवेभ्यः ÷ इत्येतया स्रुवाहुतिं जुहुयात् ॥**

पुरः = पूर्वं, कस्मात् ? इध्माधानात् = अग्नौ पञ्चदशेध्मप्रक्षेपात् , बहिः परिधि = परिधेर्बहिः । चतुर्दिक्षु = कस्यांचिद्दिशि । अभिपर्यावर्तेरन् = समन्ताद्वा पतेयुः ॥ ब्राह्मणेन "इष्ट्वा वसीयान् भवति ,, इत्येतेनोक्तं मनोज्योतिरिति हुत्वा ॥ ततः इमं जीवेभ्य इति च ॥ १३ ॥

**१४ सर्वत्र प्रधानकर्मण्यन्तरिते विपर्यासे च " त्वन्नो अग्ने ÷ " सत्वन्नो अग्ने ÷ इति द्वाभ्यां जुहुयात् ॥**

अङ्गकर्मणा व्यवहारादिना वा प्रधानकर्मणो व्यवधाने । प्रधान कर्मणोः सहानुष्ठेययोः केनापि कारणेन व्यवधाने विपर्यासे वा ॥१४॥

**१५ सर्वत्र वितते यज्ञकर्मणि आज्यस्थाली चरुस्थाली वोद्धृता, वेपिता, स्पन्दिता, भिन्ना वा संसर्पणे चापि प्रसिद्धं प्रायश्चित्तम् ॥**

" अनाज्ञातं ÷ पुरुषसम्मित ÷ इति द्वाभ्यां हवनं पूर्वं अनाम्नातोक्तम् ॥ अथवा नवमखण्डे प्रोक्तं, ततम्म आपो, यत्पाकत्रा, मनस्वती, मिन्दाहुती, हाव्याहृतयो मव्याहृतयश्चेति प्रायश्चित्तं, तत्र कर्मविशेषविपार्यासार्थमुक्तमत्र तु पात्रस्थानविपर्यासादावतिदिष्टम् ॥ विज्ञायते च –

" उद्धृते तु कुलं हन्यात् वेपिते नश्यति प्रजाः ॥

**भिन्ने संसर्पणे चापि यजमानः प्रमीयते ॥ इति ॥**

उद्धृते इति आज्यस्थाल्यादावित्यादिः । बर्हिषः तदुद्धरणमित्यार्थिकम् ॥ वेपिते इत्यादौ पात्रे इति शेषः ॥ १५ ॥

**१६ सर्वत्र मृण्मयस्थालीं भग्नामपोह्य, अन्यदाहरेत् — "भूमिर्भूमिमगान्माता ÷ इति ॥**

अन्यत् = अन्याम् ॥ मृण्मयस्थालीं = आज्य – चरु – प्रोक्षण्यादिपात्रीम् ॥ १६ ॥

**१७ अन्यदाहरति॰ "घर्मोदेवा॰अप्येतु„ इति । अथ "ब्रह्मप्रतिष्ठामनसः ÷ इति प्रतिष्ठाप्य, एतयैव जुहुयात् ॥**

अन्याहरणानन्तरं कृत्यमाह — अथेति । एतयैव = ब्रह्मप्रतिष्ठेत्येतया ॥ १७ ॥

**१८ होमकालेऽङ्गारा यदि बहिः व्युच्चरेयुः तदा तानुद्वास्य, बर्हिषदं कृत्वा, प्रभूतेन सर्पिषाऽवसिच्याभिमन्त्रयते — "किमुत्पतसि किमुत्प्रोष्ठा ÷ इति ॥**

अङ्गाराः = आरूढाग्नयः ॥ बहिः = परिस्तरणात् ॥ उद्वास्य = निर्वाप्य । बर्हिषदं = बर्हिषिस्थापनं । सर्पिषासेचनमभिमन्त्रणं च, अभिमन्त्रणं = स्पृष्ट्वा जपः ॥ १८ ॥

**१९ ब्रह्मणे वरं दत्वा, "त्वमग्ने व्रतपा असि ÷, प्रजापते नत्वत् ÷ इत्येताभ्यां, मिन्दाहुती व्याहृतीश्च हुत्वा प्रचरेत् ।**

प्रचरेत् = शेषकर्म कुर्यात् ॥ वरशब्दः गोरपरपर्यायः ॥ १९ ॥

**२० "यद्वो देवा अति ÷ "यत्पाकत्रा ÷ इत्येताभ्यां वा जुहुयात् ॥**

पूर्वसूत्रोक्ताहुतिभिर्विकल्पः ॥ २० ॥

**॥ इति चतुर्थप्रश्ने एकादशः खण्डः ॥**

## ❋ अथ द्वादशः खण्डः ❋

### ( २२ नानाविधप्रायश्चित्तानि )

**१ अथ गृहमेधिनः ब्रह्मचारिणश्चानुगतेऽग्नौ, कालाति-**

क्रमणे होमयोः, दर्शपूर्णमासयोश्च, आग्रयणेनानिष्ट्वा नवान्नप्राशने, अवधूत - हीन - मन्त्रादिकर्मणां करणे, अकृतसीमन्तायां भार्यायां प्रसूतायां, स्त्रीषु गोषुवा यमल जनने, रजस्वलाभिगमने, पतितसम्भाषणे, दिवामैथुने, शूद्राभिगमने, स्वप्ने रेतः स्कन्दने, उदके मूत्रपुरीषकरणे, कुमारस्य जातस्याऽकृते संस्कारे, अग्न्योर्मिश्रणे, देवता विपर्यासे, मन्त्रविपर्यासे, तन्त्रविपर्यासे, कर्मविपर्यासे, ब्रह्मचारिणश्च व्रतविपर्यासे, कमण्डल्वधारणे, मेखलोप वीतानाच्छादने, कृष्णाजिनस्याधारणे, दण्डभङ्गे, सन्ध्या लोपे, अग्निकार्यलोपे, उदकुम्भलोपे, स्वाध्यायलोपे, भिक्षा चरणलोपे, शुश्रूषालोपे, एतेष्वन्येषु अनाम्नातेषु प्रायश्चित्तं॥

अत्र नानाविधापराधानां कर्माङ्गानां तद्भिन्नानां च प्रायश्चित्त-मुच्यते ।। अनुगते = विनष्टे । होमयोः = औपासनाग्निकार्ययोः । दर्शपूर्णमासयोश्च, एतदुभयं कालातिक्रमणे अन्वेति ।। अवधूतः = क्रमरहितः, हीनः = आभासात्मकश्च यो मन्त्रः, आदिपदेन तन्त्र-यन्त्रादि गृह्यते, तद्युक्तकर्मणां करणे । अग्न्योः = विभिन्नकर्तृक कर्माऽग्न्योः मिश्रणे = परस्परसङ्करे । व्रतविपर्यासे - इत्यादिनि-मित्तानि ब्रह्मचारिणामेव । अवशिष्टमुभयोरपि यथासम्भवं योज्य-म् ।। शुश्रूषा गुरोः ।। प्रायश्चित्तमिति जुहुयादित्यनेनान्वयः ।

"पाहिनो अग्न एनसे स्वाहा ÷ इति पञ्चभिः । पुर-स्ताच्चोपरिष्टाच्च व्याहृतिभिः ।। पाहित्रयोदशहोमं सर्वत्र कर्मान्ते जुहुयात् ।।

आदौ व्याहृतिचतुष्टयं मध्ये पाहिन ÷ इतिपञ्च, पुनर्व्याहृतीः इति त्रयोदश । अत एव "पाहि त्रयोदशेति ,, छत्रिन्यायेन संज्ञा ।। अत्र पाहिपञ्चके स्वाहान्त एव मन्त्रः । अतः पुनः स्वाहाकारो नान्ते होमे योजनीयः ।। वेदमन्त्रेषु सर्वत्रायमेव न्यायः ।। अन्यत्र

स्वाहान्तेऽपि मन्त्रे होमादौ स्वाहाकारान्तरं योजयेत् ॥ इदं आदिगत ओङ्कारस्यापि ध्येयम् ॥ १ ॥

**२ येन चैवास्य सानुक्रमणं, यथापूर्वकरणं, अविच्छिन्नं सन्ततं भवति ॥**

येन = पाहि त्रयोदशहोमेन अस्य = कर्मण: व्रतस्यवा अन्यस्य वा प्रथमसूत्रोक्तस्य सानुक्रमणं = अनुक्रमणेन = अविपर्यासेन सहत्वं यथापूर्वकरणं = पूर्वं आरब्धानतिक्रमणं, अविच्छिन्नं विच्छित्यादि दोषरहितत्वं च भवति । तथा सन्ततं = सम्यक् ततं = व्याप्तं फलपर्यन्तं च भवति ॥ २ ॥

॥ इति चतुर्थप्रश्ने द्वादशः खण्डः ॥

* अथ त्रयोदशः खण्डः *

**( २३ स्त्रियाऽभ्यनुज्ञातस्य विद्यार्थिगृहस्थस्य ऋतुसंवेशनविच्छेदप्रायश्चित्तम् )**

**१ अथ गृहस्थस्य विद्यार्थिनः स्त्रियाऽभ्यनुज्ञातस्य ऋतु संवेशनविच्छेदप्रायश्चित्तं व्याख्यास्यामः ॥**

"ऋतौ भार्यामुपेयात्," इति विधिबलात् गृहस्थस्य ऋतुकालागमनं दोषः । यदितु स विद्यार्थीसन् गुरुकुलवासी स्त्रिया तावत्कालं अभ्यनुज्ञातः विद्यान्ते गृहमागत्य प्रायश्चित्तं कुर्वीत ॥ तदेव प्रायश्चित्तमुपक्रमते – अथेत्यादिना ॥ १ ॥

**२ वसन्तो ग्रीष्मो वर्षाः शरत् हेमन्तः शिशिर – इति ऋतुकालमुक्त्वा, ब्राह्मणेभ्यो निवेद्य, द्वादशरात्रं पराकं चरित्वा, चीर्णे व्रतेऽथ प्रदोषे देवयजनमुदानयति ॥**

वसन्तः इत्यादि यावन्तं कालं ऋतुविच्छेदः कृतः, तावन्तं ब्राह्मणेभ्यो निवेद्य प्रायश्चित्तानुज्ञां लब्ध्वा पराकं = तन्नाम-कृच्छ्रं कुर्यात् तच्च द्वादशरात्रं यावत् ॥ ततः परं प्रदोषसमयेऽग्निमुपसमाधाय तत्र पत्नीं नयति ॥ परं प्राणयात्रानिर्वाहक्षमं पिण्याक– आचाम – तक्र – जल – सक्तुषु अन्यतमं ग्राह्यम् ॥ पिण्याकः =

तिलपिण्डः ॥ आचामः = ओदनस्रावः, मण्डमिति यावत् ॥२॥

३ ब्राह्मणानन्नेन परिविष्य पुण्याहं - स्वस्ति - ऋद्धि मिति वाचयित्वा, देवयजनोल्लेखनप्रभृत्याग्निमुखात् - कृत्वा, पक्वाज्जुहोति - "यस्त्वा हृदा कीरिणा ÷ "यस्मै त्व॑सुकृते ÷ इति द्वाभ्याम् ॥

४ अथाज्याहुतीरुपजुहोति – "मधुश्चस्वाहा, माधवश्च स्वाहेति त्रयोदशभिः ॥

५ स्विष्टकृत्प्रभृति सिद्धम् ॥

६ अपरेणाग्निं आज्यशेषं पक्वशेषं चोभौ जायापती प्राश्नीयाताम् – "तत्सवितुर्वरेण्यं ÷ इति ॥

७ प्राश्य अप आचम्य जठरमभिमृशति – यत इन्द्र ÷ स्वस्तिदा ÷ इति द्वाभ्याम् ॥

पत्नीतु तूष्णीं प्राश्नीयात्, त्रिराचामेत्, जठरमृभिभृशेच्च ॥ ७ ॥

८ यं कामं कामयते तं मनसाध्यायेत् ॥

यं कामं = काम्यं पुत्रं ऋषिकल्पं भ्रूणादिकं वा कामयते = काम यतः । ध्यायेत् = ध्यायेताम् ॥ ऋतुसंवेशनकाले यादृशीं भावनां कुरुतः, तादृशं पुत्रं लभेते इति शास्त्रम् ॥ युक्तं चैतत् – रेतसः सेककाले मातापित्रोः मनसि उद्भूतः तज्जन्यः सूक्ष्मः संस्कारः मनोजन्ये रेतसि प्रविशति – इति वैज्ञानिकम् ॥ ८ ॥

९ ऋतुसंवेशनविच्छित्तिप्रायश्चित्तं व्याख्यातम् ॥

अन्यदापि केनापि कारणेन ऋतुसंवेशनविच्छेदेऽपि एतदेव प्रायश्चित्तमिति स्वाभिप्रायं व्यञ्जयन्नाह – ऋतु संवेशनेति ॥ ९ ॥

॥ इति चतुर्थप्रश्ने त्रयोदशः खण्डः ॥

॥ प्रायश्चित्ताभिधानः चतुर्थप्रश्नः समाप्तः ॥

॥ श्रीरस्तु ॥

॥ व्याख्यातुः देशकालादि ॥

अस्ति श्रीसह्यसानौ लवणजलनिधेः प्राक्तटे भारतेऽस्मिन् ।
गोकर्णाख्यं विशालं शिवमयमहसा मण्डलं पूतभागम् ॥
तस्मादागस्त्यकाष्ठास्वनतिपरिसरे राजते कवर्यभिख्यः ।
सम्पन्नो ह्यग्रहारः सकलगुणगणालङ्कृतैः पण्डितौघैः ॥ १ ॥

आसीत्तत्राग्निहोत्री विबुधकुलवरो वेदवेदाङ्गसूरिः ।
श्रीकण्ठस्यावतार - प्रथितशुभयशाः कण्ठभूषाक्षमालः ॥
नाम्ना लोके प्रसिद्धः परमपदपुरालङ्कृतश्चेश्वरो यः ।
तत्पुत्रः श्चान्तिमोऽभूत् परम - इति पितुश्चाधिकः सर्वधर्मैः ॥ २ ॥

तस्माद्भवानीजठराब्धिरत्नं सूरीत्युपाह्वः किल रामचन्द्रः ॥
श्रीदेवतापादसरोजयुग्मविन्यस्तहस्ताञ्चितमूर्धदेशः ॥ ३ ॥

गुरोरधीतस्वहितद्वितीयवेदोऽखिलाङ्गैश्च सग्रं, समन्तात् ॥
गौरं यशः सान्ततिकं दधानः सदा मुदा शिष्यवितीर्णविद्यः ॥ ४ ॥

नाहं वैदिकमन्त्रतन्त्रविदुषां संसत्प्रगण्याग्रणीः ।
नो वा कल्पविदां प्रयोगचतुराणां वा न दौरंधरः ॥
किं त्वेषां परिचर्यया समधिगंतास्मि स्वशाखासु तत् ।
सूत्रे चाधिगतं नमामि विदुषः पूर्वतनान् तान्गुरून् ॥ ५ ॥

विलोक्य बौधायनकल्पगामिनामेतावता मुद्रितपुस्तकेषु ॥
न्यूनत्वमंतःपरितप्यमानसो ग्रन्थाननेकान् लिखितानयोजयम् ॥६॥

तेन बौधायने गृह्ये कृता सञ्जीविनी मुदा ॥
शाके मधावभूत्पूर्णा रामखाङ्कुरसामिते (१९०३) ॥ ७ ॥

— समाप्तः प्रथमो भागः —

# परिशिष्टम् १

## बौ-गृ सूत्रे १३६ पुटे ६४ सूत्रम्

पुरुषसूक्तं सोमोत्पत्ति वार्षदर्भी इतिहासं चरणव्यूहं चेति खिलपञ्चकम् ॥

### सूत्रस्यास्य अन्योप्यर्थः प्रदर्श्यते ।

१ पुरुषसूक्तन्तु प्रसिद्धमेव ॥

२ सोमोत्पत्तिः स्फुटं लिख्यते - हरिः ॐ ऋषय ऊचुः – कौतूहलसमुत्पन्ना देवता ऋषिभिः सह। संशयं परिपृच्छन्ति व्यासं धर्मार्थकोविदम् ॥ कथं वा क्षीयते सोमः क्षीणो वा वर्धते कथम् ॥ इमं प्रश्नं महाभाग ब्रूहि सर्वमशेषतः ॥ व्यास उवाच-शृण्वन्तु देवताः सर्वा यदर्थमिह चागताः ॥ तदहꣳसम्प्रवक्ष्यामि सोमस्य गतिमुत्तमाम् ॥ अग्नौ हुतं च दत्तं च सर्वꣳ सोमगतं भवेत् ॥ तत्र सोमः समुत्पन्नः शीतांशुर्हिमलक्षणः॥ अष्टाशीति सहस्राणि विस्तीर्णो योजनानि तु ॥ प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैवतु ॥ षोडशीति कलाप्यत्र इत्येकोऽपि[1] विधिर्भवेत् ॥ तं च सोमं पपुर्देवा पर्यायेणानुपूर्वशः ॥ प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः ॥ विश्वेदेवास्तृतीयान्तु चतुर्थीꣳ सलिलाधिपः। पञ्चमीन्तु वषट्कारः षष्ठीं पिबति वासवः ॥ सप्तमीं ऋषयो दिव्या अष्टमीमजएकपात् ॥ नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् ॥ दशमीं पिबते वायुः पिबत्येकादशीमुमा ॥ द्वादशीं पितरः सर्वे समं प्राश्नन्ति वै [2]कलाम् ॥ त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ॥ चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः ॥ निपीतकलावशेषश्चंन्द्रमा न प्रकाशते । कलाषोडशिकायान्तु अपः प्रविशते सदा ॥अमायान्तु सदा सोमः ओषधीः प्रतिपद्यते ॥ तमोषधिगतं गावः पिबन्त्यम्बुगतं च यत् ॥ तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः। हुतमग्निषु यज्ञेषु पुनराप्यायते शशी ॥ दिने दिने कलावृद्धिः पौर्णमास्यान्तु पूर्णता ॥

नवो नवो भवति जायमानोह्नां केतुरुषसामेत्यग्रे ॥ भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरति दीर्घमायुः ॥

---

१ गतिर्भवेत् ॥ २ भागशः ॥

त्रिमुहूर्तं वसेदर्के त्रिमुहूर्तं जले वसेत् ।। त्रिमुहूर्तं वसेद्गोषु त्रिमुहूर्तं वनस्पतौ ।। वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् ।। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ।। वनस्पतिगते सोमेऽनडुहो यस्तु वाहयेत् ।। नाश्नन्ति पितरस्तस्य दशवर्षाणि पंच च ।। वनस्पतिगते सोमे मन्थानं यस्तु कारयेत् । गावस्तस्य प्रणश्यन्ति चिरकालमुपस्थिताः ।। वनस्पतिगते सोमे यच्च खादति गौस्तृणम् ।। तस्य दुग्धेन सम्भूतं दौहित्रं[१] घृतमुच्यते ।। द्वौ वत्सौ यत्र दुह्येते तयोर्माता च दुह्यति ।। तद्घृतं मध्विति प्रोक्तं अमधुर्माक्षिकं भवेत् ।। वनस्पतिगते सोमे परान्नं यस्तु भुञ्जति ।। तस्य मास[२]कृतं पुण्यं दातारमधिगच्छति ।। वनस्पतिगते सोमे स्त्रियं वा योऽधिगच्छति ।। स्वर्गस्थाः पितरस्तस्य च्यवन्ते नात्र संशयः ।। वनस्पतिगते सोमे पत्रच्छेदं करोति यः । पत्रे पत्रे विजानीयाद् भ्रूणहत्याऽधिकं भवेत् ।। वनस्पतिगते सोमे यः कुर्याद्दन्तधावनम् ।। चन्द्रमा भक्षितस्तस्य पितॄꣳश्च ब्रह्मघातकः ।। य इमाꣳसोमोत्पत्तिं गर्भिणीꣳ श्रावयेत्स्त्रियम् । ऋषभं जनयेत्पुत्रꣳसर्वज्ञं वेदपारगम् ।। य इमाꣳ सोमोत्पत्तिꣳश्राद्धकाले सदा पठेत् ।। तदन्नममृतं भूत्वा पितॄणां दत्तमक्षयम् ।। य इमाꣳ सोमोत्पत्तिं पर्वकाले सदा पठेत् ।। सर्वान्कामानवाप्नोति श्री सोमलोकꣳ सगच्छति । श्री सोमलोकꣳ सगच्छत्यों इत्युपनिषत् ।।

शुक्ले देवान् पितॄन्कृष्णे तर्पयेत्यमृतेन यः । यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ।। नवो नवोऽसि मासान्ते जायमानः पुनः पुनः ।। आप्यायस्व समेत्येवं सोमराज नमो नमः ।।

ॐ सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुस्तोमआत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियंपुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम ।। सुपर्णोऽसि गरुत्मान्दिवं गच्छ सुवः पत ।। ॐ शान्तिः शान्तिः शान्तिः ।।

इति सोमोत्पत्तिः

---

१ दौहित्रमितिकीर्तितम् ।। २ तस्य होमकृतं पुण्यं ।।

३ वार्षदर्भी कथा. म. भा. अरण्यपर्व. १९६ अध्यायः

वैशम्पायन उवाच – भूय एव महाभाग्यं कथ्यतामित्यब्रवीत् पाण्डवः ॥१॥ अथाचष्ट मार्कण्डेयो महाराज वृषदर्भ सेदुकनामानौ राजानौ नीतिमार्गरतावस्त्रोपास्त्रकृतिनौ ॥२॥ सेदुको वृषदर्भस्य बालस्यैव उपांशुव्रतमभ्यजानात् कुप्यमदेयं ब्राह्मणस्य ॥३॥ अथ तं सेदुकं ब्राह्मणः कश्चित् वेदाध्ययनसम्पन्न आशिषं दत्वा गुर्वर्थी भिक्षितवान् ॥४॥ अश्व सहस्रं मे भवान् ददात्विति । तं सेदुको ब्राह्मणमब्रवीत् ॥५॥ नास्ति सम्भवो गुर्वर्थं दातुमिति ॥६॥

स त्वं गच्छ वृषदर्भसकाशम् । राजा परम धर्मज्ञो ब्राह्मण, तं भिक्षस्व । स ते दास्यति तस्यैतदुपांशुव्रतमिति ॥७॥ अथ ब्राह्मणो वृषदर्भसकाशं गत्वा अश्वसहस्रमयाचत् । स राजा तं कशेनाताडयत् ।८। तं ब्राह्मणोऽब्रवीत् । किंहिंस्यनागसं मामिति ॥९॥ एवमुक्त्वा तं शपन्तं राजाऽऽह । विप्र किं यो न ददाति तुभ्यमुताहोस्वित् ब्राह्मण्यमेतत् ॥१०॥

ब्राह्मण उवाच–

राजाधिराज तव समीपं सेदुकेन प्रेषितो भिक्षितुमागतः । तेनानुशिष्टेन मया त्वं भिक्षितोसि ॥११॥ राजोवाच । पूर्वाह्णे ते दास्यामि योऽद्य बलिरागमिष्यति । यो हन्यते कशया कथं मोघं क्षेपणं तस्य स्यात् ॥१२॥ इत्युक्त्वा ब्राह्मणाय दैवसिकामुत्पत्तिं प्रादात् । अधिकस्याश्वसहस्रस्य मूल्यमेवादादिति ॥१३॥ इति वार्षदर्भी कथा ॥

४ अथ इतिहासः ॥

हरिः ॐ वृषादर्विकुल७ हवै शिबिकुलं बभूव । तस्यायमितिहासः कुलविद्या बभूव । तद्योहस्म इममधीते । सहस्म राजा भवति । स किञ्चित्प्राप्यान्तर्हितः । सोऽब्रवीत् । योमामितिहासं ग्राहयेत् । वरमस्मै दद्यामिति ॥१॥

ततो ब्राह्मणः संयोग७ संयुयुजे । तमादित्यात्पुरुषो भास्करवर्णो निष्क्रम्य । स एनं ग्राहयांचकार । तमपृच्छत्कोऽसीति । वै वृषादर्विरिति । तस्माद्य इममितिहासमधीते । आदित्यलोकोऽस्य कामचारो

भवति । तस्माद्य इममितिहासं उपनीतो माणवको गृह्णीयात् । गृहीत्वाथ च ब्राह्मणांच्छ्रावयेत् । मेधावीभवेत् । वर्षशतंचजीवेत् ॥ २ ॥

षडङ्गं च वेदमवाप्नुयात् । तस्माद्य इतिहासं पठन् पितृभ्य उदकाञ्जलिं दद्यात् । अपूपकूला नद्यः सर्पिः पायसकर्दमा उपतिष्ठेरन् । तस्माद्य इममितिहासं पठन् पितृभ्यः श्राद्धं दद्यात् । तद्यथा स्थूलया गयाश्राद्धं कृतं भवेत् । स्वधा सहपितॄणामेवमस्य पितॄणामा[१]नन्त्या तृप्तिर्भवति य एवं वेद ॥ ३ ॥

सोऽयमितिहासः । धन्यः पुण्यः । पुत्रियः पशव्यः । आयुष्यः स्वर्ग्यः । सार्वकालिक सर्वं भयप्रमोक्षणः । नाधि[२]भ्यो भयं भवति । न चोरेभ्यो न रक्षोभ्यः । नाध्वनि प्रमीयते । नाग्नौ प्रमीयते । नान पत्यः प्रमीयते ॥ ४ ॥

सायं प्रयुञ्जानो दिवसकृतं पापं नाशयति । प्रातः प्रयुञ्जानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानो पापोऽपापो भवति । पादभागो पश्रोतॄणामनसूयताम् । पापश्चापाक्रामति ॥ ५ ॥

एकं शतं चान्ये साधव आगमाः । एतावती परिभाषा । अत ऊर्ध्वं विद्यात् । जिह्वा रसं विजानाति । हृदयं वेद यत्प्रियम् । चक्षुर्दृष्टः साक्षिभागः । मनसा साधु पश्यति । मनसा वाचं नयति । चक्षुषा मीयते जगत् । भूतस्य कर्णौ श्रोतारौ । अन्नं प्राणेन सम्मितम् । अन्नं प्राणो वा वृषादर्वी । पर्जन्यदत्तमिन्महत् । अग्निश्च हव्यवाहनः ॥ ६ ॥

तदृतं गाव इद्धविः । वित्तं बन्धुः । प्रजातन्तुः । कर्मरूपं ग्रहः सखा । प्रज्ञा प्रतिष्ठा तन्तूनाम् । इष्टापूर्तं परायणम् । सत्ये वदन्त्यमृतमिद्वदन्ति । क्षीरं पिबन्ति मधु ते पिबन्ति । सोमं पिबन्त्यमृतेन सार्धम् मृत्योः परस्तादमृता भवन्ति ॥ ७ ॥

ये ब्राह्मणा ब्रह्मचर्यं चरन्ति । अथो खल्वाहुः । वेदसम्मितोयमितिहासः । धर्मं चरति नाधर्मम् । सत्यं वदति नानृतम् । दीर्घं पश्यति मा ह्रस्वम् । परं पश्यति । माऽपरम् । ऋचो ह यो वेद

---

१ मनन्त्या । २ नाहिभ्यो ।

स वेद देवान् । यजूंषि यो वेद स वेद यज्ञम् । सामानि यो वेद स वेद सर्वम् ॥ ८ ॥

यो मानसं वेद स वेद ब्रह्म । यः क्रोद्धव्ये न क्रुद्धस्तिष्ठति । योऽति वाचं नयति । योऽतिवाचंश्च तीक्ष्णति । सवै स[1]र्वो द्विजः खलु । मानसं वेदेति स नः श्रुतम् । तपोवधिः परमा ब्राह्मणस्य । श्रद्धा माता । पितरंसत्यमाहुः । योग आत्माऽऽचरणमस्य बन्धुः । दमः प्रतिष्ठा विदुषो न भूमिः ॥ ९ ॥

दुःखं जन्म जरा दुःखम् । दुःखो मृत्युः पुनःपुनः । संसार मण्डलं दुःखं पच्यन्ते यत्र जन्तवः । यो ब्राह्मणोऽपापकृत् । मन्त्रकृत् मन्त्र-वित् । यथा तथा स जीवति । ब्रह्मण्यो ब्रह्मविच्छश्वद्ब्रह्मलोके महीयते । तृणानि हीच्छन्ति कुशत्वमेव । वृक्षा यूपत्वं पशवश्च गोत्वम् । सर्वाः प्रजा ब्राह्मणत्वं नरेन्द्र । न ब्राह्मणत्वात्परमस्ति किञ्चित् । शतं हाव शतं चरः । शत चक्रऋजीषिणाम् ॥ १० ॥

शतं ब्रह्म तपस्विनाम् । कूपोऽरण्यस्य तिष्ठति ऋते नापिहितो । गुहा । श्रितेनापिहितो गुहा । श्रुतेनापिहितो गुहा । स्मृतेनापिहितो गुहा । दमेनापिहितो गुहा । शमेनापिहितो गुहा । सत्येनापिहितो गुहा । आत्मनापिहितो गुहा । ब्रह्मणापिहितो गुहा ॥ ११ ॥

ब्रह्मनिधिं मनसा वेदयन्तः । पश्यन्तो गुह्यमपरं परं च । अनध्वगा अध्वसु पारयिष्णवः । ब्राह्मणास्तु सदृशाः सूर्येण । यः श्राद्धानि कुरुते सङ्गतानि । तद्देवयानेन पथा स याति । परिमुक्तं पिप्पलं बन्धनादिव । न सुवर्गाल्लोकाच्यवते श्राद्धमित्रः । यो यज्ञस्य प्रसादतः । तन्तु-र्देवेष्वासतः ॥ १२ ॥

तमाहुतं न क्षीमहि । नावेदविन्मनुते तं बृहन्तम् । सर्वानु भूमा-त्मानं सम्पराये । एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् । तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन ॥ १३ ॥

---

१ सर्वम् ।

अग्निहोत्रं बलीवर्दाः काले चातिथिरागतः । बालाश्च कुलवृद्धाश्च निर्दहन्त्यवमानिताः । सम्भोजनी नाम पिशाचभिक्षा नैषा पितॄन्गच्छति नोत देवान् । इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिवनष्टवत्सा । शूद्रायाऽ सृजते रेतः श्राद्धं भुक्त्वा तु (थ) यो द्विजः । स शूद्रयोनि सञ्छ[1]न्नो रेतसा सिच्यते पितॄन् ॥ १४ ॥

अश्रोत्रियं ब्राह्मणं भोजयानस्य । षोडश श्राद्धानि पितरो न भुञ्जते । ततो निराशाः पितरो भवन्ति । सेन्द्रास्मै देवाः प्रहरन्ति वज्रम् । यावतः पिण्डान् खलु सः प्राश्नाति हविषोऽनृचः । तावतो [2]वीरान् ग्रसति । प्राप्य वैवस्वतं यमम् । दातुर्हस्तं छिन्दन्ति ॥ १५ ॥

जिह्वाग्रमितरस्य च । मन्त्रपूतन्तु यच्छ्राद्धं अमंत्राय प्रयच्छति । राक्षसं भवति श्राद्धम् । युक्तस्तु यदि वै श्राद्धे दैवे वा मांसमुत्सृजेत् । यावन्ति पशुरोमाणि तावन्नरकमश्नु[3]ते । यथेरणे बीजमुप्तं न रोहति । नास्य वप्ता लभते बीजभागम् । एवऽ श्राद्धमप्रतिष्ठितं विनश्यति ॥ १६ ॥

श्राद्धं दत्वा च भुक्त्वा च भारमुद्वहते द्विजः । पितरस्तस्य तन्मासं भवन्ते भारपीडिताः ॥ श्राद्धं दत्वा च भुक्त्वा च अध्वानं योऽधि गच्छति । पितरस्तस्य तन्मासं भवन्ते पांसु भोजनाः ॥ श्राद्धं दत्वा च भुक्त्वाच सङ्गमं यः समाचरेत् । पितरस्तस्य तन्मासं भवन्ते रेत भोजनाः ॥ पुनर्भोजनमध्ययनं भारमध्वान सङ्गमम् । दानं प्रतिग्रहऽ होमऽ श्राद्ध भुक्चाष्ट वर्जयेत् । दन्तधावन ताम्बूलं क्षौराभ्यङ्गं द्विभोजनम् । रत्यौषधि परान्नं च श्राद्धकर्ता विवर्जयेत् । दन्त-धावनमभ्यङ्गं नखकेशनिकृन्तनम् । कर्ता चैव तु पूर्वेद्युर्भोक्ता चैव परेऽनि ॥ १७ ॥

निमन्त्रितेऽध्वानगते श्वानः । पुनर्भुक्त्वा तु वायसः । कर्म करोति यद्गृध्रः । ग्रामसूकरः सङ्गमात् । प्रतिग्रहेण दारिद्र्यं दानं निष्फलमेव च । होमे तु कुष्ठरोगी स्यात् स्वाध्यायी मृत्युमाप्नुयात् । यश्चानृचस्तु भुंक्ते नरकं तस्य विद्धि । ब्रह्मैव वित्तं पुरुषस्य केवलम् । धर्मः

---

१ सञ्छिन्नो । २ शूरान् । ३ नरकमृच्छति ।

स्वधायां चरते ददाति च सत्य७ रसः स्वादुतमो रसानाम् सत्य७ श्रेष्ठं व्याहृतीनां तथैव ॥ १८ ॥

प्रज्ञान७ सप्तमं जीवनानाम् । ब्राह्मणातिक्रमो नास्ति मूर्खे मन्त्र विवर्जिते । ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते । यच्छत७ सहस्राणा७ सहस्र७ श्राद्ध आशयेत् । एकस्मान्मन्त्रवित्पूतः सर्व-मर्हति ब्राह्मणः । ब्राह्मणानां७ शतसहस्राणि भुक्तानि नव पञ्चच । भवन्ति ज्ञायके भुक्त्वा ध्यायके वा न संशयेत् ( श्राद्धेत्वा भोजयेच्छ्राद्धे पुत्रं वापि बहुश्रुतम् । आत्मानं वापि भुञ्जीत न विप्रं वेदवर्जितम् । वेदपूर्णविदं विप्रं द्विभुक्तमपि भोजयेत् ॥ १९ ॥

ब्राह्मणो द्विपदां वरः । चतुष्पदां गौरुत्तमा । लोहानां काञ्चनं वरम् । तिलेषु तैलं दधनीव सर्पिर्यदापः स्रोतस्यरण्योरिवाग्निः । एव-मात्मात्मनि जायते । सत्येनैनं मनसा साधु पश्यति । सत्येनैनं मनसा वाचं नयति । प्राङ्मुखाः सुरा हव्यं पितर[1]ः कव्यमुदङ्मुखाः । प्रतिगृण्हन्ति असम्बाधं अग्निना ब्राह्मणेन च । वेदाध्यायीतु यो विप्रः सततं ब्रह्मणिष्ठितः । साचारः साग्निहोत्री च सोग्निर्वै कव्यवाहनः ॥ २० ॥

विकिरं प्रकिरन्दद्यात् । विकिर७ हवै प्रकिरन् भुञ्जीत । तृप्ति-रूपाणि दर्शयन् । परिश्रिते त्वेव दद्यात् । ह्रीका हि पितरः स्मृताः । क्रव्यादाः पितरः सर्वे तिलज्योतिर्घृतप्रियाः । देशकालपात्रोष्ण शौचेप्साः । कृष्णपक्षक्षयोत्सवाः ॥ २१ ॥

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः । त्रीणि चात्र प्रश७ सन्ति मौनमक्रोधमत्वरम् । दिवसस्याष्टमे भागे यदा मन्दायते रविः । स कालः कुतपो नाम पितॄणां दत्तमक्षयम् । यातुधाना असुरा रक्षा७सि पिशाचाः । एते हरन्ति वै श्राद्धं दैवं यत्र निवर्तते । राक्षसं भवति श्राद्धं दैवं यत्र न हूयते । न तत्र रक्षा न पिशाचा न दैवद्वेषिणो जनाः । पुरस्ताद्देवाः प्रवर्तन्ते पश्चाद्दैवं विसर्जयेत् ॥ २२ ॥

---

१ पितरश्चाप्युदङ्मुखा ।

पक्षैस्तु कुक्कुटो हन्ति निकर्षेण तु सूकरः। आगतागतया श्वानश्चक्षुषा वृषलीपतिः। यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्। सवै दुर्ब्राह्मणो नाम ब्रह्मवादिषु गर्हितः। सर्वकर्म बहिष्कृतः। पितुर्गृहेतु या नारी रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः। वृषली पतिभुक्तानि श्राद्धानि हवीꣳषि च। पितरो न प्रतिगृह्णन्ति दाता स्वर्गं न गच्छति ॥ २३ ॥

अग्रे माहिषकं दृष्ट्वा मध्येतु वृषलीपतिम्। अन्त्ये वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः। महिषीत्युच्यते भार्या भगेनोपस्थितं धनम्। तद्द्रव्यमुपजीवन्ति ते वै माहिषकाः स्मृताः। समर्घं धान्यमुद्धृत्य महर्घं यः प्रयच्छति। सवै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः। श्वित्री कुष्ठी तथा चैव कुनखी श्यामदन्तकः। रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा। अवकीर्णी कुण्डगोलौ सायुधी परदारकः। भृतकाध्यापकः क्लीबः कन्या-दूष्यभिशस्तः। मित्रध्रुक्पिशुनः सोमविक्रयी वेदनिन्दकः। मातापितृ गुरुत्यागी कुण्डाशी वृषलात्मजः। परपूर्वापरस्त्याज्यः शूद्रवच्छ्राद्ध कर्मणि। निराशाः पितरः सर्वे यान्ति देवाः सहर्षिभिः ॥ २४ ॥

यावदुष्णं भवत्यन्नं यावद्भुञ्जन्ति वाग्यताः। पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः। हविर्गुणा न वक्तव्याः पितरो यावदर्पिताः। पितृभिस्तर्पितैः पश्चाद्वक्तव्यꣳ शोभनं हविः। य इ[1]मा देवीमिह वेतु स[2]र्वाम्। सर्वेषु भूतेषु प्रतिष्ठितानाꣳ सति। नैनान्तपन्ति हृदयं हि शोकाः। नापुत्रतानां पशुचोदमाहितुम्। अपाꣳरसो मधुषः सर्पिषश्च ॥ २५ ॥

क्षीरस्य चान्नस्य च सꣳस्कृतस्य च। एते रसानाꣳ सर्सेन श्राद्धं प्राप्नुवन्ति वाग्यता संयुतानाम्। उदेहि सूर्यं वरं वृणीष्वेति। राजोवाच। पञ्चेमानि वरणानि। गौर्मेऽजस्रं दुह्यते। अविर्मेऽजस्रं लूयते। त्विषि-र्मेऽजस्रं पिनष्टि। रथो मे सर्वान्समुद्रान्संयाति। आदित्यवर्णे इमे मणिकुण्डले इति ॥ २६ ॥

---

१ ये इमां। २ सर्वे।

अथो ह्येवैषामेकं वृणीथा इति । ब्राह्मण उवाच । यावत् संवृच्छन्तीति । भार्या॰ समपृच्छत् । अविं गृहाणेति भार्योवाच । पुत्र॰ समपृच्छत् । रथं गृहाणेति पुत्र उवाच । कन्या॰समपृच्छत् । मणिकुण्डले इति कन्योवाच । दासी॰समपृच्छत् । दृषदं गृहाणेति दास्युवाच । अनूपेत्योवाच ॥ २७ ॥

अविं भार्या रथं पुत्रः कन्या तु मणिकुण्डले । दासीदृषदमिच्छति गामहं शिखिसप्तमा[1]मिति । सर्वाण्येवमेवैनं ददामीति होवाच वृषदर्वी । तदिदमितिहासः । ब्रह्मादित्यपुरोगाय । पुरोगः कश्यपाय । कश्यपो भरद्वाजाय । भरद्वाजो बहुभिरनागमाय महाराजाय । ततः प्रच्यवनानां धनपते द्विजः ॥ २८ ॥

ब्राह्मणकुले जातिस्मरो भवति । सप्तजन्म कृतात्पापान्मुच्यतेऽब्जस्तु पर्वभिः । कन्यागते यदा सूर्ये पितरस्तिष्ठन्ति स्वे गृहे । शून्याप्रेतपुरी तत्र यावद्वृश्चिकदर्शनम् । वृश्चिके दर्शनं प्राप्ते निराशाः पितरो गताः । तत्र स्वभवनं यान्ति शापं दत्वा सुदारुणम् । अपुत्रो अपशुश्चैव लोके भवति निन्दितः । रौरवे नरके घोरे यावदाभूतसम्प्लवम् । हा हा हेदं न वाच्यमिति केचित्पितरो वदन्ति ॥ २९ ॥

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् । लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते । गौरीं वा वरयेत्कन्यां गावः पृथ्वीं सरस्वतीम् । अष्टवर्षा भवेत्कन्या नव वर्षातु रोहिणी । दशवर्षा भवेद्गौरी अतऊर्ध्वं रजस्वला ॥ ३० ॥

अनश्नन्जपति । स॰हिताया:[2] फलमवाप्नोति । इत्याह भगवान् ब्रह्मा वृद्धो वसूनि पुरोवाच । पुत्रेभ्यः परमं निधिम् । एतद्गोधनमाचार्याणां मन्त्राश्चैव व्रतानि च नमो नमः, मन्त्राश्चैव व्रतानि च नमो नमः । दिवे दिवे गया तुल्यं भरण्यां गयपञ्चके । दशतुल्यं व्यतीपाते पक्षमध्ये तु विंशतिः । द्वादश्यां शतमित्याहुरमायांतु सहस्रशः इत्युपनिषत् ॥ हरिः ॐ ॥

॥ इतीतिहासः समाप्तः ॥

---

१ शिखिसप्तमे इति । २ स॰हितायां ।

## ॥ अथ चरणव्यूहः ॥

अथातश्चरणव्यूहं व्याख्यास्यामः। तत्र यदुक्तं चातुर्वेद्यम्। चत्वारो वेदा ज्ञाता भवन्ति। ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदश्चेति ॥

तत्र ऋग्वेदस्य सप्तभेदा भवन्ति – Iचर्चाश्रावक, चर्चकश्रावण, पाठ, क्रम, शक्रक्रम, जटाक्रम, दण्डक्रमाश्चेति। चतुः पारायणमेतेषाम्। [1]पञ्च शाखा भवन्ति। आश्वायिनीया सांख्यायिनीया, शाकला, बाष्कला, माण्डूक्याश्चेति। तेषामध्ययनं अध्यायाश्चतुष्षष्टि, मण्डलानि दश। वर्गाणां परिसंख्यातं द्वेसहस्रे षडक्षरे। सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पनम्। दशसप्तसु पठ्यन्ते संख्यातं वै पदक्रमम्। एकं शतं सहस्रं वा द्विपञ्चाशत्सहस्रार्धमेतानि च चतुर्दश। वासिष्ठानामितरेषां पञ्चाशीतिः। क्रम काले तु वेष्टव्यं चतुर्विंशत्सहस्राणि। द्विखण्डानां सहस्राणां द्वात्रिंशत्षोडशान्तराः। त्रिचत्वारि शतसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि। ऋचां दशसहस्राणि ऋचां पञ्चशतानि च। ऋचामशीतिः पादश्चैतत्पारायणमुच्यते। एकां ऋचमेकवर्ग एकश्च नवकस्तथा। द्वौ वर्गौ द्वौ ऋचौ ज्ञेयौ त्रीणि त्रिच शतस्तथा। सहस्रमेकं पञ्चकानां शतमूनविंशतिः। सप्तकानां द्वेच सप्तोत्तरे शते। चतुर्ऋचे त्रीणिशतानि। षट्कानां त्रीण्यष्टषष्टिरष्टकानाम् ॥

यजुर्वेदस्य षडशीतिभेदा भवन्ति। तत्र च वर्गा नाम दशभेदा भवन्ति। चरका, आह्वरकाः, कठाः, प्राच्यकठाः, कपिष्ठिलकठाः, चारायणीयाः, पारायणीयाः, तान्तवेयाः, श्वेताः, श्वेततरा, मैत्रायणीया श्चेति। तेषां मध्ये – मानवा, दुन्दुभाश्चैकेया वाराहा, हारिद्रवेया, वार्तान्तवेयाः श्यामाः श्यामायणीयाश्चेति। तेषामध्ययनमष्टौ यजुः सहस्राण्यधीत्य शाखापारो भवति। तान्येव द्विगुणान्यधीत्य पदपारो भवति। तान्येव त्रिगुणान्यधीत्य क्रमपारोभवति। सषडङ्गान्यधीत्य षडङ्ग विद्भवति। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष मित्यङ्गानि। तत्रप्राच्योदीच्यां निर्ऋत नैर्ऋत्याः ॥

---

१ शाखा. पञ्च भवन्ति। I चर्चाश्रावक, चर्चक श्रवण, पराक्रम, पारक्रम, शशक्रम, शठक्रम, दण्डश्चेति पाठान्तरम् ॥

तत्र वाजसनेया नाम सप्तदशभेदा भवन्ति । जाबाला, बौधेयाः, काण्वा, माध्यन्दिनाः, शाचीयाः, स्थापायनीयाः, कापालाः, पौण्ड्रवत्सा, आवटिकाः, परमावटिकाः, पाराशर्या, वैधेया, वैनेया, औधेया, गालवा, बैजवा[1]पाः, कात्यायनीयाश्चेति । प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्का इत्युपाङ्गानि भवन्ति । उपज्योतिषं साङ्गलक्षणं प्रतिज्ञानुवाक्यः प्रतिपरिसंख्या चरणव्यूहः श्राद्धकल्पः प्रवराध्यायश्च शास्त्रं क्रतुः संख्या अनुगमो यज्ञं पार्श्वकानि हौतृकं पशवो उक्थानि कूर्मं लक्षणमित्यष्टादश परिशिष्टानि भवन्ति । द्वे सहस्रे शतन्यूने मन्त्रो वाजसनेयके । इत्युक्तः परिसंख्या । तमेतत्सकलं सशुक्रियम् । ग्रन्थाश्च परिसंख्यातं ब्राह्मणं च चतुर्गुणम् । आदावारभ्य वेदान्तं ब्रह्म व्याहृति पूर्वकम् । वेदमध्यापयेदेवं होमान्तं च समापयेत् ॥

तत्र तैत्तिरीया नाम द्वौ भेदौ भवन्ति । औख्याः, काण्डिकेयाश्चेति । तत्र काण्डिकेया नाम पञ्च भेदा भवन्ति – आपस्तम्बी, बोधायनी, सत्याषाढी, हिरण्यकेशी, औधेर[2]यी चेति । तत्र कठानां तूपगा[3]य यति वर्ण इति विशेषः । चतुश्चत्वारिंश शत्युपग्रन्थाः । मन्त्र ब्राह्मणयोर्वेदः त्रिगुणं यत्र पठ्यते । यजुर्वेदः स विज्ञेयो अन्ये शाखान्तराः स्मृताः । तेषामध्ययनं प्रवचनीयश्चेति ॥

सामवेदस्य किल[4] सहस्रभेद आसीत् । अनध्यायेष्वधीयानास्ते चक्रेण हताः प्रणष्टाः । शेषान् प्रवक्ष्यामि – आसुरायणीया, वासुरायणीया, वार्तान्तवेयाः प्राञ्ज[5]लि निर्ऋचैस्तु भिदाः । प्राचीनयोग्या नयोग्याश्चेति । तत्र राणायनीयानामष्टभेदा भवन्ति – राणायनीयाः, शाठ्यायनीयाः, शास्त्या, मुद्गलाः, खल्वला, महा खल्वला, लाङ्गला, गौतमा जैमिनीयाश्चेति । तेषामध्ययनं अष्टौ साम सहस्राणि सामानि च चतुर्दश ॥ अष्टौ शतानि दशसप्तसु वालखिल्यः ससुवर्णप्रेक्ष्यः । एतत्सामगणं स्मृतम् ॥

अथर्वण वेदस्य नव भेदा भवन्ति । पैप्पला, दान्ताः, प्रदान्ताः, स्तौन्ता, औन्ता, ब्रह्मदा, बलाः, शौनकी देवदर्शी, चरणव्यूहश्चेति ।

---

१ बैजवाः । २ औधेयाः । ३ गायतिवर्णः । ४ खिल । ५ प्राञ्जलीः ।

तेषामध्ययनं पञ्च कल्पानि भवन्ति । नक्षत्र कल्पो, विधान कल्पो, विधि विधान कल्पः, कल्पसंहिता, शान्ति कल्पश्चेति ॥

सर्वेषामेव वेदानामुपवेदा भवन्ति । ऋग्वेदस्यायुर्वेद उपवेदः । यजुर्वेदस्य धनुर्वेद उपवेदः । साम वेदस्य गान्धर्व वेद उपवेदः । अथर्वण वेदस्य शास्त्र शस्त्राणि भवन्ति ॥

ऋग्वेदस्यात्रेयसगोत्रं ब्रह्मदैवत्यं गायत्रं छन्दः । यजुर्वेदस्य भारद्वाज सगोत्रं रुद्रदैवत्यं त्रैष्टुभं छन्दः । सामवेदस्य काश्यपगोत्रं विष्णुदैवत्यं जागतं छन्दः । अथर्वणवेदस्य बैजानसगोत्रमिन्द्रदैवत्यमानुष्टुभं छन्दः ।

ऋग्वेदो रुरुवर्णः पद्मपत्रायताक्षः सुविभक्त ग्रीवः कुञ्चितकेशश्मश्रुः प्रमाणेन द्विरत्निमात्रः । यजुर्वेदः कृशः स्थूलः कपाली ताम्रवर्णः काञ्चन नयन आदित्यवर्णः प्रमाणेन पञ्चारत्निमात्रः । सामवेदो नित्यस्रग्वी शुचाशुचिवासी क्षौमी दान्ती चर्मी दण्डी काञ्चननयनः कृष्णवर्णः प्रमाणेन षडरत्निमात्रः । अथर्वणवेदस्तीक्ष्णश्चण्डः का[1]ककृष्णः कामरूपी क्षुद्रकर्मा एष्वेव साध्यः सर्व विश्वसृजगलमूर्ध्निगालवः स्वदारतुष्टः परस्त्रियाण्यश्च सप्तारत्निमात्रः प्रमाणेन ।

य इदं दैवतं रूपं गोत्रं प्रमाणं छन्दो वर्णं वर्णयति । जन्म जन्मनि वेदपारगो भवति । जन्मजन्मनि वेद धारो भवति । जन्म जन्मनि वेद सारी भवति । अव्रतो व्रती भवति । अप्रीतः सुप्रीतो भवति । अब्रह्मचारी सुब्रह्मचारी भवति । जातिस्मरो जायते । नमः शौनकाय नमः शौनकाय । नमः परमऋषिभ्यो नमः परमऋषिभ्यो नमः परमऋषिभ्यः । इत्युपनिषत् ॥

य इदं चरणव्यूहं गर्भिणीं श्रावयेत्स्त्रियम् ।
पुमांसं जनयेत्पुत्रं सर्वज्ञं वेदपारगम् ॥
य इदं चरणव्यूहं श्राद्धकाले सदा पठेत् ।
तदन्नममृतं भूत्वा पितॄणां दत्तमक्षयम् ॥
य इदं चरणव्यूहं पर्वसु श्रावयेद्द्विजान् ।
धौतपाप्मा शुचिर्विप्रो ब्रह्मभूयाय कल्पते ॥

---

1 कृष्ण कृष्णः ।

योऽधीते चरणव्यूहं स विप्रः पङ्क्तिपावनः ।
तारयत्यखिलान् पूर्वान् पुरुषान्सप्त सप्त च ।।
यो नाम निपुणं वेदं अमृतत्वं तु गच्छति ।
लोकातीतं महाशान्तममृतत्वं च गच्छत्यों नम इति - आहस्म भगवान्व्यासः
पाराशर्यो व्यासः पाराशर्यो व्यासः पाराशर्यः ।। हरिः ॐ ।।

तं वेदशास्त्रपरिनिष्ठित शुद्धबुद्धि
चर्माम्बरं सुरमुनीन्द्रनुतं कवीन्द्रम् ।
कृष्णत्विषं कनकपिङ्गजटाकलापं
व्यासं नमामि शिरसा तिलकं मुनीनाम् ।।

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ।।

अचतुर्वदनो ब्रह्मा
द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुः
भगवान् बादरायणः ।।

**इति चरणव्यूहः समाप्तः ।।**

—o—

# परिशिष्टम् २

केषुचिद्देशेषु प्राणाग्निहोत्रं, सत्यतपोपाख्यानं चेति द्वयमपि श्राद्ध-काले पठ्यते । अतस्तूभयं परिशिष्टे द्वितीये प्रलिख्यते ॥

## १ अथ प्राणाग्निहोत्रम् ।

हरिः ॐ० ॥ अग्निष्वात्ताश्च पितरः प्राचीं रक्षन्तु मे दिशम् ॥ तथा बर्हिषदो याम्यां दिशं रक्षन्तु मे सदा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ॥ सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥ १ ॥

नारदउवाच । विनयेनोपसङ्गम्य ब्रह्माणं नारदोऽब्रवीत् । प्राणाग्नि-होत्रं विधिवद्वद लोकपितामह । ब्रह्मोवाच । प्राणाग्निहोत्रं वक्ष्यामि सर्वयज्ञेषु दुर्लभम् । यज्ज्ञात्वा मुच्यते जन्तुर्जन्ममृत्युजरादिभिः । परिज्ञानेन मुच्यन्ते नराः पातककिल्बिषैः । विधिना भुज्यते येन मुच्यते च ऋणत्रयात् । कुलान्युद्धरते विप्रो नरकादेकविंशतेः । सर्वयज्ञफलप्राप्ति र्ब्रह्मलोकं स गच्छति ॥ २ ॥

मुखे चाहवनीयम् । हृदये गार्हपत्यम् । नाभौ दक्षिणाग्निम् । दक्षिणेनाव सथ्यम् । उत्तरेण सभ्यं चेति । प्राणो होता अपा[1]नोद्गाता । व्यानो ब्रह्मा । उदानोऽध्वर्युः । समानो यजमानः । अहङ्कारः पशुः । ॐकारो यूपः । बुद्धिश्च पत्नी । पृथिवी चारणी । वेदी च पृष्ठचा । लोमानि दर्भाः । जिह्वा च स्रुवौ । मनो विहर्ता ॥ ३ ॥

प्राणाग्निहोत्रस्यात्मा ऋषिः । अन्तरात्मा छन्दः । परमात्मा देवता । सर्वयज्ञफलप्राप्त्यर्थे जपे विनियोगः ।

वैश्वानरोग्निर्ऋषिः । अमृतगायत्रीच्छन्दः । अन्नादो विष्णुर्देवता । प्राणाय स्वाहा हृदयायनमः । अपानाय स्वाहा शिरसेस्वाहा । व्यानाय स्वाहा । शिखायै वषट् । उदानाय स्वाहा कवचाय हुम् । समानाय स्वाहा नेत्रत्रयाय वौषट् । ब्रह्मणे स्वाहा अस्त्राय फट् । स्वात्मस्वरूपं ध्यायेत् — क्षेत्रज्ञसंज्ञितममुं प्रकृतिस्थमाद्यैर्व्याहृत्यसप्त भुवनान्तरमन्यमेकम् । पञ्चा-नलाग्निरशनात्परिदत्तशुद्धिं वाङ्न्यायतर्कितमतर्कितमात्मरूपम् ॥ ४ ॥

---

१ अपान उद्गा इतिपाठान्तरम् ।

उत्तिष्ठ लोहित पिङ्गलाक्षा अग्निवर्णा ऊर्ध्वमुखदीप्तिः परिवर्त यज्ञपुरुषा । अमृते अमृतं जुहोमि अमृतोपस्तरणमसि स्वाहा । हृत्पुण्डरीकमरणीं मनोन्मथन संज्ञिताम् । वायुरज्वा मथेदग्निमात्माध्वर्युः प्रकीर्तितः । तर्जनीमध्यमाङ्गुष्ठैः प्राणस्यैवाहुतिर्भवेत् । मध्यमानामिकाङ्गुष्ठैरपानस्याहुतिर्भवेत् । अनामिककनिष्ठाङ्गुष्ठैर्व्यानस्य तदनन्तरम् । कनिष्ठतर्जन्यङ्गुष्ठैरुदानस्याहुतिं क्षिपेत् । समाने सर्वैरुद्धृत्य सदाचैवाहुतिर्भवेत् । प्राणस्य पूर्वतो ग्राह्या अपानस्य च दक्षिणे । व्यानस्य पश्चिमे प्रोक्ता उदानस्योत्तरे स्मृता । समाने मध्यतो ग्राह्या ऐशान्यां परमात्मनि । अङ्गुष्ठपर्वमात्रान्नं क्षारं च लवणं विना । पूरं पूरकपूर्णान्तं रेचकान्तं विनिर्दिशेत् । स्वाहान्तं प्रणवादिच नाम्ना मन्त्राश्च वायवः । ते ते च ते चतुः षष्टिः षडाहुत्याहुतिर्भवेत् । पुलकैरेव चतुः षष्टिः ॥ ५ ॥

विश्वामित्रऋषिः । गायत्रीच्छन्दः । रुक्मवर्णः क्षुधाग्निरादित्यो देवता । प्राणं द्यौस्तदधिष्ठिताश्च तृप्यन्ताम् । मुखेचाहवनीये कुण्डे प्राणे । हिरण्यवर्णाः शुचयः पावकाः । अग्निं विहृत्यात्मानमुपचर्य । श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । शिवो माविशा प्रदाहाय । ऊर्ध्वं गच्छतु । प्राणाय स्वाहा । प्राणायेदं न मम ॥ ६ ॥

अगस्त्य ऋषिः । उणिक्छन्दः । गोक्षीरवर्णः श्रद्धाग्निः सोमो देवता । अपानो वागग्निः पृथिवी तदधिष्ठिताश्च तृप्यन्ताम् । हृदये गार्हपत्ये कुण्डेऽपाने । गगनवर्णाः शुचयः पावकाः । अग्निं विहृत्यात्मानमुपचर्य । श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । अधो गच्छतु अपानाय स्वाहा अपानायेदं न मम ॥ ७ ॥

वसिष्ठऋषिः : अनुष्टुप्छन्दः । यज्ञवर्णो हुताशनोऽ ग्निरग्निदेवता । व्यानं चक्षुः श्रोत्रं चन्द्रमा दिशस्तदधिष्ठिताश्च तृप्यन्ताम् । नाभावन्वाहार्ये कुण्डे व्याने । रक्तवर्णाः शुचय पावकाः । अग्निं विहृत्यात्मानमुपचर्य । श्रद्धायां व्यानेनिविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । त्रिधो गच्छतु । व्यानाय स्वाहा । व्यानायेदं न मम ॥ ८ ॥

अग्निर्ऋषिः । बृहतीच्छन्दः । इन्द्रगोपकवर्णस्स्पर्शाग्निर्वायुर्देवता । उदानो वागग्निः पृथिवी तदधिष्ठिताश्च तृप्यन्ताम् दक्षिणे पार्श्वे आवसथ्ये कुण्डे उदाने । कृष्णवर्णाः शुचयः पावकाः । अग्निं विहृत्यात्मान-

मुपचर्य । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । ऊर्ध्वं गच्छतु । उदानाय स्वाहा । उदानायेदं न मम ॥ ९ ॥

वामदेवऋषिः । पङ्क्तिश्छन्दः । विद्युद्वर्णो विरूपाग्निः पर्जन्यो देवता । समानं मनः पर्जन्यो विद्युत्तदधिष्ठिताश्च तृप्यन्ताम् । उत्तरपार्श्वे सभ्ये कुण्डे समाने । सुप्रभावर्णाः शुचयः पावकाः । अग्निं विहृत्यात्मानमुपचर्य । श्रद्धाया॰ समाने निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । समानं गच्छतु । समानाय स्वाहा । समानायेदं न मम ॥ १० ॥

हिरण्यगर्भः प्रजापतिर्ऋषिः । देवी गायत्रीच्छन्दः । संहाराग्निः परमात्मा देवता । पञ्चस्वरूपाय पञ्चानल शिखाय । अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् । एवं विधानेन चिन्मात्रज्योतिषि जुहोमि । अयमहमग्निर्वैश्वानरोऽयं वायुर्दैवत्यो दैवीगायत्रीच्छन्दः । सचेत आत्मने ब्रह्मणे स्वाहा । सचेत आत्मने ब्रह्मण इदं न मम ॥ ११ ॥

केचिज्जिह्वाः काम्यमाना केचित्कर्मवशानुगाः । भुञ्जानो वमनोच्छिष्टं शेषं न पात्रे समर्पयेत् । एतज्ज्ञात्वा विधिवद्भुक्त्वा ब्रह्मभूयाय कल्पते । एतद्धि शास्त्रं सद्भावं भोक्तव्यं तु प्रयत्नतः । न कस्य चित्तदाख्येयं पात्रे देयं विजानतेति ॥ १२ ॥

गण्डूषाकरणाद्यस्तु हस्तं प्रक्षाळयेद्द्विजः । हतं दैवं च पित्र्यं च आत्मानं चोपपातकैः । अर्धं पिबति गण्डूषं अर्धं त्यजति भूमिषु । देवतीर्थेन तत्तोयं वामभागे विनिक्षिपेत् । प्रीणन्ति पितरः सर्वे ये चान्ये भूमिदेवताः । रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् । अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥ १३ ॥

पवित्रं धारयेद्यस्तु कौशेयं दक्षिणे करे । भुञ्जानस्तु विशेषेण किल्बिषान्नं विशुध्यति । पवित्रग्रन्थिमुत्सृज्य मण्डले भुवि निक्षिपेत् । पात्रेतु निक्षिपेद्यस्तु सविप्रः पङ्क्तिदूषकः । उच्छिष्टोच्छिष्ट संस्पृष्टो शुना शूद्रेण वा द्विजः । उपोष्य रजनीमेकां पञ्चगव्येन शुद्धयति । अनुच्छिष्टेन संस्पृष्टो स्नानमात्राद्विशुध्यति । अथवा जप्यते येन गायत्र्याष्टशतं जपेत् ॥ १४ ॥

एकाहुति प्रदानेन कोटियज्ञफलं लभेत् । पञ्चभिः पञ्चकोटयास्तु अनन्तं तृप्तिदा भवेत् । दातुश्चैव तु यत्पुण्यं भोक्तुश्चैव तु यत्फलम् । तत्फलं लभते सद्यो विष्णुसायुज्यमाप्नुयात् । भोक्ता भोजयिता चैव उभौ तौ स्वर्गगामिनौ । उभौ तौ स्वर्ग गामिनाविति ॥ १५ ॥

इति श्री प्राणाग्निहोत्रे ब्रह्मनारदसंवादे

प्राणाग्निहोत्रविधिः समाप्तः हरिः ॐ ॥

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव नमोनमः ॥ इतिपितृपञ्चकम् ॥

ईशानः पितृरूपेण महादेवो महेश्वरः । प्रीयतां भगवानीशः परमात्मा सदाशिवः ॥ इतीशपञ्चकम् ॥

—०—

## ॥ अथ सत्यतपोपाख्यानम् ॥

॥ गुरवे नमः । हरिः ॐ ॥

हिमवतो ह पादेषूत्तरेषु । पुष्पभद्रा नाम नदी वहति । तस्या ह तीरे । पितृशिला नाम शिलास्ति । न्यग्रोधश्च भद्रवटो नाम । तत्र ह सत्यतपा नाम ऋषिस्तपोऽतप्यत । स समिधो वृश्चन्नङ्गुलमवृश्चत् । तस्या अङ्गुलेर्वृक्णायै भस्मैव चूर्णानिव च व्यसदत् ॥ १ ॥

न लोहितं न मा॰सं न मज्जा । सोऽनादृत्य तत् । समिध एव संवृश्च । यथा स्थानमङ्गुलीं प्रति समधत्त । सा यथा प्राग्वृश्चनात् । एवमेवाभवत् अथ वै तर्हि । तस्मिन्न्यग्रोधे । किन्नरमिथुनं तीर्थ॰ सञ्चाय्यवसत् । तद्ध तदनुदृश्य ॥ २ ॥ विशीर्ष्ण्यानम् । प्रतदेव स॰सदं गत्वा । इन्द्रमुपाधावत् । तद्ध स दृष्ट्वा वानीन्द्रः पृच्छसि । कुतो युवा॰हेमानि लोमानि । उपशिष्टाद्रा इति । तमब्रवीत् । मघव॰स्तीर्थानि समचाष्टेति । सर्वां वै पृथ्वीमनु समचाष्टमितीन्द्रोऽब्रवीत् । अप्यस्ति किञ्चिदद्भुतमिव दृष्टमिति ॥ ३ ॥ अस्तुही इति । शतक्रतुमित्यब्रवीत् । बहूनि वै पृथिव्यामद्भुतानि । अद्भुततमं त्वामेकम् । अन्वभागिति । हिमवत इत्यब्रवीत् । पादेषूत्तरेषु । पुष्पभद्रानाम नदी वहति तस्या ह तीरे ॥ ४ ॥ पितृशिला नाम शिलास्ति । न्यग्रोधश्च

भद्रवटो नाम। तत्र ह सत्यतपो नाम ऋषिस्तपोऽतप्यत। स समिधो वृश्चन्नङ्गुलिमवृश्चत्। तस्या अङ्गुलेर्वृक्णायै। भस्मैव चूर्णानिव च व्यसदत्। न लोहितं न मा७सं नमज्जा। सोऽनादृत्य तत्। समिध एव संवृश्च ॥ ५ ॥ यथास्थानमङ्गुलिं प्रति समधत्त। सायथाप्राग्वृश्चनात्। एवमेवाभूदिति। स इन्द्रो विष्णुमब्रवीत्। विष्णवेहीदं जिज्ञासिष्यावह इति। मृगयुरेवेन्द्रो भवतु इत्यब्रवीत् वराहो विष्णुः स हृदयविद्धो नाम भूत्वा। सशल्यः समक्षमृषेरार्तः प्राद्रवत्। तमेवान्वन्मृगयुः। इषु धन्वी सह जायया च पुत्रैश्च शिशुकैः ॥ ६ ॥ क्षुधार्तैरार्तः प्राद्रवत्। स ऋषिमब्रवीत्। ऋषेऽस्यैवं जनतायै जीवनार्थं वराहाय प्रहार्षम्। तमेवानु धावन्तः। श्रमेण च क्षुधा चातभाम। आच तवाश्रमादन्वेनमविदाम नेतः परम्। यद्येनं न वेत्स्यामि। यं जनताः। क्षुधा मरिष्यन्ति। यदि दृष्टः प्रणो ब्रूहि भगव इति ॥ ७ ॥ तच्छुश्रुवानृषिर्व्यचिकित्सत्। ब्रवाणी मावोचामिति। सोमन्यत। यद्वक्ष्यामि वराहो हनिष्यते। यन्नवक्ष्यामि। बहवः क्षुधा मरिष्यन्ति। त७हैव ध्यानेन खिद्यमानम्। एषा गाथा प्रत्यभात्। द्रष्टुं चक्षुर्निहितं जङ्गमेषु। जिह्वा नु वक्तुम्। मृगयो विधिसृष्टाः। द्रष्टुं चक्षुः निहितं नास्ति जिह्वा। जिह्वैव वक्तुं। जिह्वायै, वक्रियायै द्रष्टुं नास्ति चक्षुरिति।

तस्मै ह प्रीताविन्द्राविष्णू आत्मानमदृश्येताम्। प्रचैनमश७सताम्। सत्यो तप सत्य तपाः। सत्यो तप सत्यतपा इति। वरं वृणीष्वेति। सोऽब्रवीत्। एष मे वरोऽलम्। यद्भगवन्तौ प्रत्यक्षं पश्यामि। यथान्वाहं भगवद्भ्यामाज्ञात इति। तावब्रूताम्। किन्नरमिथुनं वा इहावात्सीत्। तत्तेऽङ्गुलेर्वृश्चनं च। प्रतिसन्धानं च दृष्ट्वा आवाभ्यामवोचत्। त दृतुं देवा वरमर्हन्ति। प्रत्यक्षं देवा मनुष्येभ्यः ॥ १० ॥ वृणीष्वेव वर-मिति। सोऽब्रवीत्। म इदमाख्यानं ब्राह्मणः श्रद्धधानः। पर्वसु ब्राह्म-णांच्छ्राव्याः ॥ ११ ॥ ब्राह्मणैश्च श्रद्धधानैश्च श्रोतव्यम्। दुष्कृतस्याप हत्यै। सुकृतस्य प्रतिष्ठित्यै। नम इन्द्राविणुभ्या७ सत्यतपसेचनमः, नम इन्द्रा विष्णुभ्या७ सत्यतपसेच नमः ॥ ॐनमो मनो जवा अयामान आय-सीमातरत्परम्। दिव७ सुपर्णो गत्वा य सोमं वज्रिण आभरत्। सुपर्णो-सिगरुत्मान् ॐ शान्तिः शान्तिः शान्तिः। हरिः ॐ ॥

इति सत्यतपोपाख्यानम्।

## विशिष्टभूमिकायां – शुद्धिपत्रिका

| अशुद्धं | शुद्धम् | पुटे | पङ्क्तौ |
|---|---|---|---|
| साकल्येनाव | साकल्येनानव | १ | ७ |
| यदा आपद्यत्वे | यद्यप्यद्यत्वे | ,, | ८ |
| मानसस्त | मानसास्त | ,, | ११ |
| अनुसन्धानैर्वा | अनुसन्दधानैर्वा | २ | ९ |
| यथवानु | यथैवानु | ३ | २० |
| विज्ञ नं सम्बो | विज्ञानं न सम्बो | ४ | १४ |
| सामभ्यां | सामगाभ्यां | ५ | १२ |
| अत्रेच | एतच्च | ,, | १३ |
| व्यवस्थता | व्यवस्थया | ७ | २० |
| प्राणीषु: | प्राणैषु: | ८ | २१ |
| प्राणिन्युरिति | प्रणिन्युरिति | ८ | २६ |
| खाख्यान | खाख्यान् | ११ | २ |
| धारवाड | (धारवाड) | १२ | १५ |

—०—

## व्याख्यातृ-परिचये

| | | | |
|---|---|---|---|
| भट्टभिधा: | भट्टाभिधा: | १३ | २३ |
| भिधैया | भिधेया | १४ | १७ |
| ने के | नै के | १६ | ८ |
| खण्डस्यं | खण्डस्थ | १७ | १ |

—०—

# श्री बौधायनगृह्यसूत्रस्य सव्याख्यस्य

## शुद्धिपत्रिका

सूचना = सीसकाक्षरस्य प्राचीनतमतया अनुस्वारचिह्नं सर्वत्र न सम्यग्भातीति मन्ये, अतः सुधियः तादृशस्थलेआवश्यकं अनुस्वारं संयोज्य पठन्तीति विश्वसिमि ॥

| अशुद्धम् | शुद्धम् | पुटे | पङ्क्तौ |
|---|---|---|---|
| गृहगतचुल्यां | अष्टकास्वेकस्यां | ५ | १० |
| ऋध्यतां: | ऋध्यताम् | ८ | १५ |
| अर्हं | अर्हः | ११ | १३ |
| आत्मनाधः | आत्मनोऽधः | १३ | २२ |
| ऽन्नादी | ऽन्नादो | १६ | १९ |
| रूपे | रूपायां | १९ | १० |
| स्वसामर्यादिना | स्वसामर्थ्यादिना–५२ विवाहे वराय। ऋत्विग्भ्यः कर्मणि कर्मणि ॥ | २१ | २ |
| निरूह्य | निरुह्य | २२ | २१ |
| इद्धान् वा | (इद्धान्वा) | २३ | ९ |
| उत्तरपूर्वार्धे | उत्तरार्धपूर्वार्धे | २६ | ११ |
| तथा | तथा कृत्वा | ,, | १३ |
| मदास्थः | मदास्थ | २९ | १९ |
| प्रणीताभ्य | प्रणीताभ्यः | ३२ | २० |
| स्विष्टकृतादीनि | स्विष्टकृदादीनि | ३३ | २३ |
| नास्ति | अस्ति | ३४ | १६ |
| वहतु | वहतुं | ३५ | ७ |
| इत्यन्वय | इत्यनेनान्वयः | ३५ | २० |
| मुञ्चत्वꣳहसः | मुञ्चन्त्वꣳहसः | ३५ | २३ |
| दक्षिणा | दक्षिणो | ३६ | १० |
| दस्थादमृताꣳ | दस्थाममृताꣳ | ३६ | २५ |

| अशुद्धं | शुद्धम् | पुट | पङ्क्तौ |
|---|---|---|---|
| न्यायः | न्याय्यः | ३७ | २२ |
| तत्पत्युश्च | तत्पतेश्च | ४५ | १३ |
| पक्वशेषं | अपक्वशेषं | ५१ | २१ |
| राजेत्याहन्रा | राजेत्याहुर्न्रा | ५४ | २ |
| विष्णु ÷ | विष्णुः ÷ | ५५ | ११ |
| पत्न्यै | पत्नीं | ५६ | ९ |
| काम्यत्बात् | काम्यत्वात् ॥ | ५६ | १० |
| तत्रापि | तत्राप्यस्माभिः | ५७ | २० |
| विशाखे | विशाखो | ६२ | २३ |
| तत्वश्च | तत्वं च | ६३ | ११ |
| आनेये | आग्नेये | ६३ | १८ |
| द्वीर्घा | दीर्घा | ६४ | ४ |
| प्रभाकर | प्रभाकरः | ६४ | १४ |
| इत्येकम् | इत्येवम् । | ६४ | १४ |
| अनुष्टुप् | अनुष्टुक् | ६८ | ६ |
| सह | सह । | ,, | ,, |
| षट्पदा | षट्पदा । | ,, | ८ |
| सच्छन्दा | सछन्दा | ,, | ८ |
| रप्स्यमाणाः | रप्स्यमानाः | ७१ | १० |
| मुर्वाख्य | मूर्वाख्य | ७६ | ३ |
| रोरवं | रौरवं | ७६ | १६ |
| अधाः | अधः | ८२ | १५ |
| प्रीयंतामिति | प्रीयतामिति | ८३ | १९ |
| सावितृ | सवितृ | ८७ | ७ |
| तेजस्त्व | तेजस्वित्व | ८७ | १६ |
| प्रतिषेवणान् | प्रतिषेवणां | ८८ | १७ |
| दिगग्रान् | दिगग्रां | ८८ | १७ |

| अशुद्धं | शुद्धम् | पुट | पङ्क्तौ |
|---|---|---|---|
| वादात्मिक | वादात्मक | ८९ | २३ |
| वध्य७ | वध्य७ हि | ९२ | ६ |
| मुखं हि | मुख७ हि | ९३ | ११ |
| वक्षमाणं | वक्ष्यमाणं | ९५ | ७ |
| ममात्मनः | यमात्मनः | ९८ | १९ |
| गामानु | गामनु | ९८ | २० |
| वैदव्रतै | वेदव्रतै | १०० | २५ |
| क्षीरदीनि | क्षीरादीनि | १०२ | १७ |
| पवणि पवणि | पर्वणि पर्वणि | १०२ | १८ |
| धृवाय | ध्रुवाय | १०९ | ४ |
| धृवक्षितये | ध्रुवक्षितये | १०९ | ५ |
| वायुव्यै | वायव्यै | ११२ | २० |
| स्था मैः | स्थानैः | ११३ | ४ |
| मशेक्यत्वेन | मशक्यत्वेन | ११६ | ९ |
| हुनेत् | आज्ये न हुनेत् | ११६ | ११ |
| मुक्तां | मुक्तं | ११८ | १६ |
| वासन्तिकै | वासन्तिकैः | १२० | १ |
| ग्रैष्मिकान्य | ग्रैष्मिकाण्य | ,, | ६ |
| वार्षिकान्य | वार्षिकाण्य | ,, | ११ |
| शैशिरिकान्य | शैशिरिकाण्य | ,, | २५ |
| तषे | तैषे | १२१ | २२ |
| अविकीर्णि | अवकीर्णि | १२२ | १९ |
| परित्याज्या | परित्यज्या | ,, | २३ |
| निष्कासिता | निष्कासितो | ,, | २५ |
| त्रिः कृत्वः | त्रि कृत्वः | १२३ | २० |
| करिणः | कारिणः | १२४ | २४ |
| वाक्वक्ता | वाग्वक्ता | १२५ | १५ |

| अशुद्धं | शुद्धम् | पुट | पङ्क्तौ |
|---|---|---|---|
| नमनु | नमकानु | १२७ | ११ |
| चनेन | चनेन तथा | १२८ | ६ |
| यद्वा | यद्गवा | ,, | १५ |
| अथ | अप | ,, | १९ |
| महोभ्यः | महेभ्यः | १३१ | ५ |
| णाग्नैः | णाग्रैः | ,, | २० |
| पितृणां | पितॄणां | १३२ | ११ |
| तन्नामनि | तन्नामनी | १३५ | १२ |
| ह्वि | हि | ,, | २२ |
| उपनिषत् ॥ | उपनिषदम् ॥ | १३६ | १८ |
| पिण्ट | पिण्ड | १३८ | १२ |
| शीमन्त्रान् | शीर्मन्त्रान् | १४० | ४ |
| रुपचये | रुपचर्यं | १४१ | २३ |
| तदारण्यै | तदाख्यै | १४४ | ९ |
| उपोषेत् | उपौषेत् | १४५ | १ |
| सूर्थुपोह्वेण | सूर्युपाह्वेण | १४६ | २५ |
| आद्याजुवाक | आद्यानुवाक | १५२ | २ |
| दस्त्रयो | दयस्त्रयो | १५४ | ६ |
| १-४-४६ | १-४-४४ | १५५ | २१ |
| अवभृथः यजूꣳषि | अवभृथयजूꣳषि | ,, | २५ |
| २-४-४९ | १-४-४५ | ,, | २६ |
| षड्विꣳ | षट्त्रिꣳशः | १५६ | १८ |
| वैश्वसृजंमारु | वैश्वसृजमारु | ,, | २५ |
| वाकाः । तथा | वाकाः तैस ४.२.१-१० विष्णोः क्रमोसि.दशानु-वाकाः । तथा | १५७ | २१ |
| ४-३-१-१० | ४-३-१-१२ | ,, | ,, |

| अशुद्धं | शुद्धम् | पुट | पङ्क्तौ |
|---|---|---|---|
| आपान्त्व | अपान्त्वे | १५७ | २१ |
| राश्मिरसि | रश्मिरसि | ,, | २३ |
| ३ - ९ | ३ - १ | १५८ | १७ |
| प्रृथकत्व | पृथकत्व | ,, | २० |
| तिृतीय | तृतीयः | १५९ | शिरसि |
| औपानुवाकां | औपानुवाका | ,, | ४ |
| अनुमत्ये | अनुमत्यै | ,, | १२ |
| न न सन्ति | न सन्ति | ,, | १८ |
| ३. १ – ३ | ३. १. १ – ३ | १६० | १ |
| अग्निर्वा | अग्नयेस्वाहा | ,, | २ |
| अपाद्याः | अपाद्या। | ,, | १२ |
| पीवोऽन्ना७ | पीवो अन्ना७ | ,, | २६ |
| उभयात्मः | उभयात्मकः | १६१ | १४ |
| अत्रपञ्चाश | अत्रैकपञ्चाश | १६२ | ३ |
| हेडनं | हेळनं | १६३ | २० |
| मन्त्रब्राह्मणात्मकाः | मन्त्रात्मका | ,, | २२ |
| तमचारिष | व्रतमचारिष | १६९ | १९ |
| दक्षिणतः | रुत्तरतः | १७० | १९ |
| त्रयोदश | षोडशः | ,, | २५ |
| आज्यं | आज्यं हुत्वा। | १७१ | १७ |
| कृष्णाष्टम्याः | कृष्णाष्टम्योः | १७२ | २७ |
| चक्षु | चक्षूः | १७३ | ५ |
| मानुवाकं | मनुवाकं | १७४ | १८ |
| अरुणकेतुक | आरुणकेतुक | ,, | २१ |
| तत्रोक्तं | तत्रोक्तां | ,, | ,, |
| तच्छकेयं | तदङ्गकं | १७६ | ४ |
| माजयित्वा | मार्जयित्वा | १७९ | १२ |

| अशुद्धं | शुद्धम् | पुट | पङ्क्तौ |
|---|---|---|---|
| हति | इति | १७९ | २२ |
| वृक्षछायायां | वृक्षच्छायायां | १८० | २५ |
| मचै, वा | नचैवा | १८४ | २३ |
| विषयात् | विषयान् | १८५ | ५ |
| सम्यङ्गिरताः | सम्यङ्निरताः | ,, | १२ |
| चरि=य | चारित्र्य | ,, | १७ |
| द्रूढा....यच्छे | द्रूढा । .... यच्चे | १८७ | २० |
| यजुष्कुतं | यजुष्कृतं | १८८ | १२ |
| कुहारादिनेतिशेषन | कुठारादिनेतिशेषः । | ,, | २३ |
| विद्रावणे | विद्रवणे | १९० | ३ |
| गृहे | गृहं | ,, | २५ |
| उपतपत् | उपतपन् | १९१ | १७ |
| समूहात्मरु | समूहात्मक | १९२ | २५ |
| प्रत्यचम् | प्रत्यृचम् | १९४ | १५ |
| ख्यापूर्वः | ख्यात पूर्वः | १९९ | २५ |
| सपार्षतं | सपार्षदं | २०० | १५ |
| नानामभिः | नानामभि | २०१ | २३ |
| इमां रुद्राय | इमा रुद्राय | २०२ | ९ |
| गच्छनति | गच्छन्ति | २०४ | १० |
| बोधायन | बोधायन | २०६ | ५ |
| प्ररोहन्तीः | प्ररोहन्ती | २०७ | ४ |
| गृहितुं | ग्रहीतुं | ,, | ११ |
| भ्रष्ट्राः | भृष्ट्राः | २०८ | २२ |
| [illegible]द्भुल | तद्भुत | २१२ | २३ |
| ष्वेष्वेक | ष्वेक | २१४ | ११ |
| आसंञ्जयति | आसञ्जति | २१५ | १८ |
| पुतः | पुनः | २२४ | १७ |

| अशुद्धं | शुद्धम् | पुट | पङ्क्तौ |
|---|---|---|---|
| सायन | सायण | २२१ | ९ |
| जातवेद | जातवेदो | २३२ | २५ |
| संख्याऽमि | संख्यावि | २३४ | २० |
| आग्न्म | अगन्म | २३५ | १४ |
| अपउपस्पर्शन | अपामुपस्पर्शन | २३८ | ११ |
| मिन्दा-व्याहृती | व्याहृतिमिन्दाहुतीः | २३९ | २१ |
| चे | च. | २४० | ११ |
| पिण्डकारं | पिण्डाकारं | २४१ | ८ |
| अयाश्चाग्नेरि | अयाश्चाग्ने इ | २४५ | २६ |
| हाव्याहृतयो मध्या, | महाव्याहृतयो व्या | २४७ | २३ |
| कर्माङ्गानां | कर्माङ्गाणां | २४९ | १२ |
| दौरंधरः | धौरन्धरः | २५२ | १५ |
| ततू | तत्- | ,, | १६ |

—o—

## व्याख्यात्रा रचिता अन्ये ग्रन्थाः

-अमुद्रिते-

१ श्रीहर्षस्य खण्डनखण्डखाद्यस्य माधुर्यं व्याख्या

२ रसालपुरवर्णनमहाकाव्यम्

— ಮುದ್ರಿತವಾದವುಗಳು —

೧ ಶ್ರೀ ಗಣೇಶಲೀಲಾವೈಭವ

೨ ಶ್ರೀ ಗಣೇಶೋಪಾಸನಾಪ್ರಕಾಶ

೩ ಪ್ರಯೋಗ ರತ್ನಮಾಲಾಪ್ರಕಾಶ

೪ ವ್ಯಾಸತಾತ್ಪರ್ಯನಿರ್ಣಯ

೫ ಧರ್ಮದೀಪ

೬ ಮಧ್ಯಮವ್ಯಾಯೋಗ ( ನಾಟಕ )

೭ ಶ್ರೀಮದ್ಭಗವದ್ಗೀತಾ ಬ್ರಹ್ಮಾನಂದಗಿರಿ ವ್ಯಾಖ್ಯೆಯ ಕನ್ನಡ ಸರಳಾನುವಾದ ( ಅಚ್ಚಿನಲ್ಲಿ )

ಇವೇ ಮುಂತಾದವುಗಳು.